श्री

श्रीमतेरामानन्दायनमः

* श्रीसीतारमणोविजयतेतराम्म् *

श्रीमत्परब्रह्मपरमात्म श्रीरामनामतत्त्वप्रकाशिका

# श्रीरामतापनीयोपनिषद्

## श्रीमद्धरिदासकृत भाष्योपेता

वैष्णवभूषण श्रीमज्जानकीघाट निवासि

पं० श्रीमद्रामवल्लभाशरणेन

संशोधिता—

श्रीसीतारामीय

श्रीमत्सीतारामचरण सरोजचंचरीक

श्रीमन्महान्त रामशोभादासादि

कतिपयवैष्णवप्रवर

महान्तः

## श्रीअयोध्यायाम्म्

श्रीसीतारामुद्रणालये गिरिजादयालुना

मुद्रयित्वा प्रकाशिता

सं० १९८४ वै०

॥ श्रीमतेरामानन्दायनमः ॥

॥ श्रीजानकीवल्लभोजयति ॥

# श्रीरामतापनीयोपनिषद् ।

रामं सर्व गुणोपेतं ज्ञेयं गम्यं गतिं गुरुम् ।
द्विभुजं धनुषोपेतं जानकीरसिकं भजे ॥१॥
जानकींजगदीशानां ब्रह्मरुद्रादि सेविताम् ।
चिद्रूपांद्विभुजां श्यामां भजेहं रामवल्लभाम्॥२॥
यस्य जापं विना रामः कदापि न प्रसीदति ।
भजेताराद्यधिष्ठानंतं ममाद्याश्रयं मनुम् ॥३॥
समस्त निगमाचार्य्यं रामानन्य जनप्रियं ।
स्वयूथनाथं ज्ञानाब्धिं हनुमंतं गुरुं भजे ॥४॥
सार्थतारकोपदेशेनार्थ पंचक वोधकं ।
भजे श्रीरामरूपेण हनुमंतं गुरुं सदा ॥५॥
सीतारामैकशेषोहं सीताराम गतिः सदा ।
श्रीमद्रामैक भोग्योहमितितत्कृपयाविदम् ॥६॥
वस्तुतो रामदासोस्मि हरिदासेति संज्ञकः ।
श्रीरामप्रसादानुगो हनुमान्मेगुरुर्मतः ॥७॥
रामस्सर्वावतारीति ज्ञातं यत्कृपया मया ।

सद्गुरोस्तस्य श्रीराम चरणस्याज्ञयामुदा ॥८॥
श्रीरामश्रुतिगुह्यार्थोऽद्याप्यनुक्तोबुधांतरैः ।
श्रीहनुमत्प्रसादात्समयेदानीं प्रकाश्यते ॥९॥
सूक्ष्मतत्वविचारेहि पुनरुक्तिर्न दोषभाक् ।
मण्यादीनां परीक्षादौयतोदृष्टिर्गुणावहा ॥१०॥
अतः पुनः पुनर्ह्यत्र रामस्य श्रुति संमतम् ।
निदानत्वंप्रकाश्यामि वाक्यैस्तैस्तैस्सयुक्तिकैः ॥११॥

अथैकमेवा द्वितीयं ब्रह्म 'ब्रह्मविदाप्नोतिपरं' सत्यंज्ञान-मनन्तंब्रह्म 'योवेद निहतं गुहायां सोऽश्नुतेसर्वान् कामान्सह ब्रह्मणाविपश्चिता' ब्रह्मवाइदमग्रआसीत् 'ब्रह्मविद्ब्रह्मैवभवति' ब्रह्मैवसन्ब्रह्माप्येति' 'यदासर्वे प्रमुच्यंते कामायेऽस्यहृदिस्थिताः' अथमर्त्योऽमृतोभवत्यत्र ब्रह्मसमश्नुते' 'इत्येवमाद्याः श्रुतयोब्रह्म-शब्दाभिहितमेकमेवचिद्वस्तुनिखिल चराचर कारणं' 'मुक्त जीवप्राप्यश्चेत्युद्घोषयंति' 'तस्य कृत्यायुधपार्षद धामादि वि-शेषा श्रवणात्' 'नारायणः परं ब्रह्म तत्वं नारायणः' 'परस्स-कलंपरं ब्रह्मैवतत्कृष्णः परंब्रह्म' परंब्रह्मपरंधाम पवित्रंपरमंभवान्' 'आत्मैवनृसिंहो ब्रह्मभवती' त्येवमाद्यासु श्रुतिषुस्मृतिषु च ब्रह्मशब्दस्यसाधारण्येनसमस्तभगवद्विग्रह वाचकत्वदर्शनाच्च सामान्यशब्दत्वेननिश्चितस्य तस्य पशुच्छागन्यायेन विशेष प-दार्थेपर्यवसानत्वयोग्यात् कारण वाक्येषुच बहूनां विष्णु नारा-

यण कृष्ण नृसिंहादिविशेषशब्दानां दृश्यमानत्वात् कस्यचि-द्विशेषशब्दस्या भिहितेतस्य[३] पर्यवसानतास्यादित्यादिशंकानि-रासाय श्रीरामस्वरूपरूप नाम गुणलीलाविभूतीनां सर्वोत्कृष्ट त्वप्रकाशनायच 'श्रीरामतापनीयोपनिषत्प्रवृत्तिः कथमत्रोक्त शंकानिरास इतिचेत् अत्रपशुछागन्यायमाश्रित्य तादृशस्य[४] पर ब्रह्मशब्दस्य रामशब्दाभिहितेपर्यवसानत्वेन श्रीरामस्यका-रण वाक्यगत ब्रह्मशब्दवाच्यत्वनिश्चयात् उक्तशंकानिरासः' तथाहिदृष्टांतेयथापशुना यजेतेत्यत्रपशुत्वंनजातिः किंतुलोम-वल्लांगूलादिमत्वं पशुत्वं' 'तस्यगर्दभादिसाधारणयान्तस्याप्या[५] लंभनेप्राप्तेतद्विशेषनिर्द्धारणाय तत्रैवाह' छागोवामंत्र वर्णादिति तथाचतत्रयथाछागेति विशेषशब्दसान्निध्यात्यागपशुः छाग-एवेतिनिश्चीयते 'तथात्राप्युपासकानां कार्य्यार्थं ब्रह्मणोरूप कल्पनेत्यनया श्रुत्यासामान्यतोऽद्वितीय पदविशेषित ब्रह्म-शब्दाभिहितस्य सर्वावतारित्वमुक्तं' ब्रह्मत्वं नामसत्यज्ञाना-दिरूपत्वं' सत्यं ज्ञानमनन्तं ब्रह्मेतिश्रुतेः 'जगज्जन्मादि हेतु-त्वं वा ब्रह्मत्वं' यतोवाइमानिभूतानि जायंते येनजातानि जीवंति यत्प्रयं' त्यभिसंविशंतितद्ब्रह्मेतिश्रुतेः' जन्माद्यस्ययत इतिसूत्राच्चतच्चलक्षणं समस्तभगवद्विग्रहसाधारणंसर्वोपनिष दि नारायणनृसिंह श्रीकृष्णशिवरुद्रादीनामपिसत्यादिरूपत्व

३ ब्रह्म शब्दस्य। ४ सामान्य शब्द त्वेननिश्चि तस्य। ५ तद्वृत्वेसतित दितर वृतित्वं साधारणत्वं तद्वृत्वे तित्वे सति तदितरा वृतित्व

जगत्कारणत्वश्रवणादिति सर्वेषामवतारित्वेप्राप्तेतद्धि जिज्ञापयिष याातत्रैवाह 'रमंतेयोगिनो नंतेसत्यानन्देचिदात्मनि ॥[1] इतिरामपदेनासौ परंब्रह्माभिधीयते' तथैवरामवीजस्थं जगदेतच्चराचरं सीतारामौतन्मयावत्रपूज्यौ जातान्याभ्यांभुवनानि द्विसप्तस्थितानिच प्रहृतान्येवेतिसर्ववाच्य- स्येतिचपरं ब्रह्मरामचन्द्रश्चिदात्मकः इतिच

ॐ योवै श्रीरामचन्द्रस्सभगवान्यत्परं ब्रह्मेतिचतथा चदृष्टांते-यागपशोः छागसान्निध्यात् छागशब्द वाच्यत्वनिश्चयवत्दार्ष्टांतेपिप्रकरणात् इतिरामपदेनासौपरं ब्रह्माभिधीयते इतिरामेति-विशेषशब्दसानिध्याच्च कारण वाचक ब्रह्म शब्दाभिहितः प्रकरणीयोरामएवेतिनिश्चीयते उपक्रमोपसंहारादिलिंगै रपिब्रह्मादिसहस्रान्त हस्तवदशेष भगवदवतारावतारी भूतंयद्द्वितीय ब्रह्मशब्दवाच्यंसत्यानन्दचिदात्मकंपरं तत्वं तस्यैवसच्चिदानन्दार्थक रामपदाभिहितत्वमुपपद्यते श्रुयतेच' तथैवातएव ब्रह्मराम-शब्दयोः पर्य्यायवाचित्योपपत्तेर द्वितीय ब्रम्हशब्दाभिहितं यद्रामपदवाच्यं तस्यैवसर्वावतारित्वंनिष्पद्यते कथंइतिचेत् "चिन्मयेऽस्मिन्निति" चिन्मयत्वे नोपक्रम्य "रमन्तेयोगिनोऽनंतेसत्यानंदे चिदात्मनि इतिरामपदेनासौपरं ब्रह्माभिधीयते" इतितस्यैवोपक्रांतस्यमहाविष्णोः [illegible]स्य ब्रह्मणः रामशब्दाभिधेयत्वं

---

१ इतिरुक्तासिद्धनेसच्चिदानंदार्थकेनरामपदेनासौदाशरथिः परब्रह्म शब्दवाच्यंसच्चिदानंदात्मकं परंतत्वमभिधीयतेइत्यर्थः

रामपदस्यतदभिधायकत्वं तेन परब्रह्मरामपदयोर्वाच्य वाचकत्वं तेनपरब्रह्मशब्दरामशब्दयोः पर्यायत्वंचनिर्दिश्यानंतरं 'चिन्मय-स्याद्वितीयस्यनिष्कलस्याशरीरिणः उपासकानां कार्य्यार्थंब्रह्म-णोरूपकल्पने "त्यारभ्यकल्पितस्यशरीरस्य तस्यसेनादि कल्पने 'त्यन्ताभिः श्रुतिभिस्तदेवोपक्रांतं चिन्मयं रामशब्दाभिहितं पर-ब्रह्मतत्वमनूद्यतदुद्देशेनसर्वावतारित्व विधानात् पुनस्सर्वंह्येतद्ब्रह्म अयमात्मा ब्रह्मेत्यत्र सर्वशब्दसामानाधिकरण्येनात्मपदसामाना-धिकरण्येन ब्रह्मपदंप्रयुज्य "सदारामोहमित्येतत्तत्वतः प्रवदंति-येनतेसंसारिणो नूनंरामएवनसंशय" इत्यत्राहं रामइत्यात्मपद रामपदसामानाधिकरण्येन तेरामएवेतिसर्व शब्दार्थ सूचक बहु-बचनान्तयत्तच्छब्दयोरामशब्दसामानाधिकरण्येन ब्रह्मपदस्थाने रामपदप्रयोगात् अहमों तत्सत्यंतत्परं ब्रह्म "रामचन्द्रश्चिदा-त्मक" इत्यत्ररामशब्द ब्रह्मशब्दयोः पर्याय वाचित्वाभ्यासात् । ॐ योवै श्रीरामचन्द्रः स भगवान् यत्परंब्रह्मेत्यादिचरममंत्रैः श्रीरामस्यैव ब्रह्म विष्णु महाविष्णु नारायण मत्स्यादि रूपितया तच्छब्द वाच्यत्वे न परमपुरुष महादेव महेश्वरादि कारण वाचक वाच्यत्वेन चोपनिषद उपसंहारात् तस्यैव उपक्रम कारण वाक्यगतसर्वावतारित्व बोधकसामान्य शब्दत्वावगत ब्रह्मशब्द वाच्यत्वावगमात् तत्कुतः उपक्रमोपसंहार वाक्ययो-रेकवाक्यतायोग्यतयोपक्रमसंदिग्धस्योपसंहार वाक्यतोनिर्णयात् यथाक्ताः शर्करा उपदधातीत्यत्राकेनाक्ताः घृतेनतैलेनवेतिसंदेहे

आयुर्वै घृतं भवतीति वाक्यशेषतो घृतेनाक्त इतिनिर्णीयतेतथा त्रापि उपक्रम कारण वाक्यगतसर्वरूपित्वबोधक ब्रह्मशब्दाभिहित: कश्चिन्मयेस्मिन्महाविष्णौजाते दशरथेहरौ "इत्यत्रोक्तः" विश्वाधारंमहाविष्णुं नारायणमनामयमित्यत्रोक्तो वा महाविष्णुः हरि र्वा नारायणो वा "इतिरामपदेनासौ परंब्रह्माभिधीयतइत्यत्र रामपदाभिहितो वाउपनिषदन्तर श्रुतः उक्तोनुक्तो वाकश्चिदन्य इतिसंदेहेवाक्यशेषभूतैश्चरममंत्रैः तादृश ब्रह्मशब्दबाच्यः सर्वरूपी श्रीरामएवेतिनिर्णेतव्यं तथाचजैमिनिसूत्रं "संदिग्धंतु वाक्यशेषादिति" "किंचसत्यं ज्ञानमनंतंब्रह्म" "एकमेवाद्वितीयं" "ब्रह्मविद्ब्रह्मैवभवतीति अत्राब्रह्मसमश्नुते" इत्यादि ब्रह्मपरश्रुतीनां रमंतेयोगिनोऽनन्तेसत्यानन्देचिदात्मनि "चिन्मयस्याद्वितीयस्य सदारामोहमित्येतत्तत्वतः प्रवदंतियेन तेसंसारिणो नूनंरामएवनसंशयः मुक्तामांप्राप्नुवंतिते" इत्येवमादि श्रीरामपरश्रुतीनामैक वाक्यतावगमाच्च यथाघटश्चकलशः एकार्थस्याभिधायकः तथा ब्रह्मचरामश्चनूनमेकार्थ वाचकः इत्यगस्त्य वचनाच्चतद्वाच्यः सएवपुनश्चसर्ववाच्यस्यवाचक इति श्रुतं श्रीरामनिष्ठं सर्वशब्दवाच्यमपितस्यसर्वावतारित्वे सत्येवोपपद्यते यदितुसर्वरूपित्ववाचक ब्रह्मशब्दाभिहितः श्रीरामोनस्यात् तदातस्य सर्वशब्दवाच्यतापिनस्यात् नच चरममंत्रोक्तं तस्यसर्वरूपित्वमप्युपपद्येत नचतन्नाम्नः सर्वकारणप्रणवकारणताप्युपपद्येतनापिस्वभूर्ज्योतिर्मयोऽनन्तरूपीत्युक्तं तस्यस्वतःसिद्धत्वे-

सतिप्रणवादि प्रकासकत्वमप्युपपद्येत तस्मादत्रपर ब्रह्मणोरुपक-
ल्पनेत्यवतारित्व वोधकः ब्रह्मशव्दः श्रीरामस्यैव सर्वावतारित्वं-
वोधयतीतिनिश्चयात् बहूनां द्वयोर्वामूल कारणत्वानुपपत्तेः
सर्वशाखाप्रत्यय न्यायेनचछांदोग्याद्युपनिषदन्तरेष्वपिदृष्टः का-
रण वाचकोव्रह्मशव्दः श्रीरामस्यैवसर्वकारणत्वं द्योतयतीत्यव
गम्यते ननुनृसिंहगोपाल वृहन्नारायणोपनिषदाद्यासूपनिषत्सु
'ऋतंसत्यं परंव्रह्मपुरुषंनृकेशरीं' तथात्मैवनृसिंहो व्रह्मभवति
'सच्चिदानन्दरूपाय कृष्णायसकलंपरं व्रह्मैवतत्' इतिनारायणः
परव्रह्मतत्वंनारायणः परः' इत्येवंनृसिंहादिशव्दसामानाधिकर-
णयेनदृष्टोब्रह्मशव्द उक्तन्यायेननृसिंहादिशव्द वाच्येपिपर्य्यव-
सानं तस्यतस्याप्यवतारित्वं वोधयत्वितिचेन्न नह्युपनिषदन्त-
रेषु चिन्मयस्याद्वितीयस्य व्रह्मणोरुपकल्पनेत्यत्राद्वितीयादिवि-
शेषणविशेषितसर्वरुपित्ववोधक व्रह्मशब्द श्रवणवत् विशेष्य-
भूतः सर्वरुपित्व वोधको ब्रह्मशव्दः श्रूयतेयेन तत्रापि पशुछा-
गन्यायः प्रवर्त्तेतकिंतुनृसिंहो वृह्मकृष्णः वृह्मनारायणः परंवृह्म-
त्येवं तत्तद्विशेषणत्वं प्राप्यतत्रत्यप्रातीतिक सिंहत्वमनुष्यत्वज-
लजन्तुत्वादि बुद्धिनिरासपूर्वकंतत्रतत्रवृह्मत्वबुद्धिंदृढयन्तत्तद्वा
च्येपर्यवसितएव अतोनसामान्य शव्दवोधित कारणत्वस्यविशेष-
शव्दवाच्ये पर्य्यवसानाय तत्रतत्र पशुछागन्यायप्रवृत्त्यवकाशः
यदितुविशिष्ट वृह्मशव्दाभिहितस्योपनिषदं तरेपिसर्वावतारित्वं
श्रूयेततदातद्विशेषनिश्चयायतन्निष्ठ कारणत्वस्यतदुपनिषच्छ्रु-

ततस्समाभ्यधिक विशेषशब्दवाच्येपर्यवसानायतत्राप्युक्तोन्यायः प्रवर्त्तेततेनान्यस्यापिसर्वरूपित्वमुपपद्येत उपपन्नंचसत्त दन्यस्यसर्वरूपित्वं श्रीरामनिष्ठ सर्वरूपित्वेनसहविरुद्धतत्प्र तिपादकयोर्द्वयोरप्युपनिषदोरप्रामाण्यतामापादयेतमूलकारणत्वस्यद्विनिष्टत्वानुपपत्तेः ततस्त्वप्रामाण्यत्वप्राप्तयोर्दृष्टांते न सर्वा स्वप्युपनिषत्स्व प्रामाण्यताप्रसज्जे त स्मृतीतिहासपुराणादीनांतुवेदार्थानुगामित्वे नैव प्रमाणत्वं प्राप्तानां वेदाप्रामाण्ये नांतरीकतयैवाप्रामाण्यता दुर्वारासात्वनिष्टासर्वेषां वेदैकैप्रमाणवतामित्यतोन द्विनिष्ठत्वंमूलकारणत्वस्योपपद्यते न चोपनिषदन्तरे विशिष्टब्रह्मशब्दाभिहितस्य सर्वावतारित्वं श्रूयतेकिंतुकेवल ब्रह्मशब्दस्य नृसिंहकृष्ण नारायणादिशब्दविशेषणत्वमेवश्रूयते ननु नृसिंह तापनीयोपनिषदि "अथैषएवाकारः आततमार्थः आत्मन्येवनृसिंहेब्रह्मणिवर्त्तते एषएवमृत्युरेषहिव्याप्ततमएषएव नमामिएष हिव्याप्ततमएष एवाहमेषहिव्याप्ततम आत्मैवनृसिंहोदेवो ब्रह्मभवति यएवं वेदसोकामनिः काम आप्तकाम आत्मकामः नतस्यप्राणाउत्क्रामंत्यत्रैव समवलीयंते ब्रह्मैव सन्ब्रह्माप्येति अथैषएवोकार उत्कृष्टतमार्थः आत्मन्येवनृसिंहे ब्रह्मणिवर्त्ततेएषएवमकारो महाविभूत्यर्थः आत्मन्येवनृसिंहे देवेपरे ब्रह्मणिवर्त्तते आत्मैवनृसिंहोदेवः परमेवब्रह्मभवत्येवं नृसिंह ब्रह्मशब्दयोस्समानाधिकरण्येनाभ्यासात् प्रणव प्रत्यक्षरस्यनृसिंहपरत्वश्रवणाच्च नृसिंहस्तुतिमंत्रैरपितस्य सर्वरूपित्वसूचनाच्चतस्यापि ब्रह्मश-

ब्दस्य विशेषवाच्यत्वं सर्वरूपित्वं चोपपद्यते तच्चोक्त रीत्या वेदैक प्रमाणवतस्तवानिष्टमतस्त स्यगतिर्वक्तव्येति चेच्छृणु नायमभ्यासो नृसिंहस्य कारणत्व बोधकस्तत्रब्रह्मणा कारण त्वस्या श्रवणात् किंतु प्रत्यगात्मनो ब्रह्मा भेदत्ववोधकः तस्य-प्रकृतस्य ब्रह्मशब्दस्य प्राकृत सिंहत्व बुद्धिनिवर्तकस्य नृसिंह-परत्वद्योतनार्थं सिंहशब्दस्यतत्साहचर्य्यपाठः अथवा नृसिंहो-पासकैः स्वयोगक्षेमचिंताराहित्येन सउपासितव्य इत्येतद् द्योत-नायप्रत्यगात्मनो नृसिंह शरीरत्वेनतद भेदत्व वोधकोभ्यासः नृसिंह शब्दसमानाधिकरणयेन ब्रह्मशब्द पाठस्तु तन्निष्ट प्रातीतिक प्राकृत नृसिंहत्वबुद्धिनिवृत्यर्थः तत्रसर्वत्रात्म नृ-सिंहशब्दयोरव्यवहिते नसामानाधिकरणयात्तत्रैव सर्वंह्येतद् ब्रह्म अयमात्मा ब्रह्मतमे तमात्मा नमोमितिब्रह्मणै कीकृत्य ब्रह्मचात्म-नोमित्येकीकृत्यतदेतद जरममरममृतमभयमोमित्यनु भूयेत्यातम ब्रह्मणोरभेदत्वेनोपक्रम्यपुनः अकार आत्मन्येव नृसिंहे ब्रह्मणि-वर्त्ततेएष एवाहमेषएवाप्ततम आत्मैव नृसिंहोदेवोब्रह्मभवतिआ-त्मन्येव नृसिंहे ब्रह्मणि वर्त्ततेमकारोनृसिंहेदेवेपरेब्रह्मणिवर्त्ततेइम-मात्मा नमाप्ततम मुत्कृष्ट तमंचिन्मात्रं परमेव ब्रह्ममकारेण जानीयादात्मैव नृसिंहोदेवः परमेवब्रह्म भवतीत्यभ्यासेनप्रत्यगा-त्मनृसिंहयोरुक्त स्याभेदत्वस्यदृढीकरणात् तत्रासर्वत्रा नृसिंहपदेन ब्रह्मपदसामानाधिकरणयं तुविष्णुपुराणप्रसिद्धा हिरणयकशिपो-

नृसिंहविषयकोद्भूताद्भुतसत्वरूपाया बुद्धिस्तन्निवृत्यर्थ मिति-
वोध्यंननुतत्रैवसर्वंह्येतद्ब्रह्मेतिब्रह्मणः सर्वरूपित्वं निर्दिश्य पश्चा-
दथैष एवाकार आत्मन्येवनृसिंहेब्रह्मणिवर्त्ततेइतिनृसिंह ब्रह्म-
णोरेकत्वं प्रदर्श्य नृसिंहस्य सर्वरूपित्वेन सर्वावतारित्वं सूचितं
भवतीतिचेन्ननेदंवाक्यंब्रह्मावतारित्व वोधकं तत्रावतारनामलिं-
गाद्यश्रवणात्पुनः 'सर्वंह्येतद्ब्रह्मे' त्युक्तस्य सर्वशब्दस्योपव्याख्या-
नभूतेनभूतभव्यभविष्यत् पदेनावताराणां संगृहीतुमशक्यत्वात्
अनादिसिद्धावताराणांत्रिकालांतर्भावित्वस्यतदतीतत्वस्य चाव-
क्तव्यत्वात्किंतुतद्भिन्नस्यतदभिन्नाभिन्नत्वमितिन्यायात्सर्वाभि-
न्नस्यब्रह्मणआत्मनोभेदत्ववोधनेनब्रह्माभिन्नेनचराचरेणसर्वेणा
नात्मनोभेदत्ववोधनपरं तद्वाक्यं तत्रैवसर्वं ह्येतद्ब्रह्मेत्यस्यानंतर
मयमात्मा नमोमिति ब्रह्मणैकीकृत्य ब्रह्मचात्मनोमित्येकीकृत्ये
तिसर्वं रूपिण ब्रह्मणात्मैकी करणत्व श्रवणात् यद्वातच्छब्देन
ब्रह्मोच्यते तदभिन्नस्यात्मनः पुनस्तच्छब्देन ब्रह्मोच्यते तदभि-
न्नंचराचरं सर्वं तेन सर्वेणाभिन्नत्वमात्मन इत्यर्थः तत्रात्य ॐ
कारोपिनन्नृसिंह परस्संस्तदुत्कृष्टत्व विधायकः किंत्वात्म ब्रह्मणो-
रभेदत्वं विदधन् प्रत्यगात्मनिपर्य्यवसितः तत्रैव ॐमित्येतदक्षरं
सर्वं सर्वंह्येतद्ब्रह्म अयमात्मा ब्रह्मेतिश्रुति वाक्यैः ॐकारस्य
सर्वरूपत्वं सर्वस्य चब्रह्मरूपत्वं ब्रह्मणश्चात्मरूपत्वं प्रकाश्योंकार-
स्यात्मपरत्व सूचनात् पुनस्तत्रैवाकार आत्मन्येवनृसिंहे ब्रह्मणि-
वर्त्तते अथैष एवोकारउत्कृष्टतमार्थः आत्मन्येवनृसिंहे ब्रह्मणि-

वर्त्तते इत्येवंपुन पुनः ब्रह्माभिन्ननृसिंहाभिन्ने आत्मन्येवों-
कार ब्रूतत्वश्रवणात् नन्वत्रत्य आत्मशब्दो नृसिंहपरः अत
आत्मपरोपि प्रणवोनृसिंहस्यैवसर्वोत्कृष्टत्वमुपपादयतीति चे-
न्नैवमपितस्य सर्वावतारित्वमुपपद्यते कुतः प्रणवस्य केवलनृ-
सिंहवाचकत्वानियमात् बहुदेवतामंत्राणामादौ दृष्टस्य प्रणव-
स्य साधारणेन सर्वदेवता वाचकत्वोपपत्यातन्मध्येएकस्यनृसिं-
हस्यसर्वावतारित्वोपपादकत्वानुपपत्तेः तस्यसर्वेषां सर्वावतारि-
त्वोपपादकत्वे स्वीकृते मूलकारणत्वस्यहिनिष्टत्वानुपपत्यात-
त्प्रतिपादक वाक्यानां सर्वेषामप्रमाणत्वोपपत्तेर्नप्रणववाच्यत्व-
द्वारापि नृसिंहस्य सर्वावतारित्वमुपपद्यते नापि तत्स्तुतिमंत्रेषु-
नृसिंहस्यमत्स्यकूर्मादिरूपित्वं नारायण वासुदेवपरमपुरुषपरमा-
मादिशब्दवाच्यत्वंचश्रूयते किंतुब्रह्मविष्णु महेश्वरपुरुषेश्वर-
विराड्रूपत्वमेवअतस्तत्रापितस्यसर्वरूपित्वाश्रवणान्नावतारि-
त्वमुपपद्यतेकिंचतत्रैव यएतन्मंत्रराजंनारसिंहमानुष्टुभंनित्यम-
धीते सोग्निपूतोभवति सवायुपूतोभवतीत्यारभ्यसप्रणवमधीते
इत्यंतेननृसिंह मंत्रस्य बहुमहत्त्वमुक्त्वापियःप्रणवमधीतेससर्व-
मधीतेइत्यभ्यासेनप्रणवाध्ययनफलस्यसर्वोत्कृष्टत्वद्योतनादर्थ-
तोनृसिंहमंत्राध्ययनफलस्यतन्न्यूनत्व सिद्धेरपिनतद्वाच्यस्यमू-
लकारणत्वं सिध्यति प्रणवस्य नृसिंहमंत्रावयवत्वेनतद-
ध्ययनफलमपितन्मंत्राध्ययन फलांतर्गतमेवेतिचेन्न तस्यखा-

दिरत्वादिवत्संयोग[१] पृथक्त्वे नतत्तन्मंन्त्रादावास्थायतन्न्यूनत्व पूरणेनतत्तात्सहकारितयातत्तदवयवत्वेपितदाधिक्यात् स्वातंत्रेण सर्वफलप्रदत्व श्रवणाच्च यः प्रणवमधीते स सर्वमधीतइत्यादौ किंचप्रणवस्यानेक मंत्रादौदृष्टेः बहुदेवता वाचकत्व दृष्टेश्चनासाधारणे नतस्य कस्यचिदेकस्यवाचकत्वमुपपद्यते-येनतद्बलेनतस्यावतारित्वमुपपद्येत यत्तुतत्रनृसिंहस्यातन्मंत्रस्य च जगदुत्पत्यादिहेतुत्वं श्रूयते तदपिन तन्मूलकारणत्वसाधकं कृष्णादीनां तत्तन्मंत्राणां चापिजगदुत्पत्यादिहेतुत्वंश्रूयतेतदपिन तन्मूलकारणत्वसाधकं कृष्णादीनां तत्तन्मंत्राणां चापिजगदुत्पत्यादि हेतुत्वश्रवणेन तत्रातिव्याप्तेः किंबहुना "ॐ क्षीरोदार्णवशायिनं नृकेशरिणमित्यत्र" तस्यक्षीरशाय्यवतारत्वश्रवणात् वाक्यांतरे तदवतारित्वश्रवणेनश्रुतक्षीरशाय्यवतारत्वस्यार्थांतिर परत्वोपपादनाशक्यत्वाच्च नकथंचिदपितस्यावतारित्वमुपपद्यते इतिदिक्नन्वस्तुतर्हि श्रीकृष्णस्यमूलकारणत्वं" मुनयोहवै ब्रह्माणमूचुः कः परमोदेवः तदुहोवाचब्रह्मा श्रीकृष्णोवैपरमंदैवतमिति अनेजदेकं मनसोजवीयोनैतद्देवा आप्नुवन्पूर्वमर्शत् "तस्मात् कृष्ण एव परोदेव एकोवशीसर्वगः

---

१—खादिरोयूपो भवतीतिवाक्योक्तः खादिरोयूपः औदुम्बरादियूपैः सहसंयोगं प्राप्य यज्ञांगोभवति खादिरं वीर्यकामः पुरुषः केवलं एवं खादीर मेवयूपं कूर्यात् वीर्य प्राप्त्यर्थ मिततस्यार्थः इति वाक्योक्तः खादिरो यूपः औदम्बरादियूपेभ्यः पृथक्क नैव वीर्य फलं ददातीत्यर्थः ॥

कृष्ण ईड्यएकोपिसन्वहुधायोविभाति अर्द्धमात्रात्मकः कृष्णो-यत्रविश्वं प्रतिष्ठितंक्लीं ॐ कारस्यैकत्वंपठ्यतेब्रह्मवादिभिः "इत्येवं गोपाल तापनीयोपनिषदि तस्यपरमदैवत्व सच्चिदानंद रूपत्व वहुधाविभानत्व प्रणवसम कामवीज वाच्यत्व श्रवणात् तत्रैवतन्मंत्रस्य पृथिव्यादिकारणत्व श्रवणाच्च तत्रैव अमला-स्वयुगांतराद्यारणाखिल वीजमितिकाम वीजस्याखिल वीजत्व श्रवणाच्च ब्रह्मवैवर्त्तेतु" गत्वानारायणोदेवोविलीनः कृष्णवि-ग्रहे "दृष्ट्वाचपरमाश्चर्यं ते सर्वे विस्मयंययुः" एतस्मिन्नन्त-रेतत्रशातकुम्भमयंरथं "अवरुह्य गतोविष्णुः पातालाज्जगती-पतिः" सचापिलीनस्तत्रैव राधिकेशस्यविग्रहे "तद्दृष्ट्वापर-माश्चर्यं विस्मयंपरमंययुः" संविलीनेहरेरंगेश्वेतदीपनिवासिनि "एतस्मिन्नन्तरेतूर्णमाजगामत्वारान्वितः "शुद्धस्फटिकसंका-शोनाम्नाशंकर्षणः स्मृतः "सहस्त्रशीर्षापुरुषश्शूत सूर्य्यसम-प्रभः" आगतं तुष्टुवुस्सर्वे दृष्ट्वातंविष्णु विग्रहम् "सचा-गत्यनतस्कंधस्तुष्टावराधिकेश्वरं" सहस्त्रमूर्द्धाभक्त्याचप्रणना-म च नारद 'आराध्यधर्म पुत्रौद्वौ नरनारायणाभिधौ' लीनोयं कृष्णपादाब्जे वभूव फाल्गुणोनरः ॥ ब्रह्मेशशेष धर्मश्चत-स्थुरेकत्रतत्रवै 'इत्येवंनारायणादीनां श्रीकृष्णविग्रहविलीनत्व स्मृत्या तस्य नारायणादि कारणत्वसूचनात् कृष्ण कृष्णेति कृष्णेति राधाकृष्णेतियत्पुनः' प्रत्यहंपठपांचालि समन्नामसह-स्त्रकं 'सहस्त्र नाम्नांपुण्यानांत्रिरावृत्यातुयत्फलं' एकावृत्यातु-

कृष्णास्य नामैकं तत्प्रयच्छति ॥ नाम्नांमुख्यतरंनाम कृष्णाख्यं-यत्परंतपः 'प्रायश्चित्तमशेषाणां पापनांमोचकंपरं'इत्यादौतन्नाम्नः सहस्रनाम तुल्यतोक्ता।तद्वाच्यस्यनामांतर वाच्यसहस्र गुणाधिक्योपपत्या सर्वकारणत्वनिष्पत्ते रितिचेन्न' तत्रैवगोपालोपनिषदिएकोहवै पूर्वं नारायणोदेवो यस्मिँल्लोका ओताश्च प्रोताश्च तस्यहृत्पद्माज्जातोऽब्जयोनिस्तपयित्वा तस्मैहिवरंददौसकामंप्रश्नमेववव्रेतंहास्मैददौ सहोवाचाब्जयोनिर्वाऽवताराणांश्रेष्टोवतारः कोभवति येनलोकास्तुष्टादेवास्तुष्टाभवंतियंस्मृत्वामुक्ता अस्मात्संसाराद्भवन्तिकथंवास्यावतारस्य ब्रह्मताभवतीति 'ब्रह्मप्रश्नः सहोवाच तं हि नारायणोदेवः सकाम्यामेरोः शृंगेसप्तपूर्य्योभवंती' त्यारभ्य वनेष्वेवंमथुरास्वेव द्वादशमूर्त्तयोभवंति एकांहिरुद्रायजंति द्वितीयांहि ब्रह्मायजति तृतीयां ब्रह्मजायजंति चतुर्थींमरुतोयजंति पंचमीं विनायकायजंति षष्ठीं वसवोयजंति सप्तमी मृषयोयजंति अष्टमीं गंधर्वायजंति नवमी मप्सरसोयजंति दशमी वैह्यंतर्धानेतिष्ठति एकादशीतिस्वपदंगता द्वादशीभूम्यांतिष्ठतितांहियेयजंतितेमृत्युंतरंतिमुक्तिंलभंते गर्भजन्मजरामरण तापत्रयात्मकंदुःखं तरंतीत्यत्रयंस्मृत्वामुक्ताभवंति 'सोऽवताराणां श्रेष्ठः कः' इतिब्रह्मप्रश्नाभिप्रायानुसारेणारौद्रयादिद्वादश मूर्त्तीनां स्वावतारत्वनिर्देश पूर्वकंतत्रत्यभूमिस्थद्वादशमूर्तियजनोपलक्षिततत्स्मरणस्यापिमुक्ति हेतुत्वप्रकाशनद्वारार्थात् श्रीकृष्णावतारस्यस्वावतारश्रेष्ठत्वंसूचियित्वा तदन-

न्तरं 'मथुरायांस्थितिर्ब्रह्मन् सर्वदामेभविष्यति' तस्यामधिष्ठितः कृष्णारूपीपूज्यस्त्वयासदेति कंठतस्तस्यस्वावतारत्वोक्तेः नचतत्रास्फुटत्वेन श्रीकृष्णावतारित्वविषयकंकिमपिवाक्यं श्रूयतेयेन तद्विरोधपरिहारायापि नारायणपरवाक्यमर्थांतरपरत्वेननेतुंशक्येतततश्चतद्बलेन श्रीकृष्णोवैपरमंदैवतं एकोपिसन् बहुधायोविभातीत्यादीनि वाक्यानिमुख्यार्थपराणिभूत्वा त्वदभीष्टपूरकानिभवन्तु तत्रैवंवेदवाक्यात्तस्यनारायणावतारत्वेनिश्चितेतस्यावतारित्वानुपपत्तेः तद्विषयिकपरमदैवताद्युक्तयोदेवतांतरापेक्षयानेतव्या रौद्राद्येकदशावतरापेक्षयावा नतुनृसिंहाद्यवतारान्तरापेक्षयातच्छ्रेष्टत्वे हेतूकृतस्यमुक्तिप्रदतत्स्मरणस्य नृसिंहादावपिविद्यमानत्वात् तदवतारश्रेष्ठत्वं प्रकाशनायन्यूनावतारत्वे नसूचिता सुरौद्रयादिमूर्त्तिषुनृसिंहादीनांनामाश्रवणाच्च एवंतद्बहुधाविभानत्वविषयकोक्तिरपिवलदेवादिविषयिकत्वेनपंचपदतन्मंत्रविषयकत्वेन वानेतव्यायत्रासौ संस्थितः कृष्णस्त्रिभिः शक्त्यासमाहितः 'रामानिरुद्धप्रद्युम्नैः रुक्मिण्यासहितोविभुः' चतुश्शव्दोभवेदेके इतितत्रैवशक्तिशक्तिमतोरभेदादेकस्यैवचतुश्शव्दवाच्यत्वोक्ते 'वायुर्यथैकोभुवनं प्रविष्टो जन्ये जन्ये पञ्चरूपोवभूव' कृष्णस्तथैकोपिजगद्धितार्थं शव्देनासौपंचपदीविभाती 'तत्रैवतस्य पंचपदीमंत्ररूपत्वेनपंचधाविभानत्वश्रवणाच्च तस्यापि नारायणावतारत्वश्रुत्यानृसिंहाद्यवताररूपेणातद्बहुधाविभानत्वानुपपत्तेश्च ॐकारस्यतुनृसिंहादीनाम-

पिवाचकत्वश्रुतेर्नासाधारण्येन श्रीकृष्णवाचकत्वमुपपद्यतेयेन-
तद्बलादपितस्यमूलकारणत्वमुपपद्यते तथाहितस्यप्रणवैकत्वं-
प्रणवकारणत्वादुच्यते प्रणवकार्य्यसमकार्य्योत्पादकत्वेनतत्तु-
ल्यत्वाद्वाप्रणवकार्य्यत्वाद्वानप्रथमः वन्हिवीजस्यतत्कारणत्व-
श्रवणवत् तस्मात्तत्सिद्धिवच्च वीजस्यतत्कारणत्वाश्रवणात्
तस्मात्तदसिद्धेश्चप्रणवकारणस्याकारस्य वन्हिवीजेदर्शन-
वत्क्लींवीजेदर्शनाच्चप्रणवमहत्व वत्तन्महत्वा श्रवणाच्च ना-
पिद्वितीयः कादापः लात्पृथिवीत्यादौ वाक्ये क्लीं वीजाऽत्पृथि-
व्यस्तेजः सूर्य्यचन्द्रपंचकस्यैवोत्पत्तिश्रवणात् यत्तुतत्रैवतस्या-
खिलवीजत्वमुक्तं तदपि पृथिव्यादि कारणत्वपेक्षया आद्या-
र्णाखिलवीजमित्युक्तेरनंतरं कादापः लात्पृथिवीत्यादिवाक्ये
नपृथिव्यादीनामेवतत्कार्य त्व स्फुटीकारणात्तत्रामहत्तत्त्वदीनां
मंत्रांतराणांच्च तत्कार्य्यत्वानुक्तेश्चप्रणवस्यतुतत्रैवमहत्तत्वादि
करणत्वश्रुत्यातस्मादाधिक्यमवगम्यतेतथाहिपूर्वोहिएकमेवाद्वि-
तीयं ब्रह्मासीत्[1]तस्मा दव्यक्तमेकाक्षरं तस्मादक्षरान्महत्तत्वं म-
हतोवैअहंकार इत्यादिनातस्यमहत्तत्वादि कारणत्वोक्तेः उ-
पनिषदन्तरेषु ॐमित्येतदक्षरं सर्वं तस्योपव्याख्यानंभूतंभव्यं-
भविष्यदित्यादि नातस्यार्थ सृष्टिशब्द सृष्टिकारणत्वप्रकाशना-
च्चकिंतुतृतीयपक्षः तत्राप्यकारादिप्रणवाक्षराणां मध्येमकार-
स्यैवतत्रादर्शनात् तदवयवसंयोगादेवतावन्मात्रसादृश्यात्तेनत-

१ ब्रह्म ॐकारः ॐ मित्येकाक्षरं ब्रह्मेतिस्मृतः ।

तदैक्यमुक्तं भवतीत्यवधेयंतस्यपृथिव्यादिकारणत्वं तु जगत्का-
रणश्रीकृष्णतादात्म्यतया वाचकत्वेनाप्युपपद्यते नृसिंहादि-
मंत्राणामपि जगत्कारणत्वश्रवणात् भूतप्रेतादिमंत्राणां तथा-
त्वाश्रवणाच्च स्ववाच्यसंबन्धेनैववाचकस्य वाच्यवच्छक्तिमत्वा-
नुमानात् एकांगसंगिनीगंगापावयेदखिलं जगत् अंगप्रत्यंगसं-
व्यापिनामकिं कर्त्तुमक्षममित्युक्तसंबंधेनैवनाम्नः तथात्वस्म-
रणाच्च अतोनजगत्कारणत्वोक्तिमात्रेण तद्वाच्यस्यमूलकार-
णत्वमुपपद्यते उक्तहेतोर्नृसिंहादिष्वपिसत्वात्तेषामपिमूलकारण-
त्वोपपत्या एकत्रतन्निष्ठत्वव्याघातात् किं बहुना नारायणकार्य्य-
त्वादेवतस्य मूलकारणत्वानिष्पत्तेः स्वकारणाभेददृष्ट्यैव तत्र-
परमदैवतत्व सर्वनियंतृत्व बहुरूपित्व जगत्कारणत्वाद्युक्तयः
स्वार्थंगच्छंति एवंनृसिंहाद्यवतारांतरेष्वपि ज्ञेयं अन्यथाबहूनां
परमदैवतत्वाद्यनिष्पत्तेस्तद्बोधकोपनिषदांपरस्परविसंवादित्वेनमि-
थ्यावादितया तत्राप्रामाण्यताप्रसज्जेत तास्वन्यतरस्याः कल्पि-
तत्वांगीकारे तु दृष्टांतेनसर्वास्वपि कल्पितत्वंप्रसज्जेत तस्मात्-
श्रीकृष्णस्यनारायणावतारत्वश्रुतेस्तदविरोधेनैव तानि तानि
औपनिषद्वाक्यानि नेतव्यानिसतित्वेवमौपनिषद्वाक्यानां व्य-
वस्थावत्वेतदुपबृंहण[1]भूतत्वादितिहासपुराणादिवाक्यान्यपितद्वि
षयकानितदनुसारेणैव नेतव्यानि तथाचयानितत्रत्यानि श्रीकृ-
ष्णस्यावतारत्व बोधकानिनातिश्रुतिमूलकत्वेन मुख्यार्थपराणि-

१ तत्समानार्थकैः पदैस्तदर्थ प्रकाशनत्वंतदुपबृंहणत्वं ।

यानि तु सामान्येन तदवतारित्वं बोधयंति नच तदवतारत्वेन कस्यापिनामधेयं पठंति नमस्तस्मैभगवते कृष्णायाकुंठमेधसे- योधत्ते सर्वभूतानामभावायोशतीस्तनूरित्यादीनितान्यश्रुति-मूलकत्वेन नस्वार्थपराणि किंतुतत्र रुच्युत्पादनमात्र प्रयो-जनानि नच तादृशं *वाक्यं पक्षीकृत्यतन्मूलभूतमौपनिषद्वा-क्यमनुमातुं शक्यं श्रीकृष्णनिष्ठनारायणावतारत्ववाचक-वेदवाक्यविरोधेन तस्यमुख्यार्थपरत्वानुपपत्तेः वेदविरुद्ध-पौरुषेयवाक्यं पक्षीकृत्यतन्मूलभूतवाक्यानुमानस्य शिष्टप्रति-सिद्धत्वात् तथाच जैमिनिसूत्रंविरोधेत्वनपेक्षंस्यात् ह्यसत्यमनुमान मितिवलदेवादीनां पंचपदमंत्रस्य चतद्रूपत्वश्रुतेः तदृष्ट्यावोक्तं-योधत्ते उशतीस्तनूरिति तत्रैवपंचपदस्यसर्वभूतहितकरत्वेना-भयकरत्वश्रवणात् कृष्णस्तथैकोपि जगद्धितायशब्दे नासौ-पंचपदी बभूवेतियानित्वौपनिषदस्यतत्कारणस्यापितत्रलीनत्व-वचनेनतदंशत्वसूचकानि गत्वानारायणोदेवोविलीनः कृष्ण-विग्रहइत्यादीनितान्यत्यंतवेदविरुद्धार्थ कतयारुच्युत्पादनार्थानी-तिवचनस्याप्यनर्हत्वेन तदुपासककल्पितानीत्यतोऽप्रामाण्या नीतिविवेचनीयं वेदैकप्रमाणवद्भिर्नचनारायणनाम्ना संकर्षण-स्तत्रोच्यते अतस्संकर्षणस्य तन्न्यूनत्वोपपत्तेस्तत्रतल्लयत्वमु-पपद्यते इतिवाच्यं " एतस्मिन्नन्तरेतूर्णमाजगामत्वरान्वितः "

---

* नमस्तस्मै भगवते कृष्णायेतीदं वाक्यं श्रुतिमूलकं भवितुमर्ह-तिशिष्ट प्रणीतत्वात् मन्वादि प्रणीतवाक्यवत् ।

शुद्धस्फटिकसंकाशोनाम्नासंकर्षणः स्मृतः "इतितत्रैव नाराय-
णात्पृथक्त्वेन संकर्षणगमनत्वोक्तेः श्रीकृष्णकारणत्वेन श्रुतोयो-
नारायणः सोनिरुद्धापरपर्य्यायः लोकोतत्वपोतत्वाब्जयोनि-
कारणत्वलिंगैस्तस्यक्षीराब्धिशाय्यनिरुद्धत्वोपपत्तेरतोऽनुपपद्य-
मानं तस्य तत्कारणत्वं वेदेनापि कथमुक्तमित्यादिकमपिनाशंक-
नीयं वेदस्यस्वतंत्रत्वेननियोज्यानियोज्यानर्हतयासतितत्रत्यवच-
नांतराविरोधेशिष्टैर्यथाश्रुतार्थकत्वस्वीकारात्न्यूनाधिक्यज्ञानस्य-
वेदवाक्याधीनतयावैदिकस्य नारायणस्य क्षीराब्धिशायित्वे वा
श्रीकृष्णादाधिक्योपपत्तेः इतिहासपुराणादिवाक्यानां वेदार्थ-
विरोधेनार्थांतरपरत्वस्याप्रमाणत्वस्यस्वीकाराच्च नचासौनाराय-
णस्संकर्षणपर्य्यायोभवितुमर्हति "रामोहंह्यनुरुद्धोहं प्रद्युम्नोहं-
सनातन" इतिगोपालोपनिषद्येतस्य रामादिशब्दितसंकर्षणा-
दिकारणत्वश्रुतेः अतः "एषनारायणः साक्षात् क्षीराब्धिनि-
केतनः" नागपर्य्यंकमुत्सृज्येहागतोमथुरांपुरीमि "त्यादीनि-
वचनानिसंकर्षणस्वामिनोनारायणस्य कृष्णरूपित्वं संकर्षणा-
निरुद्धप्रद्युम्नस्वामित्वं च वोधयंतीतिवोद्धव्यं तत्रापि नागपर्य्यं
कमुत्सृज्येतिनागस्य तत्पर्य्यंकत्वेनतच्छेषत्वस्मरणात्तस्मान्न-
कथंचिन्नारायणपरवाक्यस्यान्यार्थपरत्वमुपपद्यते येन व्रह्मवैवर्त्त
वाक्यं स्वार्थं लब्ध्वा प्रमाणयतां गच्छेत एवंसहस्रनाम्नां पुण्या-
नां त्रिरावृत्त्यातुयत्फलमित्यस्मिन्वाक्ये विष्णवादिभगवन्नामां-

तराश्रवणात् वेदवाक्येषु श्रीकृष्णस्यावतारित्वाश्रवणेनावतारांतरनामभ्यस्तन्नाम्नः आधिक्यानुपपत्तेश्चप्रत्युतस्वकारणानारायणनाम्नस्तन्न्यूनत्वोपपत्तेः वेदेषुतत्समानार्थकतन्मूलवाक्याश्रवणाच्चदेवतांतरनाम्नामपिपुराणयत्रोपपत्तेर्देवतांतरसहस्रनामतुल्यत्वं तन्नाम्नः उक्तंभवतीत्यत्रगम्यते एवं 'कृष्ण कृष्णेति कृष्णेति राधाकृष्णेति यत्पुनः' प्रत्यहंपठपांचालिसमन्नामसहस्रकमि 'त्यत्रापितस्यदेवतांतरसहस्रनामतुल्यत्वंबोध्यंते नवाक्येनास्यवाक्यस्यैक वाक्यतोपपत्तेः एवं नाम्नामुख्यतरं नामकृष्णाख्यंयत्परंतपेत्यत्रातन्नामांतरापेक्षया कृष्णनाम्नोमुख्यत्वमुक्तंभवति' लौकिकावैदिकाशब्दायेकेचित्संतिपार्वति 'नामानि रामचन्द्रस्ययसहस्रंतेपुचाधिकं' तादृङ्नाम सहस्रैस्तु रामनामसमंमतमि' त्यत्ररामनाम्नोरामचन्द्रनामांतरसहस्रतुल्यत्वोक्तिवत् अनंतरोक्तरीत्या कृष्णनाम्नोभगवन्नामांतरेभ्योमुख्यत्वानुपपत्तेः तत्रैवंस्वनामांतरापेक्षाया कृष्णनाम्नोमुख्यत्वेसिद्धे पूर्वश्लोक[3]द्वयेस्वनामांतर सहस्रतुल्यत्वं कृष्णनाम्नउक्तं भवतीतिवावगम्यते तत्रतुएकावृत्त्यातुकृष्णस्य नामैकं तत्प्रयच्छतीत्यत्रकृष्णस्य एकंमुख्यं कृष्णेतिनामतत्प्रयच्छतीत्येवंयोजनीयं स्वनामांतरेभ्योधिकफलप्रदानेनैवतस्यमुख्यतोपपत्तेः परंत्वस्मात्पद्यात्-

१ सहस्र नाम्ना पुण्या ना मित्यादि वाक्यं तच्छब्दार्थः ।

२ सकाशात् कृष्ण नाम तच्छब्दार्थः ।

३ कृष्ण कृष्णेति कृष्णेति ।

पूर्वोक्तः[४] पक्ष उत्कृष्टतरः तत्रापिकृष्णानामांतरेभ्यएवंकृष्णेति-
नाम्नोमुख्यतरत्वमुपपद्यते न भगवन्नामांतरेभ्यः श्रीरामनाम्न-
स्तु समस्तभगवन्नामभ्योमुख्यतमत्वंमहाजनप्रसिद्धं तत्रतत्रत-
त्तद्भगवन्नामोचार्य्य तेभ्योरामनाम्नः सहस्रगुणाधिक्योक्तेः त-
थाहि "विष्णोर्नाम्नांसहस्राणां तुल्यएवमहामनुः। सर्वेषुमंत्र-
वर्गेषु श्रेष्ठंवैष्णवमुच्यते॥ गाणपत्येषुशैवेषुशाक्तशौरेष्वभीष्टदं।
वैष्णवेष्वपि मंत्रेषु राममंत्राफलाधिकाः॥ मंत्रस्तेष्वप्यनायास फ-
लदोयंषडक्षरः। तथालौकिका वैदिका शब्दायेकेचित्संतिपार्व-
ति॥ नामानि रामचन्द्रस्य सहस्रं तेषुचाधिकं। तादृङ्नामस-
हस्रैस्तुरामनामसमंमतम्॥ विष्णोरेकैकनामैवसर्ववेदाधिकंमतं।
तादृङ्नामसहस्रैस्तु रामनामसमंमतं। जपतः सर्ववेदाश्चसर्व-
मंत्राश्चपार्वति। तस्मात् कोटिगुणंपुण्यं रामनाम्नैव लभ्यते
"अनंताभगवन्मंत्रानानेनसमाकृताः" इत्यादिवाक्यैरशेषभ-
गवन्नामभ्यः सहस्रगुणाधिक्यं रामनाम्नः स्फुटीकृतं भवति न
चात्रापिनारायणवासुदेवकृष्णनृसिंहादि भगवन्नामांतराणि न
श्रूयंते अतोनोपपद्यते तेभ्यस्तदाधिक्यमितिवाच्यं सर्वेषुगाण-
पत्यादिमंत्रवर्गेषु श्रेष्ठत्वेनोक्तेषु वैष्णवमंत्रेषु नारायण वासुदेव
कृष्णादिमंत्राणामंतः पातित्वात् "वैष्णवेष्वपिमंत्रेषु राममंत्रा-
फलाधिका" इतिराममंत्राणां तदंतर्गतत्वनिर्देशेननाशेषभग-
वन्मंत्राणां तदंतर्गतत्वोपपत्तेः तदनंगीकारेतुतत्तन्मंत्र वाच्या-

[४] कृष्णनाम्नोदेवतान्तरसहस्र नामतुल्य कथन रूपः पूर्वोक्तःपक्षः

नां विष्णुपदाभिधेयत्वानुपपत्या सर्वव्यापकत्वानिष्पत्तेस्तद् व्याप्य कोटचंतर्गतत्वेन तन्न्यूनत्व प्रशक्तेः "अनंताभगवन्मंत्राइ-त्युक्तभगवच्छब्दाभिधेयत्वानंगीकारेतु तेषामभगवत्वोपपत्या तत्राजीवत्वप्रशक्तेः" विष्णोरेकैकं नामै वे त्युक्तसर्ववेदोपलक्षि-तसमस्तवैदिक मंत्राधिकत्वेनोक्तेष्वेकैकविष्णुनामस्वंतर्गतत्वा स्वीकारे तत्रावैदिकत्वप्रसक्तेः वैदिकत्वस्वीकारेपितन्न्यूनत्वप्र-सक्तेः कुतः विष्णुनाम्नां सर्ववेदाधिक्योक्तेः "किंचलौकिका-वैदिकाशब्दायेकेचित् संति पार्वति। नामानि रामचन्द्रस्यसहस्रं तेषुचाधिकमि" त्युक्तेनयेकेचिदित्यनेनाशेषभगवन्नाम्नामपिसं-गृहीतत्वात्तद् नंगीकारपक्षस्यतत्रावैदिकत्व प्रसक्ति दोषग्र-स्तत्वेनावश्येनतेषां वैदिकशब्दांतर्गतत्व स्वीकारात् एवंचसति-तेभ्यः सहस्रगुणाधिक्येनोक्तेभ्यः श्रीरामचन्द्रनामांतरेभ्योपि-रामनाम्नः सहस्रगुणाधिक्योक्तेः 'एकैकंरामचन्द्रस्य नाम-सर्वाधिकं मतं' सहस्रनामफलदं सर्वाभीष्ट प्रदायक' मितिलिंग पुराणोक्त रामसहस्र नामांतेपि श्रीरामचन्द्र नामांतराणां मध्येएकैकस्यापिनाम्नः सहस्रनामाधिकोक्तेः तत्राचसहस्रनाम-फलदमितिवाक्यस्य वैदिकाशब्दायेकेचिदिति वाक्येनैक वा-क्यतोपपत्तेः सहस्रनामपदंभगवत्सहस्रनाम परमितिबोध्यं किं च जपतः सर्ववेदाश्चसर्वमंत्रांश्चेत्युक्त सर्ववेदसर्वमंत्रांतर्गत-त्वानंगीकारेतु तत्रावैदिकत्वामंत्रात्वप्रसक्तेश्च अवश्येनत्वया-

---

* नारायणादि नाम्नातुनानःवंनामविष्णुनामभ्यो न्यूनत्वोक्तेः॥

समस्तभगवन्नाम्नांतन्मंत्राणांच तदंतर्गतत्वांगीकर्त्तव्यात् तथा-
स्वीकारेतूक्तवाक्यैस्तेभ्योपितत्सहस्र गुणाधिक्यनिष्पत्तेः नचा-
न्यत्र वदत्रापिएषांवाक्यानांमूलं नोपलभामहेइत्याशंकनीयंराम-
स्यबहुरूपधारित्वश्रुतेः मृत्सर्वांगवाचकमृच्छब्दवद्रामसर्वांग वा-
चित्वेनतत्कार्य्यवाचकत्वेपिपर्य्यवसितस्य व्यापकस्यरामेतिकार-
णनाम्नः घटशरावादिशब्दवदेकैकदेश वाचित्वेनव्याप्यभूते-
भ्यः भगवन्नामांतरेभ्यः सहस्रगुणाधिक्योपपत्तेः उक्तवाक्याना-
मर्थस्ययुक्तिसहत्वात्कारणश्रुत्यनुकूलत्वाच्च वेदाविरोधित्वनि-
ष्पत्तेः असतिवेदविरोधेतुअनेनैवहेतुनाताद्दशवाक्यानिपद्मीकृ-
त्यतन्मूलं वेदवाक्यमनुमातव्यमिति शिष्टवचनादवगम्यते
तथाचजैमिनिसूत्रं विरोधेतूपेक्षंस्यात् ह्यसत्यनुमानमितिप्रयोग-
स्त्वत्रेदृशः विमतानि वाक्यानि वेदमूलकानिभवितुमर्हंतिवे-
दार्थाविरोधेसतिवेदार्थप्रज्ञप्रणीतत्वात्मन्वादि प्रणीतवाक्यवदिति
न चानुमानमात्रगम्यानिकिंत्वौपनिषदान्यपि ब्रह्मादीनांवाच-
कोयंमंत्रोऽन्वर्थादिसंज्ञकः सर्ववाच्यस्य वाचकः स्वभूर्ज्योतिम-
योनंतरूपीस्वेनैवभासतेरेफारूढामूर्त्तयः स्युरितीदृशानितदुपकार
काणि च जीवत्वेनेदमोंयस्यइत्योमितीतिचेतीदृशानि संतितथा
चसतिलौकिकवैदिक शब्दांतर्गतेभ्यः गणेशादिशिवादिकाली-
भवान्यादिसूर्य्यादिशब्देभ्यस्तथासर्वेषुमंत्रवर्गेषु श्रेष्ठंवैष्णवमु-
च्यतेइतिशिवनामभ्योपिश्रेष्ठत्वेनोक्तेभ्योवैष्णव मंत्रत्वेनोक्ते-
भ्योभगवन्नामांतरेभ्यः सहस्रगुणाधिक्येनोक्तेभ्यः स्वनामांत-

रेभ्योरामनाम्नः सहस्रगुणाधिक्यवत् देवतांतरसहस्रनामतुल्य-त्वेनस्वनामांतर सहस्रनामतुल्यत्वेन वा त्वदभीष्ट भगवन्नामांतर-सहस्रतुल्यत्वेनवो क्तत्कृष्णोतिनाम्नोपितत्रयरामनाम्नः सहस्र-गुणाधिक्यस्यनिर्बाधत्वोपपत्तेर्नतद्वाच्यत्वेनहेतुनापि श्रीकृष्ण-स्यमूलकारणत्वमुपपद्यते नन्वस्तुतर्हि नारायणस्यसर्वावतारि-त्वगोपालतापनीयस्यप्रदर्शित वाक्यस्यतत्राप्रमाणत्वात्तदाहुरे-को हवैनारायणः आसीन्न ब्रह्मा नईशानो नापो नाग्नीषोमे-द्यावापृथिव्यो ननक्षत्राणिनसूर्य्यः सएकाकीनरएवेत्यादि महो-पनिषदि ॐ अथपुरुषोहवै नारायणो कामयत प्रजासृजेयेति नारायणात् प्राणोजायतेमनः सर्वेन्द्रियाणिच खं वायुर्ज्योति-रापश्च पृथिवीविश्वस्यधारणी नारायणाद्ब्रह्माजायते नारा-यणाद्रुद्रोजायते नारायणात्प्रजापतिर्जायते नारायणादिंद्रो जायते नारायणादष्टौ वसवो नारायणादेकादश रुद्रादयः समुत्पद्यन्ते नारायणेप्रलीयन्ते इति नारायणोपनिषदि च नारायणस्य सृष्टिप्रलया वधित्वश्रवणात् अथनित्योनिष्कलं-कोनिराख्यातो निर्विकल्पो निरंजनः शुद्धोदेवएको नारायणो न द्वितीयोस्तिकश्चिदिति तत्रैवतद्व्यतिरिक्तस्य प्रतिषेधाच्च तस्यैव सर्वमूलत्वोपपत्तेरित्युक्तवन्तं प्रत्यपरेऊचुर्नोप्रदर्शितवा-क्यैस्तस्यावतारित्वमुपपद्यते एकोनारायणो न द्वितीयोस्तिक-श्चिदिति नारायणव्यतिरिक्त प्रतिषेध श्रवणावत् अहमेकः प्रथमतमासीत् वर्तामिभविष्यामिनान्यः कश्चिन्मत्तोव्यति-

रिक्त इति यस्मिन्निदंसर्वमोतप्रोतं तस्मादन्यं न परंकिंचिन्नास्तीति अथर्व शिर्षोपनिषदि रुद्रव्यतिरिक्त प्रतिषेधश्रवणात् रुद्रस्यापिसृष्टिप्रलयावधित्वश्रवणाच्चहेतोरुभयत्र समानत्वेनान्यतरस्य मूलकारणत्वसाधनेऽन्यत्रातिव्याप्तेः उभयनिष्टवाक्ययोः परस्परविरोधेनाप्रामाण्यापत्तेश्च कथं तदुक्तदोषानापत्तिरितिचेन्नारायणोपनिषत्सु हवै इतिपद श्रवणात्यत्तत्हवैइत्यादिपदानां प्रसिद्धार्थद्योतकत्वेन प्रसिद्धमुद्दिश्याप्रसिद्धस्यविधानात् कुत्रात्यं कमपि प्रसिद्धं सर्वकारणमुद्दिश्य प्रदर्शितवाक्यैस्तस्य सृष्टिप्रलयावधित्वाद्यनुवादेनावतारित्वं विधीयते इत्यवगत्या उभयपरवाक्यानां एकनिष्ठत्वांगीकारात्एकोहवैपूर्वं नारायणोदेव इतिगोपालोपनिषदितदाहु रेकोहवै नारायणइतिमहोपनिषदि अथपुरुषोहवैनारायण इतिनारायणोपनिषदिचसर्वत्रहवैइतिपदश्रुतेः सर्वासामनुवादकत्वमुपपद्यते कस्यतर्हि तदनुवादेतथात्वंविदधतीति चेतिशिवरुद्रादिशब्द वाच्यस्येतिब्रूमः श्वेताश्वतररुद्रोपनिषदोः शिवरुद्रयोः सृष्टिप्रलयावधित्वादिबोधकतया नारायणोपनिषत्समानार्थकत्वेन शिवनारायणपरवाक्यानामेक वाक्यतोपपत्तेः शिवरुद्रोपनिषत्सु श्रुतयोरपिहवै इतिपदयो रुद्रविषयकत्वानुपपत्तेः तासामननुवादकत्वावगमाच्च श्रूयतेहि रुद्रस्य सर्वादित्वं ॐ देवावाहवै स्वर्गंलोकमायंस्ते रुद्रमपृच्छन्कोभवानितिसोऽब्रवीदहमेकः प्रथममासीद्वर्त्तामिचभविष्यामिनान्यः कश्चिन्मत्तोव्यतिरिक्त इत्यादिरुद्रोपनिषदि अत्रहवैइतिनिपातौ

सानिध्यात् देवविषयकौस्वर्गविषयकौ वा नत्वत्रत्यरुद्रविषयकौ नत्वितोन्यत्रप्रसिद्धस्यरुद्रस्यान्यस्यवाप्रसिद्धिद्योतकौअहमेकप्रथममासीन्नमत्तो व्यतिरिक्तोऽन्यः कश्चिदिति स्वमुखेन स्वव्यतिरिक्तस्यनिषेधान्नारायणोपनिषदितुहवैनिपातयोर्नारायणपदसानिध्यात्तत्र रुद्रवन्नारायणस्यस्वमुखतः स्वव्यतिरिक्तनिषेधाश्रवणाच्चतयोर्[1]तद्वि[2]षयकत्वमुपपद्यते यदातमस्तन्नदिवान रात्रिर्नसन्नवासच्छिव एवकेवलः तस्मात्प्रवृत्तिः प्रसृतापुराणी सर्व[3]तोक्षिशिरोमुखः सर्वव्यापी च भगवानतस्मात्सर्वगः शिवः इत्येवं श्वेताश्वतरोपनिषदि शिवस्यसर्वोत्कृष्टत्वं श्रूयते तत्रहवैइत्यादि निपातानदृश्यंतेऽतस्तदनुवादकत्वं वा नारायणोपनिषदांरुद्रोपनिषदश्चस्यात् ननु नारायणाद्रुद्रोजायतेइतिरुद्रस्य नारायणजत्वश्रवणेन तन्न्यूनत्वोपपत्तेर्नतदनुवादकत्वं नारायणोपनिषदामुपपद्यते इतिचेन्न सकारणांकरणाधिपाधियोनचास्य कश्चिज्जनिता नचाधिपः नतत्समश्चाभ्यधिकश्चदृश्यते नतस्यप्रतिमास्तियस्यनाममहद्यशः इत्यादिश्रुतिभिः शिवजनकाधिपयोस्तत्समाभ्यधिकयोश्चनिषेधेनतस्यनारायण तज्जन्यत्वानुपपत्तेरतज्जन्यवाचकरुद्रशब्दस्य काश्यधिपपरत्वानुपपत्त्याविशिष्टजीवपरत्वेननेतव्यात्तस्य जीवत्वेपि मंगलगुणयोगाज्जीवांतर नियंतृत्वाच्चशिवेशानसंज्ञकत्वोपपत्तेश्च श्वेताश्वतरप्रतिपाद्यस्य तु तत्स-

---

१ हवैपदयोः।

२ तद्विषयकत्व नारायणद्विषयकत्वं।

३ सर्वाननशिरोग्रीवः।

माभ्यधिकनिषेधश्रवणात् श्रीश्चते लक्ष्मीश्चपत्न्याविति- लक्ष्मीपतीत्व लिंगात् सर्वाननशिरोग्रीव इति सर्वव्यापी च भगवान्तस्मात्सर्वगतः शिवइतितस्यैव सहस्रशीर्षत्वादि श्रुत्या क्षीराब्धिशायित्वोपपत्या पुनः सर्वव्यापीत्व श्रुत्यानरजन्यमह- दादितत्वायनकारित्वोपपत्या च नारायण संज्ञकत्वोपपत्तेः सर्वा अपि नारायणोपनिषदो नारायणपर्याय शिवानुवादेन तस्यावतारित्वं जगत्कारणत्वं च विदधन्तीत्येव मुक्तवन्तं प्रतिनैतदप्युपपद्यते इति वयं ब्रूमः कुतः इति चेत्स्वोपनिषत्सु शिवरुद्रादिशव्द वाच्यस्य जगत्कारणत्व श्रवणेप्यवतारित्वा श्रवणात् अन्यत्ररुद्रस्तारकं ब्रह्मव्याचष्टे येनासावमृतोभूत्वा मोक्षीभवति "श्रीरामस्यमनुंकाश्यां जजापवृषभध्वजः। मन्वंत- रसहस्रैतु जपहोमार्चनादिभिरित्यादिवाक्येषु शिवशंकररुद्र वृषभध्वज परमेश्वरादि शव्दवाच्यस्य काश्यधिपतेर्विश्वनाथस्य श्रीराममंत्रजप परत्व तदाराधनपरत्व श्रवणात् तन्मंत्रोपदेशेन काशीमृतप्राणिमोक्षकारित्वश्रवणाच्च भवानीपतेः शिवस्य श्री- रामभक्तत्वोपपत्तेः श्रीरामस्यस्वोपनिषदिसर्वावतारित्व श्रुतेश्च उपासकानांकार्य्यार्थं ब्रह्मणोरूपकल्पनेत्यादि वाक्येषु तथा चा त्राराधकस्यस्वराध्याधिक्यानुपपत्तेस्तादृशवच[1]सामर्थां[2]तरपरत्व

---

१. शिवस्य श्रीरामराधकत्व बोधक वचनानां यद्वा नारायणाद्रुद्रोजायते इतीदृशवचनानां।

२. नारायण जोरुद्रः कश्चिज्जीवइत्येवं रुद्र शव्दस्यार्थांतर परत्व स्वीकारस्य।

स्वीकारस्य मूलकारणत्वस्यद्विनिष्ठत्वानुपपत्तिवाध्यत्वात्क्लृप्तकल्पितयोः[३]क्लृप्तस्यबलीयस्त्वाच्चनशिवस्य तदनुवाद्यत्वंमूलकारणत्वं चोपपद्यते यत्तुपुराणादौ श्रीरामस्यशिवोराध्यकत्वंश्च यतेतदयुक्तंवेदवाक्यानुकूल्याय[४]लोकशिक्षाभिप्रायेणनेतव्यंतस्यपरात्परतरत्वेपि धर्म्मिष्ठ जनाग्रगण्यराजकुलेऽवतीर्याविष्कृतमानुषत्वस्य लोकशिक्षकत्वोपपत्तेः तथाक्वचित्तद्विषयिकाशक्त्वोक्तिरपिप्रतीत्यभिप्रायेणनेतव्या आविष्कृतमानुष्येविशिष्ठशक्तौ तत्रदेवांशत्व प्रतीत्युपपत्तेः नत्वित्थं शिवविषयकं केवललोकशिक्षाभिप्रायेण श्रीरामसेवकत्व वचनं नेतुंशक्यते तस्यमानुषत्वादिप्राप्तौश्रुतौस्मृतत्वात् तस्य सर्व मूलकारणत्वानुपपत्तेश्चा तस्तस्यतदाराधकत्वं वास्तवमवगम्यते तत्रैवंसतिनारायणोपनिषदां शिवानुवादकत्वानुपपत्तेः नारायणः परंब्रह्मतत्त्वं नारायणः परः इति वृहन्नारायणोपनिषत्प्रतिपाद्य नारायणमनूद्यतस्यैवावतारित्वं विदधन्तीत्येवं सतिद्वयो रामनारायणयो रवतारित्वानुपपत्तेः अवतारित्व परस्य ब्रह्मशब्दस्य सामानशब्दत्वेन अवतारित्व परनारायणेति विशेषशब्दवाच्ये पर्यवसानात्वायोग्याच्च नारायणः परंब्रह्मेत्यत्रब्रह्मशब्दस्यतद्विशेषणत्वेन तत्परत्व दृष्टेश्चविशेषश्रुत्यनु-

---

३. स्रौतस्य शिवनिष्ठ श्रीरामराधकत्वस्य क्लृप्तस्य नारायणजोरुद्रः कश्चिज्जीवविशेषः न परमेश्वर इत्यस्मात्कल्पिताद्बलीयस्त्वाच्च ।

४. वेदवाक्यं ब्रह्मणोरूपकल्पनेत्यादिक ।

रोधेनसामान्यश्रुतेर्नेतव्याच्च नारायणपरवाक्यानुरोधेन ब्रह्मणो रूपकल्पनेति वाक्यमपि नारायणपरं तस्यात्राप्यवतारित्वं बोधयतीति वाच्यमिति चेन्नतस्यैव ब्रह्मपरवाक्यानुरोधित्वोपपत्तेः कुतइति चेत्तत्रैवकोऽवताराणांश्रेष्ठः यंस्मृत्वामुक्ता-भवन्तीति ब्रह्मप्रश्नवाक्ये यं स्मृत्वेत्येकवचनेनावतारांतरेभ्य एकावतारस्य श्रेष्ठत्वज्ञाने तन्मोक्षप्रदत्वस्य हेतुत्वावगमात्पुनः सहोवाच तंहि नारायणोदेवइत्यादितत्प्रश्नोत्तरवचने एकांहि रुद्रायजंतीत्यादिनारौद्र्यादिद्वादशमूर्तिनांस्वावतारत्वं सूचयित्वा तासुद्वादशसु एकादशभ्यः श्रीकृष्णावतारस्यश्रेष्ठत्वज्ञापनाय तांहियेयजंतितेमृत्युंतरंतीत्यादिना भूमिस्थद्वादशैक श्रीकृष्णमूर्त्तियाजकानामेवमुक्त्युक्तेः मत्स्यादीनां तत्र नामाश्रवणाच्च अन्यत्र नृसिंहादिभक्तानां मुक्तिश्रवणेन मुक्तिप्रदत्वेन हेतुना श्रीकृष्णस्यतेभ्यः श्रेष्ठत्वानुपपत्तेश्चावतारांतरेभ्यः श्रीकृष्णावतारस्यश्रेष्ठत्वे हेतूत्कृतस्यमोक्षप्रदत्वस्यनृसिंहादिष्वपिसत्वेनतेभ्यस्तदधिकत्वानुपपत्त्या तस्य तदाधिक्य विषयकत्वांगीकारे तत्रत्यप्रश्नतदुत्तरवाक्ययोर्वैयर्थ्यापत्त्याचतत्रात्यस्य-रौद्र्यादिविषयकावतारत्ववचनस्यश्रीकृष्णविषयकावतारत्ववचनस्य च मत्स्याद्युपलक्षकत्वानुपपत्तेश्च नारायणावतारत्वबोधकवाक्यस्यरौद्र्यादिद्वादशमूर्तिविषयकत्वोपपत्तेः रौद्र्यादिमूर्तिनिष्ठनारायणावतारत्वबोधकवाक्यतः शंखादियुतद्व्यादिसहस्रां तहस्तवत्समस्तभगवद्विग्रहनिष्ठब्रह्मावतारत्व-

बोधकत्वेन ब्रह्मणोरूप कल्पनेत्यादि वाक्यसंदर्भस्य वलीय-
यस्त्वेन प्रवलवाक्यानुरोधेनैवदुर्वलवाक्यस्यनेतव्यस्त्वात् य-
त्तूक्तं ब्रह्मशब्दस्यसामान्यशब्दत्वेनतत्रापर्यवसानत्व योग्यात्
तद्विशेषणात्वदृष्टेश्चेत्यादिस्तदपिनोपपद्यतेतथाहि नहिं ना-
रायणोपनिषत्सुब्रह्मशब्दस्य स्वतंत्रस्य कारणवाचकत्वमवता-
रित्व बोधकत्वंवाश्रूयते येनपशुच्छागन्यायेन नारायणशब्दवाच्ये-
तत्पर्य्यवसानतास्यात् नापि† नारायणपर्य्यायविष्णवनेकसह-
स्रनामतुल्य रामनामसमतदधिकं वानारायणनाम माहात्म्यंश्रूयते
स्मर्यतेवा येनस्वोपनिषदिस्वसमाभ्यधिकं विशेषशब्द मनुपल-
भ्योपनिषदंतरीयस्वसमाभ्यधिकविशेषशब्दवाच्ये पर्यवस्येत-
नापि श्रीरामोपनिषद्यवतारिपरत्वेनदृष्टस्य सामान्यशब्दत्वेनाव
गतस्य ब्रह्मशब्दस्य तत्रावतारि परविशेषशब्दमनुपलभ्योपनि-
षदंतरदृष्टावतारिपर नारायणेतिविशेषशब्द वाच्य एव पर्यवसा-
नत्वमुपपद्यतेउभयोः सामान्यविशेषशब्दत्वात् सामानार्थपरत्वाच्चे
त्यादिकमपि वाच्यंसंदिग्धोपक्रमस्य तदुपसंहारवाक्यानिर्णीत-
स्यैवतत्समानार्थकनिश्चितार्थोपनिषदंतरवाक्येननिर्णेतुंयोग्यात्
प्रकृतेतूपक्रमदृष्टावतारिपरब्रह्मेतिसामान्य शब्दस्यतदुपसंहार-
चरममंत्रसमूहवाक्यावगतसर्वरूपित्वसूचितसर्वावतारित्वपररा-
मेतिविशेषशब्द वाच्येपर्यवसानत्वोपपत्तेरेवं तत्राछागशब्दवाच्ये-
पर्यवसितस्य तत्रत्यपशुशब्दस्येवाकांक्षाविरहात्पुनरन्यत्रापर्यव-

† नारायण नामत्रयगत ।

सानत्वानुपपत्तेश्च नापि प्रकरणादिविरोधेनस्वप्रकरणीयं विहा-
यान्यत्र तत्पर्यवसानत्वमुपपद्यते नाप्येकत्रवाक्ये ब्रह्मशब्दस्य
नारायणविशेषणत्व दृष्टयातत्समान्यादुपनिषदंतरदृष्टा अपि-
ब्रह्मशब्दाः तस्यैववाचका इत्यनुमातुंशक्यं नृसिंहोब्रह्मभ-
तीतीत्थं ब्रह्मशब्दविशेषितेनृसिंहादावतिव्याप्तेः किं वहूक्त्या-
खादिरत्वादिवत्संयोगपृथक्त्वेनयोब्रह्मशब्दः ब्रह्मवाइदमग्र-
आसीत्सत्यं ज्ञानमनंतब्रह्मयो वेदनिहितंगुहायांसोश्नुतेसर्वान्
कामान् सहब्राह्मणाविपश्चिता ब्रह्मविद्ब्रह्मैवभवति ब्रह्मसन्
ब्रह्माप्येतीत्येवमादि श्रुत्युक्तः सदेवसोम्येदमग्र आसीत्-
आत्मावा इदमग्रआसीदित्येवमादिजगत्कारण पर श्रुत्युक्त
सदादिशब्दैकार्थतांगतः स्वातंत्र्येणस्ववाच्यस्य जगत्कारणत्वं
ब्रह्मविज्जीवप्राप्यत्वंच वोधयन् नृसिंहोब्रह्मभवति नारायणपरं
ब्रह्मेत्येवंतत्रतत्र नृसिंहादिविशेषणत्वेनतत्तत्संयोगं प्राप्यतत्र-
त्यप्रातीतिक प्राकृतजलजन्तुसिंहादि बुद्धिनिरासपूर्वकंब्रह्म-
त्वबुद्ध्युत्पादनेनतद्ब्रह्मावतारत्वं दृढयन्नर्थतः स्ववाच्यस्य-
तत्तद्रूपित्वेन तत्तदवतारित्वं सूचयन्तस्यैवस्ववाच्यस्य श्रीरामो-
पनिषदि ब्रह्मणोरूपकल्पनेत्यादिनासर्वरूपित्वेन सर्वावतारित्वं
स्फुटयन्प्रकरणादिभिरुपक्रमोपसंहारादि लिंगैश्च इतिरामपदे-
नासौपरब्रह्माभिधीयतइत्यनयाश्रुत्याच रामशब्दवाच्येपर्यवसितः
सन्रामाख्यस्यपरस्यब्रह्मणः सर्वावतारित्वं वोधयतीतितस्यपुन-
रन्यत्र पर्यवसानत्वानुपपत्तेः नारायणपरश्रुतीनामनुवादकत्वा

च्चद्वयोरवतारित्वानुपपत्तेश्च योब्रह्मांडस्यांतर्बहिर्व्याप्नोतियो-
विराट् महार्णवेशयानोप्सुमांत्वंपूर्वमजीजनइतिश्रुतिस्मृतिभ्यां
श्रीरामस्य नारायणरूपधारित्वावगमाच्च नारायणपरवाक्यमपि
नारायणपर्य्यायस्य श्रीरामस्यैव रुद्राद्यवतारित्वंबोधयतीति-
कारणदृष्ट्या चाक्षीराब्धिशायिन्यवतारित्वमारोपयति जगत्क-
रणात्क्षीराब्धि सकाशादवतारिणः पृथगुक्तौतस्वरूपेताद्विक-
भेदप्रसक्तेरितिसुष्टुविचरणीयंतदेतंयद्यपिप्रसिद्धास्वीशावा-
सकेनाद्यासुदशसुब्रह्मोपनिषदाद्यासुचद्वापंचासत्सुचेतोऽन्यदी-
दृशंद्वयादिसहस्रांतहस्तवदनन्तावतारावतारित्वबोधकंबचनं-
नश्रूयतेतथापियद्युक्तासुप्रसिद्धासुअनुक्तास्वप्रसिद्धासुचोपनिष-
त्सुकदापितथाभूतंवाक्यं दृश्येतदर्शयेत्कश्चित्तदातदपिवाक्य
मुक्तानुक्त युक्तिभिः ब्रह्मपरश्रुतिबलीयस्त्वेनराम नाममहा-
त्म्यबलेन च नारायणपरश्रुतिवत् ब्रह्मपरश्रुत्यविरोधेनश्रीराम
परत्वेन नेतव्यं सर्वासामुपनिषदन्तर्गतकारणवाक्यानामेक-
वाक्यतायोग्यात् मूलकारणत्वस्य द्विनिष्ठत्वानुपपत्तेश्च सह-
स्रशब्दस्यानंत्यबाचकत्वास्मृत्यावेदेषुसहस्रावयवेभ्योऽधिकावय-
वत्वाश्रुत्याच्चद्वयादि सहस्रांतहस्तवद्भगवद्विग्रहेषुतद्विग्रहत्वा-
वच्छिन्नस्यांतर्गतत्वोपपत्त्याचद्वयादिसहस्रांतहस्तवतांब्रह्मावता-
रत्वबोधकत्वेन सर्वोत्कृष्टयाः प्रत्यक्षश्रुतेः श्रुत्यंतरस्य तत्स-
माभ्यधिकार्थ वाचकत्वासंभवेनाप्रसिद्धाच दुर्बलत्वोपपत्तेश्च ॥
कथंपुनः ॥ ब्रह्मणोरूपकल्पनेत्यादिवाक्यस्यप्रकरणादिभिः

श्रीरामपरत्वंसुष्ठूपपद्यते इतिचेत्तस्य श्रीरामैकोपनिषदि श्रवणे- न तत्प्रकरणगतत्वावगमात् ॥ तत्रत्यब्रह्मशब्दस्यतु सामान्य- शब्दत्वेनावगतस्य कस्मिंश्चित् विशेषेपर्य्यवसानत्वयोग्यत्वेपि ॥ सतिस्वोपनिषदिविशेषोपस्थापकेविष्णुसहस्रनामसदृशे अनंत- भगवन्मंत्राधिकेरामशब्दे उपनिषदंतर्गत तन्न्यूनशब्दवाच्ये पर्य्यवसानत्वायोग्यतयास्वप्रकरणीयसर्वोत्कृष्टविशेष शब्दवाच्ये श्रीरामएवपर्य्यवसानत्वयोग्याच्च ॥ इतिरामपदेनासौपरब्रह्माभि- धीयतइतिउपनिषदुपक्रमेरामनाम्नः परब्रह्मभिधायकत्वं श्रूयते- यस्मात्यत्परब्रह्मरामचन्द्रश्चिदात्मकः इत्यादौ ब्रह्मरामयोरभेद- त्वाभ्यासाच्चचिनमयेऽस्मिन्महाविष्णौ चिन्मयस्याद्वितीयस्य- ब्रह्मणोरूपकल्पनारामचन्द्रः चिदात्मकः धृत्वाव्याख्याननिर- तश्चिन्मयः परमेश्वरः इत्येवमुपक्रमादौचिन्मयत्तत्वस्य ब्रह्मराम- शब्दवाच्यत्वदर्शनाच्च अयमात्माब्रह्मसदारामोहमिति ब्रह्मपद- स्थाने रामपदप्रयोगाच्च सर्ववाच्यस्यवाचकइत्यत्रश्रुतं श्रीराम- स्य सर्वशब्दवाच्यत्वमप्यन्यथानुपपद्यमानंतस्यरामस्य कारण- वाक्यगतस्यापि ब्रह्मशब्दस्यवाच्यत्वं सूचयतियस्मात्सर्वांतर्गत- त्वेसतिसर्वावतारिणएवसर्वरूपित्वेन सर्वशब्दवाच्यतोपपत्तेः स- र्वशब्दवाच्यस्य सर्वरूपित्वेनसर्वावतारित्वस्याप्युपपत्तेश्च चरम- मंत्रा अपि श्रीरामस्यतत्तद्रूपित्वबोधनद्वारासर्वांतर्गतत्वं सर्वा- वतारित्वंप्रकाशयंतियस्मात् श्रीरामनाम्नोऽनंत भगवद्विष्णु- नामतुल्यत्ववचनमप्यन्यथानुपपद्यमानं युगपत्तद्रामवाच्यस्य-

भगवन्नामांतरानेक वाच्यसदृशत्वसूचनेन सर्वकारणत्वमुपपादयतियस्मात् सत्यंज्ञानमनंतं ब्रह्मेत्यादिश्रुतीनां रमंतेयोगिनोनंते इत्याद्यत्रात्य श्रुतीनां चैकवाक्यतोपपद्यतेयस्मात्। रमंतेयोगिनोनन्ते सत्यानंदेचिदात्मनि ॥ इतिरामपदेनासौपरंब्रह्माभिधीयते। चिन्मयस्याद्वितीयस्यनिष्कलस्या शरीरिणः ॥ उपासकानां कार्य्यार्थंब्रह्मणोरूपकल्पने त्यत्रायत्परंब्रह्मरामपदेनाभिधीयते तस्यैवरामपदाभिहितस्यरामाख्यस्याद्वितीयस्य ब्रह्मणोरूपकल्पनोपासकानां कार्य्यार्थमित्येव मन्वयनिष्पत्तेः रामाख्यस्यैवब्रह्मणः सर्वावतारित्वनिष्पद्यते यस्मात्तस्मादुक्तानुक्ताहेतुभिः ब्रह्मणोरूपकल्पनेत्याद्याश्रुतिः श्रीरामेपर्यवस्य तस्यैवावतारित्वं ज्ञापयतीतिनिश्चयात्तस्य ब्रह्मशब्दस्य तत्रामपरत्वं निर्वाधमुपपद्यते तत्रैवं सति ब्रह्मवाइदमग्रआसीत् सत्यंज्ञानमनंतं ब्रह्मसर्वंखल्विदंब्रह्मेत्यादि कारणवाक्यगतो ब्रह्मशब्दः सर्वशाखाप्रत्ययन्यायेन श्रीरामएवपर्यवस्य तत्रतत्रतस्यैवमूलकारणत्वं प्रकाशयति सएवतदवतारभूतमत्स्य कूर्म्मवाराह नृसिंह श्रीकृष्णनारायणादि शब्दानां विशेषणत्वंप्राप्यतत्तत्सजातीयत्वेनतत्रतत्रप्रासामुत्कृष्टमत्स्यत्व कूर्मत्व वाराहत्वाद्भुतसत्वमनुष्यत्व जलजंतुत्वादि प्रातीतिकांबुद्धिंप्रतिषिध्य तस्यतस्य च ब्रह्मत्वंस्फुटयतीत्यवगम्यते स्वर्णादिशब्दवत् यथास्वर्णैक वाचकः स्वर्णशब्दः कटक कुंडलादिविशेषणत्वं प्राप्यतस्यतस्य रजतत्वादि बुद्धिनिरासपूर्वकं जातरूपत्वेन स्वर्णविकारत्वंस्फु-

टयन्नर्थात् स्ववाच्यस्यकटककुंडलादिरूपित्वंज्ञापयति तथाब्रह्म-परब्रह्मशब्दोपि तत्तद्विशेषणत्वंप्राप्य तत्रात्यप्रातीतिकमनुष्य-त्वादि बुद्धिनिवृत्तिपूर्वकं तस्यतस्य च ब्रह्मकार्यत्वं स्फुटय-न्नर्थात् स्वावाच्यस्य मत्स्यकूर्म्म कृष्णनारायणादिरूपित्वं-ज्ञापयतीति निर्वाधंराद्धांततदेवमत्र श्रीरामस्यकारणवाक्यगत ब्रह्मपरब्रह्मशब्दवाच्यत्वनिश्चयेनसर्वशाखाप्रत्ययन्यायेन उप-निषदंतरीयकारण वाक्यगतस्य ब्रह्मशब्दस्यपरब्रह्मशब्दस्य चतत्रैवपर्यवसानत्वयोग्यात् पुनर्मूलकारणत्वस्यद्विनिष्ठत्वानुप-पत्तेः कारणवाचकानांशब्दांतराणां चोक्तन्यायेनतत्रैवपर्यवसान त्वयोग्यात् सर्वासामुपनिषदामपि श्रीरामतापनीयोपनिषदैक-वाक्यतायोग्याच्चसर्वा अप्युपनिषदः तत्रत्याविष्णु नारायण-वासुदेव नृसिंहकृष्णशिवरुद्रादयः कारण वाचकाः शब्दाश्च श्रीरामेसर्वशब्द वाच्यत्व श्रुत्यापिसर्वशब्दवाच्यत्वेन ज्ञातेपर्य-वस्यतत्रातत्रतस्यैववहुरुपिणः सर्वकारणत्वंद्योतयंतीतिपरतत्व-जिज्ञासुभिर्वोधव्यं ननुभवतु नारायणाद्युपनिषत्प्रतिपाद्यत्वं तत्तच्छब्दवाच्यत्वं च श्रीरामस्य ॥ श्रीरामनारायणादीनाम-वतारत्व श्रुत्याश्रवणेनएकत्वोपपत्तेः ननुतस्यश्वेताश्वतर रुद्रो-पनिषदादि प्रतिपाद्यत्वं शिवरुद्रादिशब्दवाच्यत्वं चोपपद्यते । शिवादीनांतदवतारत्वाश्रवणेन तदभेदत्वानुपपत्तेरितिचेत्सत्यं तथापिशिवशंकरपरमेश्वरादिशब्दवाच्यस्य श्रीरामाराधकत्वश्र-वणेन नारायणाद्रुद्रोजायते नारायणादेकादशरुद्राः समुत्पद्यंते

इत्याभ्यासतः द्विविधानामपिरुद्राणां नारायणजन्यत्वावगमेन चशिवशंकररुद्रादि शब्दवाच्यस्य श्रीराममंत्रोपदेशेन काशीमृतप्राणिमोक्षकारित्वश्रुत्या काश्यधिपरुद्रस्य नारायणन्यूनत्वेन तज्जन्यत्वोपपत्तेः नारायणादिशब्दवाच्यस्य श्रीरामस्य शिवशंकररुद्रादि शब्दवाच्यजनकत्वाधिपत्वनिष्पत्तेः तज्जातत्वेनतदाराधकत्वेन चरुद्रस्य नतस्य कश्चिज्जनिता न चाधिपइत्यादिश्रुतिप्रतिपाद्यत्वानुपपत्तेः ब्रह्मरुद्रादयोजीवेश्वरभेदेनद्विधा-तत्रजीवभूतस्य रुद्रस्यनारायणा जन्यत्वमुपपद्यते नतुपरमेश्वर भूतस्येत्यादिशैवोक्तीनां प्रदर्शित रुद्राऽऽराधकत्वाद्यटकश्रुतिविरोधेनश्रुतिविरोधेनाप्रमाणत्वोपपत्तेश्चकारण वाचक शिवरुद्रादिशब्दानां कार्यभूतस्याराधकस्य च शिवरुद्रादेर्वाचकत्वानुपपत्त्या श्वेताश्वेतरोपनिषद्यपि किं कारणं ब्रह्मकुतोस्मजाता इतिकारणवाचक ब्रह्मशब्दोपक्रमेण तत्रस्थशिवादिशब्दानां वृह्मशब्दपर्यायत्वेन कारणवाचकत्वोपपत्त्या चव्रह्मशब्दवाच्य वाचकत्वनिष्पत्तेः श्रीश्चते लक्ष्मीश्चपत्न्याविति लक्ष्मीपतित्वलिंगेन श्रियोरमण सामर्थ्यादित्युक्त्वा च सर्वथा श्रीरमणसमर्थस्य सर्वकारणस्य श्रीरामस्यश्वेताश्वतर प्रतिपाद्यत्वावगमात् न तत्समश्चाभ्यधिकश्चदृश्यते नतस्यप्रतिमास्तियस्यनाम महद्यशइति तत्रैवमहद्यशश्चन्नामाभिधेयस्याप्रतिमत्वेनानुपमेयत्वेन स्वस्वसमाभ्यधिकरहितत्वं चश्रूयतेयस्माच्चरामनाममहद्यशोत्रन्नामांतरस्ययशोनश्रूयतेयस्माच्च श्रीरामस्यसर्वावता-

रित्वेन स्वसमाभ्यधिकरहितत्वमुपपद्यते । नैतद्यशोरघुपत्तेः सुरयाञ्चयात्तलीला तनोः ह्यधिकसाम्यविमुक्तधाम्नः ॥ इतितस्य तथात्वंस्मर्यते च चिन्मयस्याद्वितीयस्येतिश्रूयतेच तस्यतत् अद्वितीयत्वंयस्मात् यस्माच्च मूलकारणत्वस्यद्विनिष्टत्वांगीकारे तद्बोधकश्रुत्योः परस्परंविरोधेनाप्रमाणत्वापत्यातद्दृष्टांते न सर्वासामप्युपनिषदामप्रमाणत्वमापद्यते॥ तस्मात् सर्वशब्दवाच्यस्य श्रीरामस्यैवश्वेताश्वतराद्युपनिषदामपिप्रतिपाद्यत्वनिष्पत्तेः शिवशंकरमहेश्वरेशानादिशब्दानां सामान्यशब्दवाच्यकारण वाक्यगतशिवशंकरे शानमहेश्वर रुद्रादिशब्दानामपिवाच्यत्वं रामस्यैवोपपद्यते एवंदुर्गाभवानीकाल्याद्याः याः शिवादिपत्नीत्वेनतच्छक्तित्वेन च प्रसिद्धास्तासांस्वपतिस्वामिनः श्रीरामस्यशेषत्वमुपपद्यते येतुकारणवाक्यगताः दुर्गादिशब्दाः स्वस्ववाच्यस्यसर्वकारणत्वं बोधयंतितेमूलकारणत्वस्य द्विनिष्ठत्वानुपपत्त्या शिवादिपत्नीवाचकत्वमसहमानाः जानकीरामयोरैक्यात् सर्वकारणतयासर्वशब्द वाच्यायां श्रीजानक्यांपर्यवस्य तस्या एव सर्वकारणत्वंद्योतयंतीतिमंतव्यं सर्वासामुपनिषदामेक वाक्यत्वाऽविरोधायाऽन्यथा सर्वासांतासांपरस्परं विसंवादित्वेना प्रामाण्यतास्यात एवंयेकेचित्कारणवाचकत्वेन सूर्य्यगणेशादि शब्दास्तत्रतत्रश्रूयंतेतेसर्वेप्युक्त रीत्यातत्रैवपर्यवस्य तस्यैवतथा त्वंद्योतयंतीतिसमस्त वेदनिर्विरुद्धं राद्धांतंनिखिलवेदानामेक वाक्यतायोग्यात् नचवेदस्यदेवतांतर परत्वमुपपद्यते ब्रह्मणो-

रूपकल्पनेत्यादिवाक्यवत् उपनिषदंतरेषुदेवतांतर परवाक्य-
स्याश्रवणात् असंभवाच्च तथापियदिकश्चित् तद्वाक्य ब्रह्मणो-
रूपकल्पनेत्यादिवत् स्वेष्टदेवविषयकं वाक्यांतरंकल्पयित्वास्वो-
पनिषदि लिखित्वा च दर्शयेत्तदासमानार्थकद्विवाक्ययोर्वा-
च्यभेदांगीकारेतयोः परस्परविरुद्धार्थकत्वेनाप्रामाण्यापत्त्या
तद्दृष्टांतेन सर्वासामप्युपनिषदामप्रमाणत्वापत्तेः प्रत्यक्षब्रह्मणो-
रूपकल्पनाइतिश्रुत्यपेक्षयाऽप्रत्यक्षायाः श्रुतेर्दुर्बलत्वेन तया-
प्रत्यक्षश्रुत्या तद्बाधाच्च उपनिषद्लिखित कल्पिततादृशवाक्य-
स्यतुकैमुत्यन्यायेन हतत्वादनादरणीयं तत् एवमशेष वेदगत-
कारण वाक्यानामेकार्थपरत्वेसति इतिहासपुराणादीनां वेदो-
पबृंहणत्वेन तद्गतकारण वाक्यान्यपिवेदवाक्यवदेकत्रैवपर्य-
वस्यतस्यैवकारणत्वं बोधयंतीत्यवगंतव्यं नचैवंतस्य सर्वशब्द-
वाच्यत्वे श्रीरामतन्नाम्नोर्वाच्यवाचकत्वनियमव्याहतिरित्या-
शंकनीयं सर्वशब्दानां तद्वाचकत्वेपि सर्वशब्द कारणत्वेन-
रामनाम्नस्तन्मुख्य वाचकत्वोपपत्तेः सर्ववाच्यस्यवाचक इतितथै-
वश्रुतेः सर्ववाच्यस्यकारणस्य तस्य तस्य सर्ववाचककारण
रामनामवाच्यत्वोपपत्तेश्च विश्वरूपस्यतेराम विश्वेशब्दाहि वा-
चकाः तथापिमूलमंत्रस्तेविश्वेषां बीजमक्षयमितितथैवस्मर-
णाच्च ॥ ननुसर्वा अपि श्रीरामनारायण नृसिंहगोपालशिव-
रुद्राद्युपनिषदः नारायणादीनां जगत्कारणत्वं बोधयंत्यः सर्वेषां-
भगवद्विग्रहाणां पृथक् पृथक् जगत्कारणत्वंप्रतिपादयंति त-

त्कुतस्त्वयातथैव सर्वेषांपृथक्त्वेनजगत्कारणत्वंनित्यत्वंचनोप-
पाद्यते येनसर्वाश्च्प्युपनिषदः स्वार्थलभंतिवितिचेच्छृणु नहि-
तासांनारायणादिषु प्रत्येकस्वतंत्र्येण जगत्कारणत्व बोधने-
तात्पर्यः किंतुतत्रतत्रोपनिषदितत्तद्भगवन्नाम विशेषमुच्चार्य तत्त-
द्वाच्य स्वरूपविशेषस्य जगत्कारणत्वप्रतिपादनेन सर्वेषांभग-
वन्नाम्नां तत्तद्वाच्यविशेषाणां च नित्यत्वंसर्वोत्कृष्टत्वं च विज्ञा-
प्यपुनस्तेषां तत्वतः एकत्वंतन्नाम्नां च पर्यायवाचित्वं विज्ञाप-
यितुं तत्रतत्र जगन्नारायणादुत्पद्यते नारायणेलीयते च जग-
न्नृसिंहादनुष्टुभाच्चोत्पद्यते नृसिंहे अनुष्टुभेवालीयते जगत्
कृष्णादुत्पद्यतेतत्रैवलीयते इतीत्थमेकवचननिर्देशेनसर्वेषांमेक-
त्वंबोधयंत्य एकस्यैवजगत्कारणत्वंसूचयंतिअन्यथाजगत्कारण-
त्वस्यबहुनिष्ठत्वानुपपत्तेः बहुकारणत्वपरवाक्यानां परस्परविसं-
वादित्वेनाप्रामाण्यंस्यात् यदितुतासांपार्थक्येन तत्तज्जगत्कारण
त्व बोधनेतात्पर्यः स्यात्तदाजगन्नारायणादुत्पद्यतेतत्रैवलीयते
इत्येवंनारायणोपनिषदि जगन्नृसिंहाच्चजायते तत्रैवलीयते इत्येवं
नृसिंहोपनिषदि जगत् कृष्णादपिजायते तत्रापि च लीयते इ-
त्येवंगोपालोपनिषदि च प्रत्युपनिषद्वाक्यं च शब्दस्यापिशब्दए
वोपादानंस्यात् अथवा जन्यजगद्विभागीकृत्यएतज्जगन्नारायणा-
ज्जायते एत्ततुनृसिंहात् एतन्नारायणेलीयते एत्ततुनृसिंहेकृष्णे-
त्वेतदित्येवंतत्रतत्रोपनिषदिश्रूयेत् तदाप्रथमपक्षे कदाकस्माज्जा-
यतेकदातुकस्मात् कदाचकुत्रलीयते कदाचकुत्रेतिसंदेहा निव-

र्त्तकत्वेन द्वितीयपद्योतुकस्यजन्यविभागविशेषिकोऽजनिष्टकस्य-तत्राकोवायोयंस्वजनकं स्वामिनंस्मृत्वासंसारान्मुच्येदित्याद्यनेक शंकाऽनिवर्त्तकत्वेन च वेदे उन्मत्तप्रणीतत्वं विप्रलिप्सत्वं चप्रस-ज्जेत तथाचसतिवेदव्यतिरिक्तोपायादिबोधकस्याभावेन स्वश्रेय-उपायमज्ञात्वासर्वमपि जगद्भ्रंसेत तस्मादुक्तरीत्यातत्तन्नामधेय-विशेषवाच्यस्य जगत्कारणत्वोक्तोपास्यत्वं तत्तन्मंत्राज्जगदुत्पत्या-दिकत्वकथनेन तत्तन्मंत्रस्य चोपास्यत्वंवदंत्यः वाच्यवाचकयोः समानधर्मकत्वेनाभेदत्वंसूचयित्वातत्तदुपासनयासंसारनिवृत्तिबो-धयंतः विष्णुनारायण नृसिंहकृष्णादि नाम्नांपर्यायिवाचित्वंत त्तद्वाच्यविशेषस्य च तत्वतएकत्वंज्ञापयितुं कारणवाक्येषुतदा-हूरेकोहवै नारायणआसीन्नान्यः कश्चित्सोऽब्रवीदहमेकएवाऽऽ-संवर्त्तानि वर्त्तिष्यामि च नमत्तोन्यः कश्चित्यदातमस्तन्नदिवा-नरात्रिर्नसन्नचासच्छिवएवकेवलः नतत्समश्चाभ्यधिकश्चदृश्यते नतस्यप्रतिमास्तियस्यनाममहद्यशःसदेवसोम्येद मग्रआसीत् ब्रह्मवाइदमग्रआसीत् एकमेवाद्वितीयं ब्रह्मेत्यादिष्वेकवचन-निर्देशेनएकस्यैवतत्तद्रूपित्वेन तत्तन्नामवाच्यत्वोपपत्तेः सर्वना-मावाच्यत्वंसूचयित्वा तथासूचितस्य तस्यविशेषरूपविज्ञानाय सर्वरूपाविष्कारित्वेनरामपदाभिहितस्यरामाख्यब्रह्मणएव सर्वाव तारित्वंसर्वशब्दवाच्यत्वंचस्फुटयामासुः उपासकानां कार्यार्थं ब्रह्मणोरूपकल्पना सर्ववाच्यस्यवाचक इत्याद्याश्रुतयःअत्रा-परः प्रकरांतरेणाशंकते ननुसामान्यशब्दत्वेन ज्ञातस्यब्रह्म-

शब्दस्य परब्रह्मशब्दस्यचनैकत्ररूढ़ित्वमुपपद्यते येनैकस्यैवसर्वो-
पनिषदुक्त सर्वकारणत्वमुपपद्येत तस्यसाधारण्येन तत्तद्विशेष-
शब्दसामानाधिकरण्येन तत्तद्वाच्यविशेषवाचकत्वदृष्टेः पशु-
शब्दवत् यथासामान्यशब्दत्वेन ज्ञातः पशुशब्दः अश्वगर्दभ-
छागादिषुसर्वेषुपर्यवसितः नैकत्ररूढ़ित्वमुपयातीत्यतः कथंतस्य-
रामैकपरत्वमुपपाद्य तस्यसर्वावतारित्वं सर्वोपनिषत्प्रतिपाद्यत्वं
चासकृद्ब्रवीषीति चेदुच्यतेपशुशब्दस्याश्वादिसाधारण वाचक-
त्वेपियथापशुनायजेतेत्युक्तः पशुशब्दः छागोवामंत्रवर्णादित्यु-
क्तस्यसन्निहतस्य छागेतिविशेषशब्दस्यवाच्ये पर्यवस्य तमेवया-
गांगत्वंनिश्चाययति तथाब्रह्मशब्दस्य तत्तद्विशेषणत्वेन तत्तद्वा-
चकत्वसाधारण्येन सामान्यशब्दत्वेऽवगतेपिब्रह्मणोरूपकल्पने
त्युक्तोब्रह्मशब्दः स्वप्रकरणगतस्यसन्निहतस्य इतिरामपदेनासौ-
परब्रह्माभिधीयते इतिश्रुत्याच चरममंत्रैश्च स्वपर्यायवाचित्वेन
निश्चितस्य रामशब्दस्य वाच्येपर्यवस्य तस्यैवसर्वावतारित्वं विज्ञा-
पयतीतिनिश्चित्यपश्चाद्बहूनांद्वयोर्वादिकारणत्वानुपपत्त्या कार-
णवाक्यगतस्य तस्यान्यत्रापर्यवस्य तदन्यास्यादिकारणत्वबोध-
कत्वानुपपत्तेः न नृसिंहादिशब्दसामानाधिकरण्यं प्राप्यनृसिं-
हादीनामादिकारणत्वं वोधयति किंतुदैत्येश्वरस्यवधायाखिल
लोकोत्पत्तिस्थितिविनासकारिणाऽपूर्वतनुग्रहणंकुर्वता नृसिं-
हरूपमाविष्कृतं तत्तुहिरण्यकशिपोर्विष्णुरूपमित्येतन्नमनस्य-
भूत् निरतिशयपुण्यजात समुद्भूतमेतत्सत्वमिति विष्णुपुरा-

णोक्तरीत्यातत्रनृसिंहेप्राप्तांनिरतिशयपुण्यजातसमुद्भूत सत्व-
रूपांबुद्धिंप्रतिषिध्य तस्यब्रह्मत्वोक्त्या ब्रह्मावतारत्वंप्रकाशयति-
स्वर्णादिशब्दवत् व्याख्यातमेतत् प्राक् येत्वेतमस्मन्मतमज्ञात्वा
ज्ञात्वा वायतोवाइमानिभूतानिजायंते येन जातानि जीवंतिय-
त्प्रयंत्यभिसंविशंति तद्ब्रह्मजन्माद्यस्ययतः सत्यंज्ञानमनंतंब्रह्मे-
तिश्रुतिसूत्रोपपन्नं जगज्जन्मादिहेतुत्वं सर्वदाऽपरिछिन्न ज्ञाना-
नंदादिमत्वं च ब्रह्मत्वमिति ब्रह्मत्वलक्षणद्वयमवलंव्योपास्यां
तरानुरक्तास्तत्तद्भक्तास्तत्रतत्रोपनिषदि श्रुतंस्वस्वोपास्यस्य-
तत्तन्मंत्रस्य च जगज्जन्मादि हेतुत्वंहेतूत् कृत्यतस्यतस्य च
ब्रह्मत्वसाधनपूर्वकमादिकारणत्वमुपपादयंति तन्नोपपद्यते उक्ते-
नहेतुजगज्जन्मादिहेतुनान्यतरस्यतथात्वोपपादने तेनैवहेतुना
तदृष्टांते न तदन्यस्यापि तथात्वोपपत्त्या तेषांवाहुल्येनादि
कारणत्ववचनव्याघातात् एतन्नानावताराणां निधानमिति-
पौराणिकस्य नारायणावतारित्व विषयकवाक्यस्यतुसहोवाचा-
ब्जयोनिर्त्रोऽवताराणां श्रेष्ठोऽवतारः कइत्यादि श्रुत्यनु-
रोधेनतत्रोक्तरौद्र्यादिद्वादशमूर्त्तिविषयकत्वेन नेतव्यत्वाच्च
ननुतथापि श्रीकृष्णस्यद्वादशमूर्त्यंतर्गत्वात् मथुरायांस्थिति-
र्ब्रह्मन्सर्वदामेभविष्यति॥ तस्यामधिष्ठितः कृष्णरूपीपूज्यस्त्वया-
सदेति तत्रैव नारायणस्य श्रीकृष्णरूपित्व श्रवणाच्च एषनारा-
यणः साक्षात् क्षीराब्धिनिकेतनः। नागपर्यंकमुत्सृज्येह्यागा-
तोमथुरांपुरीमिति ॥ तथैवस्मरणाच्चतस्य श्रीकृष्णकारणत्व-

मुपपद्यते इतिचेन्नेत्याहुरपरे कुतएकोहवैनारायण आसीत्। तन्नाभिहृदांबुजाज्जातोब्जयोनिरित्यादिश्रुतेः क्षीराब्धिशायिविषयिकत्वोपपत्त्यातस्येतिहासपुराणादौसंकर्षणस्यानिरुद्धस्यवावतारत्वेनोक्तस्यनारायणस्य वसुदेवात्मजश्रीकृष्णकारणत्वानुपपत्तेः नारायणपरश्रुतिर्नस्वार्थपराकिंतु श्रीकृष्णगतप्रातीतिकमनुष्यत्व बुद्धिनिरासार्थामापत्यबुद्धिमवृथाकृष्णेसर्वात्मनीश्वरेइति तद्विषयिकप्रातीतिक बुद्धिप्रतिषेध वचनात्तथा च श्रीकृष्णनिष्टनारायणकार्यत्वबोधकश्रुतेरर्थांतरपरत्वोपपत्या-एकोपिसन् बहुधायोविभातीत्यादिश्रुतिवलेन श्रीकृष्णस्याप्यवतारित्वोपपत्तेः एकोहवैनारायणआसीदित्यस्या अप्यनुवादकत्वेन प्रकरणिनः श्रीकृष्णस्यानुवादेन तस्यैवावतारित्वं स्फुटयतीतिश्रीरामचन्द्रवत श्रीकृष्णस्यापिस्वयमवतारित्वेसत्येवावतारत्वमुपपद्यते इत्युक्तवतः प्रतिनैतदप्युपपद्यतेइतिवयं-ब्रूमः इतिहासपुराणादि वाक्यस्यवेदविरोधेनार्थांतरपरत्वेनेतव्येपि वेदवाक्यस्यस्वार्थबोधने प्रमाणांतरनिर्पेक्षस्यपौरुषेयबचनविरोधेनार्थांतरपरत्वा वक्तव्यत्वात वेदवाक्यस्य तद्वाक्यांतर विरोधेनैवार्थांतरपरत्वोपपत्तेः वेदोपिकथमयुक्त मुक्तवानित्यपि न वाच्यंतस्यनियोज्यानुयोज्याऽविषयत्वात् वैदिकप्रातीतिकदोषस्यतद्वाक्यान्तरावष्टंभेनैवपरिहर्त्तव्यत्वाच्च नहिवेदवाक्यमयुक्तं किंतुतदुपवृंहणवाक्यार्थाज्ञत्वं तदर्थविचाराप्रमादत्वं वा तव तत्तथात्ववचने मूलंयतोनागपर्यंकमुत्सृज्येति तस्यनारायणस्य

नागपर्यंकत्वेन संकर्षणस्वामित्वस्मृत्या श्रौतस्य नारायणस्यमु-
ख्यवृत्या श्रीकृष्णकारणत्वमुपपद्यते न च कुत्रापि श्रीकृष्ण-
स्यावतारित्वं श्रूयते यद्विरोधेनापिनारायणपरवाक्यस्यार्थांतर-
परत्वमुपपद्येत नवातद्विषयक वाक्यस्यानुवादित्वेपि श्रीकृष्णा-
नुवादित्वमुपपद्यते कारणपरवाक्यस्य तत्कार्य्यानुवादित्वानु-
पपत्तेः श्रूयते च तत्रैव श्रीकृष्णस्यनारायणकार्यत्वं तस्यामधि-
ष्ठितः कृष्णरूपीतिनापि नारायणशब्दः सामान्यशब्दोयेनापि
कथंचिच्छ्रीकृष्णे पर्यवस्य तस्यकृष्णस्य रौद्र्याद्यवतारित्वं
वोधयेत्तस्यतथात्वं वोधयन्नप्यवतारित्वस्य द्विनिष्ठत्वानुप-
पत्त्यास्वपरवाक्यस्य स्ववाक्योत्कृष्टाद्वितीयव्रह्मपरवाक्यानु-
सारित्वोपपत्तिद्वारा श्रीकृष्णनाम्नोपि श्रीरामपरत्वमुपपाद्येत-
नचाद्यापिवैदिकस्य श्रीकृष्णशब्दस्य कृष्णविषयकत्वेनका-
रणवाचकत्वंनिश्चीयते येन सर्वशाखाप्रत्ययन्यायेनापिकारण
वाक्यगतोनारायणशब्दस्तद्वाच्येपर्यवस्येतसर्वशाखाप्रत्ययन्या-
येनवलात्तस्यकारणवाचकत्वस्वीकारेपिनसत्ववाच्यस्य कारण-
त्वंवोधयितुंशक्नोति श्रीकृष्णकारणनारायण नामानुसारित्वे-
नतस्यकृष्णस्योक्तन्यायेन नारायणपरत्वोपपत्तेः पुनःतस्योक्त-
रीत्या नारायणपरत्वोपपत्तावप्यवतारित्वस्य द्विनिष्ठत्वानुपपत्त्ये-
स्याद्युक्तरीत्यानारायणनाम्नोपिश्रीरामपरत्वोपत्तेः अतः उक्तै-
र्हेतुभिः श्रीकृष्णनिष्ठनारायणावतारत्व श्रुतिविरोधेनचएकोपि-
सन्वहुधायोविभातीत्यादिश्रुतयः महतः परममव्यक्तमव्यक्तात

पुरुषः परः पुरुषान्नपरः कश्चिदिति तथा महानव्यक्ते लीयते अव्यक्तमक्षरेलीयतेऽक्षरंतमसि लीयतेतमः परेदेवेएकीभवतीत्यादि परमपुरुष परश्रुतिसमानार्थं कत्वमवलम्ब्य "यस्मात्क्षरमतीतोहमक्षरादपि चोत्तमः। अतोस्मिलोकेवेदेच प्रथितः पुरुषोत्तमः॥ इत्यादिस्मृतयोपि नतस्यावतारित्वमुपपादयितुं शक्नुवंतीति न कथंचिदपितस्यावतारित्वंनिष्पद्यते नापिनारायणावतारित्व परश्रुतिरपि ब्रह्मावतारित्वपरश्रुतिविरोधेनशक्नोति नारायणस्यावतारित्वमुपपादयतुमतोऽवतारित्वस्यमुख्यत्वेन द्विनिष्ठत्वानुपपत्तेः ब्रह्मपरप्रबलश्रुतिविरोधेन नारायणपरश्रुतेरर्थांतरपरत्वोपपत्या ब्रह्मशब्दभिहितस्यैवसाक्षादवतारित्वनिष्पत्तेरवतारिणामनुवदंति नारायणपरश्रुतिः सर्वावतारि ब्रह्मानुवादेन रौद्रादिद्वादशमूर्त्तीनामपि तत्कार्यत्वंद्योतयतिउपासकानां कार्यार्थमिति सामान्यवचनेनोपासकत्वावछिन्नोपास्यमुर्त्तित्वावछिन्नानां सर्वेषांब्रह्मावतारत्व सूचनातद्दयादि सहस्रांतहस्तवद्ब्रह्मावतारेभ्यः कस्याप्युपास्यविग्रहस्य ब्रह्मत्वानुपपत्तेः यद्यप्यत्रापि ब्रह्मनामनारायण नामचैकमुभयत्रवाक्यौर्नश्रूयते किंत्वेकत्र ब्रह्मनामान्यत्रनारायणनाम तथापिद्वयोरवतारित्वानुपपत्तेः नारायणः परंब्रह्मेत्यादौ नारायणप्राप्तजलजंतु विषयकबुद्ध्यंन्तर निवृत्तयेतस्य ब्रह्मशब्दविशेषितत्व दृष्टेर्जलजंत्वंतरेषु नारायणपदातिव्याप्ति रूपदोषनिवर्त्तकत्वेन ब्रह्मशब्दस्य नारायणशब्दोत्कृष्टत्वोपपत्तेः ब्रह्मशब्दस्यतु तादृशदोषाना

क्रांतत्वेन प्रयोजनाभावात् कुत्रापिनारायणादिनामविशेषि-
तत्वाद्दृष्टेश्च ब्रह्मशब्दस्यनारायणादिशब्देभ्यः उत्कृष्टत्वावग-
माच्च नारायणपरश्रुतौहवै इतिप्रसिद्धार्थकपदादर्शनात् ब्रह्मपर-
श्रुतौ तददर्शनाच्च ब्रह्मपरश्रुतेरवतारत्वावच्छिन्नानां ब्रह्मावतारत्व
विषयत्वेन वलीयस्त्वाच्चद्वयोः श्रुत्योर्मुख्यार्थकत्वस्वीकारे वेदे-
विप्रलिप्सत्वापत्तेश्चाऽगत्या तस्यास्तदनुवादकत्वं स्वीकृतमित्य-
वधेयंसर्वासु नारायणोपनिषत्सुजगदोतत्वप्रोतत्व ब्रह्मयोनि-
त्वादि क्षीराब्धिशायिलिंगश्रवणेन तद्गतनारायणशब्दस्य
क्षीराब्धिशायिपरत्वोपपत्त्या तद्भिन्नपरतत्वांतरपरत्वानुपपत्तेः ता-
दृश नारायणशब्दस्य ब्रह्मशब्दसमाभ्यधिकत्वानुपपत्त्या ब्रह्म-
शब्दविरोधेन सर्वावतारिमुख्यवाचकत्वानुपपत्तेः एके शैवास्त्वे-
वमाहुर्नारायणोपनिषत्सुयस्य ब्रह्मरुद्राद्यशेषजगदुत्पत्त्यादि हेतु-
त्वंश्रूयते उपनिषदंतरेयस्यकृष्णोमुख्यावतारः श्रूयतेपुराणेषु
यस्यावताराः मत्स्यादयः श्रूयंतेसनारायणः क्षीराब्धिशायि-
हिरण्यगर्भविराडादिशब्दाभिधेयोस्तिनतदन्यः क्वाप्युपनिषदि
नारायणशब्दाभिधेयस्यक्षीराब्धिशायि पृथक्त्वा श्रवणात्तत्द्वि-
षयक वाक्यानामेकवाक्यतोपपत्त्या तस्यक्षीराब्धिशायिपृथक्त्वा
नुपपत्तेश्च तथा हिबृहदारण्ये हिरण्यगर्भावयवेभ्योऽशेषजगदु-
त्पत्तिः श्रूयते नारायणोपनिषदि नारायणाद्ब्रह्माजायते नाराय-
णात्रुद्रोजायते इत्येवंततः सर्वंजगदुत्पत्तिः श्रूयते भागवत-
पुराणे पुरुषशब्दभिधेय क्षीराब्धि शायिनाभ्यंबुजाद्ब्रह्मोत्पत्तिः

तदवयवेभ्यः सर्वजगदुत्पत्तिः तस्यनानावतार कारणत्वं चस्म-
र्यते जगृहेपौरुषं रूपंभगवान्महदादिभिः संभूतं षोड़शकलमादौ
लोकसि सृत्तयायस्य नाभ्यंवुजादासीद्ब्रह्मालोक पितामहः यस्या
वयवसंस्थानैः कल्पितोलोकविस्तरः यस्मादेवसमुद्भूतादेवति-
र्यङ् नरादयः एतन्नानावताराणां निदानं वीजमव्यय मित्या-
दिना उपनिषदंतरे नारायणहृदंवुजाद्ब्रह्मोत्पत्तिः लोकानां तद-
वयवेष्वोतत्वंप्रोतत्वं च तस्यनारायणस्य कृष्णाद्यवतारित्वं च
श्रूयते एकोहवैपूर्वं नारायणोदेवः यस्मिंलोका ओताश्चप्रोता-
श्चतस्यहृत्पद्माज्जातोऽब्जयोनिस्तपयित्वा तस्मैवरंददौ सकामं-
प्रश्नमेववव्रेतंहास्मैददौसहोवाचाब्जयोनिर्बोऽवताराणां श्रेष्ठो-
ऽवतारः को भवतीत्यादौ अन्यत्रापि तस्य श्रीकृष्णकारणत्वं
स्मर्यते एषनारायणः साक्षात् क्षीराब्धिनिकेतनः नागपर्यंक-
मुत्सृज्येह्यागतोमथुरांपुरी मिति वृहन्नारायणोपनिषदि तुनारा-
यणस्य व्रह्मांडांतर्वहिर्व्यापित्वंश्रूयते यच्चकिंचिज्जगत्यस्मिन्दृ-
श्यते श्रूयतेपिवा अंतरवहिश्चततसर्वंव्याप्य नारायणस्थितः
इतिश्रीरामोपनिषदितुविराट शब्दाभिधेयस्य ब्रह्मांडांतर्वहिर्व्या-
पित्वं श्रूयतेयोब्रह्मांडस्यांतर्वहिर्व्याप्नोतियोविराडिति उपपद्यते
ह्येषांवाक्यानामेकार्थं वोधकत्वेनैकवाक्यता उपपद्यते च-
क्षीराब्धिशायिन्योतत्वप्रोतत्वं च लोकानां तेषांतदवयवस्थान
कल्पितत्व स्मृत्यातत्रैवोतत्वप्रोतत्वोपपत्तेः उपपद्यते च तस्यैव-
विराड्रूपत्वेनसर्वात्मकत्वातद्दष्टश्रुतसर्वचराचरपदार्थांतर्वहिर्व्या-

पित्वं । प्राकृतस्य दृश्याद्दृश्यस्य तद् पृथक्सिद्धेः किंवृहन्नारायणोपनिषत्प्रतिपाद्यस्यापि क्षीराब्धिशायित्वमुपपद्यते । सहस्रशीर्षंदेवंविश्वसंभवं विश्वंनारायणंदेवमक्षरंपरमंप्रभुं विश्वतःपरमंनित्यंविश्वंनारायणंहरिं विश्वमेवेदंपुरुषस्तद्विश्वमुपजीवती तितत्रैवतस्य सहस्रशीर्षत्वश्रवणात्विश्वसंभवत्वेनतत्द्धेतुत्वावगमाच्च तत्रैवनारायणपरं ब्रह्मतत्वंनारायणः परः इत्यत्रपरंब्रह्मेतिविशेषणेन नारायणपदस्यमत्स्यादि जलजंत्वांतराति व्याप्तिनिर्वर्तनेनतद्वाच्यस्यनारायणपदवाच्यस्य क्षीराब्धिशायिनः परब्रह्मावतारत्व ज्ञापनात् नायंनारायणशब्दः नरजातसर्वतत्वनिवासिपरः नापिपरवैकुण्ठनिवासिपरः तदुभयपरनारायणशब्दस्यपदार्थांतरेऽतिव्याप्त्यनुपपत्त्या तन्निवृत्तिपूर्वकंपरब्रह्मावतारत्व बोधनैकप्रयोजनकस्यपर ब्रह्मेतिविशेषणस्यवैयर्थ्यापत्तेः अतोवृहन्नारायणोपनिषद्वोध्योपि नारायणः क्षीराब्धिशाय्येव ज्ञातव्यः पुराणेषु क्षीराब्धिशायिनः सहस्रशीर्षत्वादिस्मरणाच्च पश्यंत्यदोरूपमदभ्रचक्षुषासहस्रपादोरुभुजाननाद्भुतमितिनृसिंहोपनिषदि तस्यनृसिंहरूपीत्वंश्रूयतेॐक्षीरोदार्णवशायिनं नृकेसरिणमितिअत औपनिषदोनारायणः क्षीराब्धिशायिसर्वान्तरयामीच नतदन्यः नचतैयोरवतारित्वमुपपद्यते

१ क्षीराब्धिशायीसकाशात् विश्वसंभवत्वेनतत् नाम विश्व संभवं विश्व संभवोयस्मादित्यतद्गुण सम्विज्ञानबहुव्रीहिः बहुहेतुत्वाऽवगमात्

२ क्षीराब्धिशायीअन्तरयामिनोर्नारायणयोः ।

आपो नाराइतिप्रोक्ताआपोवैनरसूनवः ता: तस्यह्ययनंपूर्वंतेन-नारायणस्मृतः ॥ नराज्जातानितत्वानि नारायणीतिविदुर्बुधाः। तस्यतान्ययनंपूर्वंतेननारायणस्मृतः ॥ इतितयोरपिनरावतारत्वस्मरणात्ब्रह्मपरश्रुतेस्तद्बलीयस्त्वेतत्तद्बाधकत्वाच्चन चक्षीराब्धिशायिनोगोपालोपनिषदि नृसिंहोपनिषदिचेत्युमयत्रावतारित्वंश्रूयतेब्रह्मणस्त्वेकत्रैवातस्तदेववाक्यंप्रबलमितिवाच्यंनारायणनिष्ठश्रीकृष्णनृसिंहकारणत्वपरवाक्याभ्यां ब्रह्मनिष्ठसमस्तभगवद्विग्रहकारणत्वपरवाक्यस्यबलीयस्त्वोपपत्तेः नापितत्रद्विहस्तादिकंलिंगमात्रमुपलभते अन्यत्रनृसिंहकृष्णयोर्नारायणरूपत्वंश्रूयतेऽतोलिंगाच्छ्रुतेर्बलीयस्त्वेनतदेव प्रबलंतस्मादित्यपिवाच्यं तत्रापिरूपस्थानांदेवतानां हस्ताशंखादिभिर्युता इतिश्रवणात् उपासकानां कार्य्यार्थमितिवाक्यतो ब्रह्मरूपस्थदेवतानां तदेवतारत्वावगमाच्च देवतानामितिबहुबचनेन तदवतारत्वावच्छिन्नस्य संग्रहाच्च शंखादियुतद्व्यादि सहस्रांतहस्तवत् सु रामाख्यब्रह्मवतारेषु नृसिंहकृष्णनारायणादीनामंतर्गतत्वोपपत्तेश्च शंखादिद्विहस्तादि भगवल्लिंगसहकृतायाः उपासकानां कार्य्यार्थमित्यादिश्रुतेः केवलश्रुतितोबलीयस्त्वनिष्पत्तेः पुनः नारायणशब्दस्यस्ववाच्य परमेश्वरत्वबोधने ब्रह्मशब्दसापेक्षत्वदर्शनात् ब्रह्मशब्दस्य तथात्वेतदनपेक्षत्वदर्शनाच्च ब्रह्मशब्दस्य नारायण-

१ नारायणतत् प्रतिपादकात् बलीयस्त्वेन।

२ अतोहेतोः।

शव्दत उत्कृष्टत्वोपपत्त्यापितद् ब्रह्मवाच्यस्यवाच्यत उत्कृष्टत्व-
सिद्धेश्च किं च यद्यपिनन्दीराब्धिशायिनोमुख्यवृत्त्यामत्स्याद्य-
वतारित्वमुपपद्यतेतथापितस्यसर्वजगत्कारणत्वमुक्त्वातदन्यस्या-
वतारकारणत्वे उक्तेतयोस्तात्विकोभेदप्रतीयते सर्वावतारिण-
एव जगत्कारणत्वस्याप्युपपत्तेस्तस्यै सर्वावतारिणः तथाजग-
त्कारणत्वं कुतोनोक्तमित्यादि काश्चनानाशंकाउत्पद्येरन्यच्च-
भगवद्विग्रहेषुन वास्तविकोभेदोस्ति तद्विषयककारणत्व कार्य-
त्ववचनयोरतत्पूर्वोत्तरावस्थामात्र भेदविषयिकत्वात् अतउक्त-
दोषप्रसक्तिवारणाय तस्य नारायणस्यनानावतारकारणत्वम-
प्युक्तं तथोक्तस्यवास्तविकत्व वारणाय च तत्रैव तस्यहरिशव्द-
वाच्यावतारत्वमुक्तप्रकाशितं च अवताराह्यसंख्याताहरेस्सत्वनि-
धेर्द्विजाइति जगृहेपौरुषंरूपमिति च स्मृतौतुतस्यनारायणस्य-
नरशव्दवाच्यावतारत्वंसूचितं आपोनाराइति प्रोक्ताआपोवैनर-
सूनवः अयनंतस्यताः पूर्वंतेन नारायणः स्मृतः । इति उपप-
द्यते तत् नरशव्दवाच्याऽवतारत्वम् तस्यनराज्जाता आपोनारा-
स्ताअयनंयस्यसनारायणइतिनिरुक्तेः पूर्वेणाऽन्वयः॥ नराज्जा-
तानितत्वानि नाराणीतिविदुर्बुधाः । तस्यतान्यनंपूर्वं तेननारा-
यणस्मृतः ॥ इति स्मृत्यांतर्यामिणोनारायणस्यापि नरावतारत्वा-
वगमाच्च तदाहुरेकोहवै नारायणआसीन्न ब्रह्मानेशानो नापो-
नाग्नीषोमेनद्यावापृथिव्यौन नक्षत्राणि न सूर्यः सएकाकीनर-
एवेतिमहोपनिषदि सृष्टेः पूर्वंएकस्यनरस्यस्थिति श्रवणाच्चनर-

शब्दाभिधेयस्यैवसृष्ट्यर्थं क्षीरार्णवशायित्वेन स्वजातत्वांतर्गत्वेन च नारायणसंज्ञकोपपत्त्या नारायणस्य नरावतारत्वावगमा च्चतत्रत्याएकोहवै नारायण आसीदित्युक्तिस्तु नारायणनाम्नो भविष्यतोपिभूतवन्निर्देशादुपपद्यते अथवा नरस्य क्षीरार्णवशय नान्तरं जगदुत्पादकत्वद्योतिकेत्यवधेयं केचित्तु नरेप्रतीतौ नारौ प्रकृतिजीवौतयोरयनमधिष्ठानं नारायणइतिनिरुक्त्या नरनारा-यणशब्दवाच्ययोरैक्यात् न तत्र कारणत्व कार्यत्व वचनमु-पपद्यते इत्याहुस्तन्न नर प्रतीतनारनिरूपितत्वेन नारायणसंज्ञायाः तद्वाचस्यनाराधिष्ठानत्वस्य चपश्चाद्भावित्वेन नरनारायणस्तच्छ ब्दार्थं तद्वाचोत्तरावस्थात्वावगमान्नारायणस्य नरवाच्यकार्यत्वो-पपत्तेः यद्यपिनरशब्दवाच्यएव नराधिष्ठानभूतः तथापि नार प्रतीति पूर्वकालीनेनरे तदधिष्ठानवचनायोग्यात् तत प्रतीत्युत्त रकाले तदाधिष्ठानत्ववक्तव्यत्वेन तदधिष्ठानत्वस्य- नरोत्तराव-स्थात्वेन नरकार्यत्वमुपपद्यते भगवद्विषयपूर्वोत्तरावस्थयोः कारण त्वकार्यत्वस्वीकारात् एकेतुईयतेऽनेनेत्ययनं 'यंत्यस्मिन्नित्ययनं, इयतेंप्राप्यतेयत्तदयनम् ॥ नराणांजीवानामयनं प्रापकः प्राप्य-श्च आधारश्च यः सनारायणइतिनिरुक्त्या नारायणस्यक्षीरा-र्णवशायिपृथक्विग्रहत्वेन परत्वं सूचयंति तदपिनोपपद्यते श्रुतिस्मृतिषु तादृशनिरुक्त्य श्रवणेन तत्रश्रुतिस्मृति प्रमाणाभा वात् न चैको हवैनारायण आसीदिति सृष्टिपूर्वकालीन नारा-यणश्रुतिरेवतत्रप्रमाणमिति वाच्यंसृष्टेःक्षीरार्णवशाय्युत्तरकाली

नत्वेन तस्यक्षीराब्धिशायिनोपिसृष्टिपूर्वकालीनतयोक्त नाराय-
णशब्द वाच्यत्वोपपत्तेः एकोह वैनारायणोदेवः इतिसमा-
नार्थक क्षीराब्धिशायिपरश्रुतितस्तस्या एकोहवैनारायणः आसी-
दित्यस्याः श्रुतेरपि क्षीराब्धिशायिपरत्वावगमात् लोकोतत्व-
प्रोतत्व तद्भूतपद्म ब्रह्मोद्भूतित्वलिंगेनगोपालोपनिषच्छ्रुत नारा-
यणपरस्यएकोहवैपूर्वंनारायणदेवइत्यादिवाक्यस्य क्षीराब्धिशा-
यीपरत्वावगमाच्चसृष्टिकर्तृप्रकरणेपाठाच्च नारायणशब्दस्य क्षी-
राब्धिशायिपरत्वमुपपद्यते नापि नारायणः परब्रह्मतत्वं नारा-
यणः परः इत्येषाबृहन्नारायणोपनिषत् श्रुतिस्तत् परस्वरूपत्वे
प्रमाणमस्तीतिवाच्यं अत्रत्ययोः परं ब्रह्मेतिपरतत्वमिति चान-
योर्विशेषणयोर्नारायणशब्दस्य मत्स्यादि जलजन्त्वं तराति
व्याप्ति निवारणार्थकत्वेन साफल्यात्केवलनारायणशब्दस्यापर-
स्वरूपत्वेतु उक्तविशेषणयोर्वैयर्थ्यापत्तेः कुतः नराणामयनमु-
पायउपेयश्चेत्यर्थकस्य नरायणशब्दस्यास्ववाच्य समाभ्याधिका-
भावेन कुत्राप्यति व्याप्त्यऽप्रसक्त्यातन्निवारणार्थं कयोरुक्तयो
र्विशेषणयोर्वैयर्थ्यापत्तेर्निर्बाधात अतउक्तातिव्याप्तिनिर्वर्त्तक
त्वेन तयोसाफल्यात् अत्रत्योपि नारायण शब्दः क्षीराब्धिशा-
यिपरः अतोनपरस्वरूपबोधकः कुतः नारायणः परब्रह्मेत्यत्रत्यपां-
नाराआपो अयनं यस्यसनारायण इतीवैदीकीं 'आपोनराइती
प्रोक्ता आपोवैनरसूनवः। अयनं तस्यताःपूर्वं तेननारायणस्मृतः
तथा सृष्ट्वा नारंतोयमंतः स्थितोहं तेनमेनाम नारायणोतीति

रस्मार्त्तां च व्युत्पत्तिं विहाय स्वकल्पितव्युत्पत्या तदुपपादनात्
नचनरतीतिनरः प्रोक्तः परमात्मासनातनः इत्युपायवाचकनर-
शब्दस्य एकोहवैनारायणः आसीति न ब्रह्मानेशानसएकाकी-
नरएवेतिमहोपनिषदि नारायणशब्दस्थाने पाठात् नारायणश-
ब्दस्याप्युपायवाचकत्वेन परतत्वपरत्वमुपपद्यते इतिवाच्यंसृष्टि-
प्रलयप्रकरणेतत्पाठात् नारायणस्यप्रलये सर्वेषांजीवानांस्वांतः
प्रापकत्वोपपत्तेः सृष्टिद्वारामोक्षसाधनज्ञानसाधनसामग्रीकरण
कलेवरादिदातृत्वे परप्रापकत्वोपपत्तेश्चस्वभक्तानां परप्रापकत्वा
द्यायंत्यस्मिन्नित्ययनमितिनिरुक्त्यातुनतस्य प्राप्यत्वमुपपद्यते किं
तु प्रलयावधित्वं नारायणेप्रलीयते इत्यादिश्रुतेः तदेवं-
सृष्टिप्रलयप्रकरणात्क्षीराब्धिशायिपरतदुपबृंहणवचनदर्शनाच्च-
लोकप्रसिद्धेः सर्वोपनिषत्प्रसिद्धेश्चौपनिषन्नारायणशब्दस्य
क्षीरार्णवशायिपरत्वमवगम्यते भागवतेतुतस्य नारायणसंज्ञ-
कत्वे नरोद्भवजलाशयत्वरूपोहेतुरुक्तोब्रह्मणानारायणस्त्वंनर-
भूजलाशयादितिमहाभारतेतुनारायणेन श्रीमुखादेवस्वस्यना-
रायणसंज्ञाप्राप्तौनरजाततोयांतःस्थितिरूपोहेतुरुक्तः सृष्ट्वाना-
रंतोयमंतः स्थितोहंतेनमेनामनारायण । इत्येवमादिवचनै
र्नारायणशब्दस्य विशेषतः क्षीराब्धिशायिपरत्वनिश्चयाच्च-
तस्यनरकार्यत्वंचस्मृतितः स्मृतिपरिकल्पित श्रुतितश्चाववग-
म्यते न च शिष्टैर्नारायणस्योपास्यत्वांगीकारात् शिष्टाचारानु-

---

१ हेतु रूपस्यपूर्वेण निषेधार्थक न कारेणान्वयः।

मितस्मृतिपरिकल्पितश्रुतिप्रमाणात्तस्यैवपरत्वमुपपद्यते इति वाच्यं कल्पितः स्मृतितः कूलसानां आपोनाराइतिप्रोक्तः नराज्जातानि तत्वानीतिसृष्ट्वानारंतोयमंतः स्थितोहंतेनमेनामनारायणः स्यादिति च स्मृतीनांवलीयस्त्वेन नरभूतक्षीराब्धिशायिनारायणपराणां नारायणाद्ब्रह्माजायते इतिएकोहवैपूर्वं नारायणोदेवयस्मिंल्लोका ओताश्चप्रोताश्च तन्नाभि पद्माज्जातोऽब्जयोनिरिति अंतर्वहिश्चतत् सर्वंव्याप्यनारायणः स्थित। इतिनारायणः परंब्रह्मेतिचासांप्रत्यक्षश्रुतीनां शिष्टाचारानुमितस्मृतिपरिकल्पित श्रुतितोवलवत्त्यातत्प्रतिपाद्यस्य नरस्यतत्कारणत्वनिष्पत्त्यातस्य क्षीराब्धिशायित्वनिष्पत्तेश्चकिंचाद्यतनाचार्यांतरवाक्यस्याचार्यांतरेण दूषितत्वात् शिष्टविचारेष्वप्यज्ञानकार्यभ्रमदर्शनात् नारायणस्यहरिनरावतारत्वेनादिकारणत्वंरहितस्यापि तत्कारणत्वस्याविचारेण पुराणादिप्रसिद्धितः स्वकुलदैवताच्च तैस्तदुपास्यात्वांगीकारतोपपत्तेः न च पुराणादिवचनतोपि तस्यमूलकारणत्वमुपपद्यते तत्रैवहि आपोनाराइतितथानराज्जातानितत्वानि तथा। अवताराह्यसंख्याताहरेः सत्वनिधेर्द्विजा॥ जगृहेपौरुषंरूपमादौलोकसिसृक्षये त्येवमादिव्यासादिवचनतोनरहरिशब्दवाच्यस्य तदवतारित्वावगमात् नरहरिशब्दवाच्यस्यैवमूलकारणत्वमुपपद्यते तौतुहरिनरशब्दौ सामान्यशब्दौतद्वाच्या कृत्याद्यश्रवणेन तद्वाच्यविशेषानिश्चयात्तर्हि नारायणशब्दस्यनरशब्दा पृथक्सिद्धेः सान्निध्यात्

नरशब्दोनारायणेति विशेषशब्दवाच्येपर्यवस्यतदवाच्यस्यस्व-
वाच्यत्वं विज्ञाप्य स्वनिष्ठंकारणत्वं उपपादयत्विति चेन्नसामा-
न्यशब्दस्यविशेषशब्दवाच्येपर्यवसानत्वेपिकारणवाचक सामा-
न्यशब्दस्यविशेषशब्दवाच्येस्वकार्येपशुछागन्यायतः पर्यवसान-
स्वादृष्टेः बलात्तथात्वस्वीकारेतस्यापिकार्यत्वापत्या त्वदभीष्टहानेः
नापिनारायणशब्दो नरशब्दवाच्येपर्यवस्यस्ववाच्यस्य नरशब्द-
वाच्यत्वेन कारणत्वमुपपादयत्विति वक्तुंशक्यं विशेषशब्दस्य
सामान्यशब्दवाच्येपर्यवसानत्वादर्शनात्तदश्रवणाच्च यदितूभ-
योरेकतत्वावाचकत्वेनोभावुभयत्र पर्यवस्योभयोः कारणत्वंकार्य-
त्वंबोधयंतौपक्षेनारायणस्यापिकारणत्वं बोधयतइत्युच्यते तदो-
भयोः पक्षेकार्यत्वमपिवाच्यत्वेन नरेपिकार्यत्वमायातं पक्षे किं
च्चैवं सर्वेषांभगवदवताराणां तत्वतऐक्यात् सर्वाण्यपिनरहर्या-
दीनि नामानिसर्वत्रपर्यवस्य प्रत्येकस्यपक्षे कारणत्वंबोधयंतीति
सर्वेषांतात्विकैक्यमभिप्रेत्यैवतास्ता उपनिषदस्तस्यतस्यस्वप्रति-
पाद्यस्य जगत्कारणत्वंबोधयंतीति कृत्वानेत्थमेकस्य सर्वोत्कृष्ट-
त्वंनिर्णेतुंशक्यं नवासनरशब्दोमत्स्यादि षूक्तयुक्त्यापर्यवस्यति
अत्रापि नारायणपक्षोक्तदोषापत्तेः नवान्यत्र नारायणकारण-
त्वेन श्रुतेहरिशब्दवाच्ये पर्यवस्यतिसोनरशब्दोहरिशब्दस्यापि
सामान्यशब्दत्वेन तद्विशेषवाच्यानिश्चयात् अतोन्यत्राऽपर्य-
वस्य न परिशेषात् कारणवाचकशिवशब्दवाच्येपर्यवस्य त-
स्यनारायणकारणत्वं बोधयन् तद्द्वारामत्स्यादि कारणत्वमपि

बोधयति श्वेताश्वतरोपनिषदि किं कारणं ब्रह्मकुतोस्मजाता इतिकारण वाचक ब्रह्मशब्देनोपक्रम्य तदनंतरंयदातमस्तन्नदिवा न रात्रिर्नसन्नचासच्छिवएव केवलइतिशिवशब्दवाच्यस्य-कारणत्वश्रुत्या ब्रह्मशिवशब्दयोः पर्यायवाचित्वेन शिवस्यकारण वाचक ब्रह्मशब्द वाच्यत्वावगमात् यस्मात्परमपरंपरायणं च बृहद्बृंहत्यावृंहयति तस्मादुच्यते परंब्रह्मेति अथर्वशिर्षोपनिषदि तस्यब्रह्मपरत्वश्रवणाच्च सर्वशाखाप्रत्यन्यायेन कारणवाचकानां तत्रैव पर्यवसानत्वयोग्यात्पुनः सर्वव्यापी च भगवान् तस्मात्सर्वगतः शिवः इति तत्रैतस्य सर्वगतत्व श्रुत्या सर्वसरीरित्वेन सर्वशब्दवाच्यत्वोपपत्तेश्च तस्यब्रह्मलक्षणद्वयलक्षितत्वोपपत्तेश्च तत्समाभ्यधिक निषेधश्रवणाच्चेति चेन्नैतदुपपद्यते इतितान्प्रतिवयंब्रूमः तत्रत्यब्रह्मशब्दस्य कारणवाचकत्वेनतत् सृष्ट्यादिकारणत्वबोधकत्वेप्यवतारि वाचकत्वाश्रवणेन तन्मूलकारणत्वानिष्पादकत्वानिष्पादकत्वात् तत्रतस्यसर्वशब्दवाच्यत्वाश्रुतेश्चथर्वशिर्षोपनिषन्मंत्रेपुतस्य नारायणवासुदेवमत्स्यकूर्म्मादि रूपित्वाश्रवणाच्च तस्यसर्वगतत्व श्रुत्याप्रकृतिजीव शरीरत्वोपपत्तावप्यवतारावतरित्वाश्रुत्या चिदचिद्वाचकवाच्यत्वोपपत्तावप्यवतारवाचकवाच्यत्वानुपपत्त्यासर्वशब्दवाच्यत्वानिष्पत्तेश्चतत्समाभ्यधिक निषेधादि श्रुतीनांत्वदुपास्यपरत्वानुपपत्त्या स्वरूपांतरपरत्वोपपादनाच्च-तच्चेदं ब्रह्मशब्दवाच्यत्वं सर्वगतत्वंचभगवद्धिग्रहमात्रसा-

धारणाब्रह्मशब्दस्यनारायणः परब्रह्मनृसिंहो ब्रह्मेत्येवंतत्तादृचक-
सामानाधिकरण्यदृष्टेः तत्रतत्रउपनिषदि तस्यतस्यसर्वव्यापित्व-
श्रुतेश्चपरंतुब्रह्मलक्षणद्वयं शिवऽन्यत्रवान सर्वांगेनपर्यवस्य-
तितस्यतस्य च जगज्जन्मादिहेतुत्वे श्रुतेप्यवतारकारणत्वाश्र-
वणात् क्वचिच्छ्रुतत्यापि तथात्वस्यमुख्यार्थत्वानुपपत्तेश्च-
तत्तत्वरुपसच्चिदानन्दात्मकत्व श्रुतेपितत्रतन्नाम्नो ब्रह्मात्म-
कत्वसच्चिदानंदाख्या त्वाश्रवणाच्चभगवद्विग्रहानांवस्तुतऐक्या-
त्परतत्वस्याख्यंड्यत्वाच्च तत्रन्यूनाधिक्यवक्तव्यानवकाशेपि-
गुणादिवाहुल्य कृत वाचकाधिक्यद्वारैवतत्भगवद्वाच्याधिक्य-
निर्णययोग्याच्चतन्निष्टगुणादिष्वन्यतरावा चकत्वकारित-
नत्वेन तदकेदेशवाचकत्वावगत्या तत्तद्वाच्यस्य परत्वै-
कदेशत्वोपत्तेच्चकुत्रतर्हिलक्षणद्वयंसर्वांगेनपर्यवस्यतिजगत्कारणे-
सर्वावताणिचतदपिकस्योपपद्यते इतिचेत्स्वर्णशिव्दाभिधेयस्या-
वस्थाविशेषाः कटककुंडलादयइवहृद्या दिसहस्रांतहत्तवदव-
ताराः यत्रकल्पितश्रुत्यायस्यावस्थाविशेषाः ज्ञायंतेयस्यच जग-
त्कारणत्वंश्रूयतेमंत्रेषुयस्यचराचररुपित्वं विष्णुनारायणवासुदेव-
मत्स्यकूर्म्मादि शिवरुद्रादिरुपित्वंचश्रूयतेयस्यच सर्वशब्दवा-
च्यत्वंश्रूयतेयन्मंत्रस्य ब्रह्मादिवाचकत्व ब्रह्मात्मकत्वं सच्चिदा-
नंदाख्यात्वंप्रणवकारणत्वमकाराद्यक्षराश्रयत्वं रुद्रोपदेश्यत्वं-
सर्वपापविनाशपूर्वकस्वोपासकमुक्तिदातृत्वं श्रूयतेतस्यैवावता-
तारित्वमुपपद्यते इति यश्चस्वभक्तान्शरणागतान् स्वसांईस्व-

धामप्राप्य तैःसहनित्यं विहरति तस्यैवप्रापकत्वंप्राप्यत्वंचोपपद्यते तच्चैतदुक्तंसर्वंश्रीरामस्यतन्मंत्रस्य च सर्वरूपित्वादिकंब्रह्मादिवाचकत्वादिकं च श्रीरामतापनीयोपनिषदिश्रूयतेउपपद्यते च वेदार्थज्ञैरपि नारायणं जगन्नाथमभिरामंजगत्पतिं कविंपुराणंवागीशं रामंदशरथात्मजमित्यारभ्य सर्वेषांत्वंपरब्रह्मत्वन्मयंसर्वमेवहित्वमक्षरंपरंज्योतिस्त्वमेवपुरुषोत्तमः त्वमेवतारकंब्रह्मत्वात्तोऽन्यन्नैवकिंचन रामःसत्यंब्रह्मरामात्किंचिन्नविद्यते स्मृतहृदयविमानं ब्रह्मरामाभिधानमित्यंतेन श्रीरास्यनारायणादिरूपित्वं तद्रूपित्वेनतत्तन्नामाभिधेयत्वंरामनाम्नो ब्रह्माभिधायकत्वं च स्फुटीकृतंभवति किं चसत्यं ज्ञानमनंतंब्रह्मरमंतेयोगिनोऽनंतेसत्यानंदेचिदात्मनि इतिरामपदेनासौ परंब्रह्माभिधीयते इतिसमानार्थाभिधायकत्वश्रवणादपिरामशब्दस्य ब्रह्मणोविशेषाभिधायकत्वमवगम्यते विशेषशब्दत्वंतुतस्यब्रह्मनिष्ठधनुर्बाणादियुतद्विभुजाद्याकृतिमत्वबोधनेनोपपद्यते किं च सर्वेषुमंत्रवर्गेषु श्रेष्ठंवैष्णवमुच्यते गाणापत्येषुशैवेषुशाक्तशौरेष्वभीष्टदम्। वैष्णवेष्वपिमंत्रेषु राममंत्राफलाधिकाः गाणपत्यादिमंत्रेषु कोटिकोटिगुणाधिकाः॥ विनैवदीक्षांराजेन्द्रपुरश्चर्यांविनैवहि। विनैवन्यासविधिनाजपमात्रेणसिद्धिदाः॥ मन्त्रस्तेष्वप्यनायासफलदोयंषडक्षरः। षडक्षरोयंमंत्रस्तु सर्वाघौघविनाशकः॥ दैनंदिनंचदुस्कृत्यं पक्षमासर्तुवर्षजं। सर्वंहरतिनिः शेषंतूलाचलमिवानलः॥ ब्रह्महत्यासहस्राणिज्ञानाज्ञान-

कृतानिच। कोटिकोटिसहस्राणिह्युपपातकजान्यपि॥ सर्वाण्य-पिप्रणश्यंति राममंत्रानुकीर्त्तनात्। विष्णोर्नाम्नांसहस्राणां तुल्यएषमहामनुः॥ अनंताभगवन्मत्रा नानेनतुसमाकृताः। सहस्रनामतत्तुल्यं रामनामावरानने॥ लौकिकावैदिकाशब्दायेके चित्संतिपार्वति। नामानिरामचन्द्रस्य सहस्रंतेषुचाधिकं॥ तादृ-ङ्नामसहस्रैस्तु रामनामसमंमतं। जपतः सर्वे वेदांश्च सर्वमंत्रा-श्चपार्वति॥ तस्मात्कोटि गुणंपुण्यंरामनाम्नैवलभ्यतेये प्रयो-गास्तंत्रेषुतैस्तैर्यत्साध्यतेफलं। तत्सर्वंसिध्यतिक्षिप्रं रामनाम्नैव कीर्त्तनादि त्यादिषुवेदार्थज्ञप्रणीतवाक्येषु स्मृतिपरिकल्पि-तश्रुतिप्रमाणकेषु यद्भगवन्मंत्रांतरेभ्योपि श्रीराममंत्रस्य सहस्र-गुणाधिक्यं श्रूयतेफलतः कोटिगुणाधिक्योक्त्यापितत् कोटि-गुणाधिक्यमुपपद्यते ततस्ववाच्यसंबंधेनैवोपपद्यमानं स्ववाच्य-स्यमंत्रांतर वाच्यकोटिगुणाधिक्यमुपपद्य तत्रांशांशित्वानुपप-त्तेः कारणस्यकार्येभ्यः कोटिगुणाधिक्योपपत्तेश्च तस्यसर्व-कारणत्वेन सर्वरूपित्वात् सर्वावतारित्वमुपपादयतीत्यतः कार-णवाचकानां तस्यैववाचकत्वयोग्यात् सर्वेपिब्रह्मपरं ब्रह्महरि-नरादयः कारणवाचकास्तत्रैवपर्यवस्य तस्यैवमूलकारणत्वं ज्ञापयंतीत्यवगम्यते महार्णवेशयानोप्सुमात्वंपूर्वमजीजन। इति महार्णवशायित्वोक्त्या श्रीरामस्यहरिनरशब्दवाच्यत्वसूचनात् तथासूचितस्य तात्विकत्वोपपत्तेश्च तत्कुतोमूलकारणत्वस्यद्वि-त्रिनिष्ठत्वानुपपत्तेः हरिनरशब्दयोः सामान्यशब्दत्वेनान्यत्र

पर्यवसानत्वयोग्याच्च सामान्यशब्दवाच्यस्य तत्समाभ्यधिकार्थ कसन्निहितविशेषशब्दद्वारापिनिश्चयः पशुछागन्यायेनकृत-पूर्वः तत्रैवंसतियद्यपिकारणवाक्यगत विष्ण्वादिशब्दानांह-रिनर ब्रह्मादिशब्दपर्यायत्वमुपपद्यते तथातेषुप्रणवस्यसर्वोत्कृ-ष्टत्वंश्रूयतेयथाशंकुनासर्वाणि पर्णानिसंतृणान्येवमोंकारेणसर्वा-वाक्संतृणात्तस्मादोंकारएव सर्वमितियः प्रणवमधीतेस सर्व-मधीत इति च तथापितद्वाच्यस्यविशेषाकारोननिश्चीयते ईदृशः सइतिप्रत्युक्तस्य तत्रतत्रोपनिषदि तत्तद्वाचकत्व श्रवणात्तत्त-न्मंत्रादौदृष्टत्वाच्चनैकवाच्य वाचकत्वेन सामान्यशब्दत्वोपप-त्तेर्न तद्वारापिमूलकारणविशेषाकृतिर्निश्चेतुंशक्यातर्ह्यस्त्वका-रद्वारातद्विशेषा कृतिनिश्चय अकारोवैसर्वावाक्शैषास्वशोंरमा-दि रूपेण बहुरूपाभवतीति तस्यसर्ववागात्मकत्वश्रवणात्तस्य-प्रणवप्रथमाक्षरत्वाच्चयोवेदादौस्वरः प्रोक्तोवेदांते च प्रतिष्ठितः तस्यप्रकृतिलीनस्ययः परः समहेश्वरइत्यत्रअस्यैव प्रणवप्रकृ-तित्वावगमात् अथवामितरेपीतेर्वेत्यत्रमकारस्य प्रणवोत्पत्तिर-लूपावधित्वश्रुत्या तस्यप्रणवप्रकृति लीनस्येत्यत्रापि तस्यैवतत्-प्रणवप्रकृतित्वावगमात् मकारद्वारापि तन् निश्चयोभवति चेन्नतयोरप्यनेक वाचकत्वस्मरणात्तदुच्चारण कालेतद्वाच्यवि-शेषाकृत्यस्फुरणाच्च सामान्यशब्दत्वोपपत्तेः कथंतर्हितन्निश्चय इति चेत् रामशब्दद्वारेतिब्रूमः जपतः सर्ववेदांश्चेत्यत्रसर्ववेद-सर्वमंत्र जपलब्ध फलतः तज्जपपुण्यस्य कोटिगुणाधिक्यो-

त्त्या विष्णोर्नाम्नां सहस्राणां तादृङ्नामसहस्रैस्तु रामनामसमं-
मत मित्यत्रापिकोटिशब्दस्थाने पाठात्बहुवचनान्तत्वाच्चसहस्र
शब्दस्य कोटिशब्द पर्यायत्वोपपत्त्यातस्य भगवन्नामान्तरेभ्यः
कोटिगुणाधिक्यावगमात् स्वभूर्ज्योतिर्मयो जीवत्वेनदेमों-
यस्य रेफारूढामूर्त्तयोरुद्रस्तारकंब्रह्मव्याचष्टेइत्यत्र तस्यसर्व-
मंत्रप्रकाशकत्वप्रणवकारणत्वाकाराद्य त्तराश्रयत्व रुद्रोपदेय
त्व श्रवणात् प्रणवाकारकारणत्वेनापि तस्य सर्वमंत्र कारण-
त्वोपपत्तेर्विष्णवादिवाचकाकारमकाराश्रयत्वे नापितस्यप्रण-
वकारणत्वोपपत्तश्चेओमित्यस्यराममंत्रस्योंकार कारणत्व ज्ञापक
तापिनीयश्रुतेः योवेदादौस्वरः प्रोक्तोवेदान्ते च प्रतिष्ठितः
तस्यप्रकृतिलीनस्य यः परः स महेश्वरः इत्यस्यवेदादिस्वरः ॐ
कारः तस्योंकारस्यप्रकृतिः कारणं राममंत्रः षडक्षरस्तारक-
संज्ञकस्तत्र लीनस्यसतः यः परं ॐ कारेण राममंत्रे वाच्य-
त्वेन सर्वोत्कृष्टः श्रीरामः समहेश्वरः इश्वराणामपीश्वरइत्य-
र्थकत्वनिष्पत्तेरत्रापि वाक्येराममंत्रस्येवोंकारकारणत्वसिद्धे-
श्च तदुच्चारणसमानकाले तद्वाच्यविशेषाकृति स्फुरणाच्च
तस्यसर्व वाच्यवाचकत्व श्रुत्या मूलकारणमुख्यवाचकत्वो-
पपत्तेश्च तस्यराममंत्रस्य सर्वमंत्रकारणत्वेन तद्वाच्यस्य सर्व-
मंत्रवाच्य कारणत्वोपपत्तेः धनुर्धर द्विभुजाद्या कृतिमांस्तद्वाच्य
एवसर्वावतारी जगन्मूल कारणमितिनिश्चीयतां ननुमंत्रान्त-
रेभ्यः स्यात्तदा धिक्यंयः प्रणवमधीते स सर्वमधीते ओमित्ये-

तदक्षरं सर्वं तस्यौप व्याख्यानंभूतंभव्यं भविष्यदिति सर्वमों-
कार एवयञ्चत्रिकालातीतं तदप्योंकार एवयच्छंद सामृषभो
विश्वरूपः छंदोभ्योध्यमृतात्सं वभूवेत्यादि श्रुतिप्रकाशितस-
र्वोत्कृष्टत्वात् प्रणवात्कथं तदाधिक्यमुपपाद्यते काशीमृतप्रा-
णिनः प्रतिप्रणवानुपदेशेतुनतदप कृष्टत्वंहेतुः किंतु वर्णत्र-
यवाह्यान्प्रतितदनधिकारइति चेन्नयइदमथर्व शिरो ब्राह्मणो-
धीतलेनप्रणवानामयुतं जप्तंभवतीत्यादिश्रुतितः ससर्वमधीत
इत्यादिश्रुततन्महत्त्वस्यापकृष्टत्वा व गमाज्जीवत्वेन नेदमों-
यस्यइत्योमिति चा नयोर्वह्नि वीजप्रणवकारणत्व कार्य्यत्वज्ञा-
पकोपनिषद्वाक्ययोर्गुणोपसंहारन्यायेनमांडूक्यादि दृष्टप्रणवप-
रवाक्यैक वाक्यताकरणेनसर्वत्रतदाधिक्योपपत्तेः प्रणवस्य
परत्वेसत्यपितत्रशूद्राद्यनधिकारत्वेनासौ लभ्यतयातदकृतार्थी
करणेन तदंशेप्रणवोत्कृष्टत्वस्यवैयर्थ्यात् षडक्षरेतुप्रणवकारणे
अत्रा हिजन्तोः प्राणाषूत्क्राम माणोपुरुद्रस्तारकं ब्रह्मव्याचष्टे इति
जन्तुमात्राधिकारत्वश्रुत्यातस्य सौलभ्येन सर्वजीव मोक्षप्रदत्वा
वगमात् परत्वसौलभ्योभयगुणवत्वेन गुणतोपि प्रणवाधिक्यो
पत्तेश्चप्रणव महत्व वाधकाथर्वशिर्षमहोपनिषद्वाक्यवत् षडक्ष
रमहत्व वाधक वचना श्रवणाच्चाशेषवेदसर्व मंत्रवीजभूतात्प्र
णवादपि प्रणवबीजत्वादि गुणेन षडक्षरस्योत्कृष्टतोपपत्तेः
न च छांदोग्ये द्वितीयप्रपाठके प्रजापतिर्लोकानभ्यतपत्तेभ्योऽ-
भितप्तेभ्यस्त्रयीविद्यासंप्रास्रवत्तामभ्यतपत्तस्या अभितप्ताया

एतान्यक्षराणिसंप्रास्त्रवन् भूर्भुवः स्वरिति तान्यभ्यतपत्तेभ्यो-ऽभितप्तेभ्यः ॐकारः संप्रास्त्रवत्तद्यथाशंकुनासर्वाणिपर्णानिसं तृणान्येवमोंकारेणसर्वावाक्संतृणा ॐकार एवेदँ सर्वमित्य-त्रप्रणवस्य लोकवेदादिसारांशत्वश्रुतेरैकारणकत्वमुपपद्यतेत्वया कथंतद्विरुद्धातदुत्तपतिरुच्यते वह्निवीजादित्यादिकमाशंकनीयं तस्यप्रणवस्यवह्निवीजविवर्त्तत्वेनतयोर्नामतो भेदप्रतीतावपिव स्तुतोभेदानंगीकारात्हठवादिनंप्रतितुतेभ्योऽभितप्तेभ्यःॐकारः संप्रास्त्रवदित्यत्रतस्यस्फुटंनोत्पत्तिः श्रूयतेनचानुत्पतितस्संदिग्धं हिततश्चत्रतुजीवत्वेनेदमोंयस्येत्यत्रस्फुटंवह्निवीजात्तदुत्पतिःश्रूयते इत्यसंदिग्धमिदंसंदिग्धासंदिग्धयोरसंदिग्धस्यवलीयस्त्वेनतदनु-सारेणेतरस्यनेतव्यत्वात् तेभ्यः ॐकारःसंप्रास्त्रवादित्यस्यतेभ्यो-भूर्भुवःस्वरितितेभ्यॐकारःसंप्रास्त्रवत्प्रादुर्वभूवेत्यर्थकत्वनिष्पत्तेः छांदोग्यवाक्यमपिनतस्यतत्कार्यत्ववाधकं किंचतत्रापिअभ्यंत-पच्छ्रुतेः संप्रास्त्रवच्छ्रुतेश्चअभितप्ताश्मनः लोहोत्पत्तिवत्ॐकार-स्यव्याहृतिस्त्रवत्वेनतत्कार्यत्वोपपत्तेः यथाकाशीमरणान्मुक्तिः ऋतेज्ञानान्नमुक्तिरित्यनयोःपरस्पर विरुद्धार्थकत्वेनप्रतीयमान-योर्द्वयोरेक वाक्ताकरणेन काशीमरणे ज्ञानान्मुक्तिरित्य-यंनिर्विरोधोर्थो निष्पादितः पंडितैः तथारामतापनीयछांदोग्य-पठितयोः द्वयो श्रुत्योरेकवाक्यताकरणेन व्याहृतिद्वारावीजा-त्तदुत्पत्तिंब्रूमः वस्तुतस्तुछांदोग्येपितत्रलोकवेदव्याहृतिप्रणवेषू-

१ नकारणं कश्चिदस्य भसाव कारणकः

त्तरोतरस्यै पूर्वपूर्वसारांशत्वेनतत्रतत्रतत्तद्व्याप्तिंनिर्दिश्ययथाशं-कुनेत्यादिनातस्यसर्ववागात्मकत्वेन सर्वरूपित्वेन च सर्वकार-णत्वं प्रकाशितंभवति उपनिषदंतरेपितस्यसर्वकारणत्वं श्रूयते-यत्रतुनश्रूयते तत्रापिसर्वशाखाप्रत्यन्यायेन तस्यप्रणवस्यतदुप-पद्यते अत्रोपनिषदितुतस्यवह्निवीजकार्यत्वंश्रूयते जीवत्वेनेद-मोंयस्यइत्योमितीति च तथाचसर्वासामुपनिषदामेक वाक्य-तायोग्यात् सर्वशाखाप्रत्ययन्यायेन गुणोपसंहारन्यायेन वाछां-दोग्याद्यासूपनिषत्सुजीवत्वेनेदमों यस्यइत्योमित्यस्योपसंहारेण-तत्रतत्रसर्वत्रसर्वरूपित्वात् सर्वस्यकारणमोंकारः ओंकारः ओं-काररूपित्वाच्चतत्कारणं वह्निवीजमित्यवगम्यते यद्यपिमितरे-पीतेर्वेतिश्रुतेः अकारोकारसहिततल्लय हेतुमकारात्मकप्रणव-कारणत्वेनवन्हिवीजावयवमकारस्य सर्ववागात्मकाकारोकार-लयस्थानंत्वेन सर्वकारणत्वोपपत्तेः तद्वह्निवीजावयवस्याका-रस्यतु सर्ववागात्मकत्व श्रुत्यैवसर्वकारणत्वोपपत्तेः तयोरकार-मकारयोराश्रयत्वेनरेफस्य च सर्वमंत्रकारणत्वोपपत्तेः अक्षरा-त्मकस्यरामनाम्नः प्रत्यक्षस्यसर्वमंत्रकारणत्वनिष्पत्तेः कार्य-कारणांशत्वेनतज्जपफलांशत्वोपपत्त्यास्वरूपतः फलतश्चतस्य-मंत्रान्तरेभ्यः कोटिगुणाधिक्यमुपपद्यते श्रुतिस्मृतिभिः जीव-त्वेनदमोंयस्य ब्रह्मादीनांवाचकोयं सर्ववाच्यस्यवाचकः एतद्-

१ उत्तरोतरस्याति वेदस्य लोकसारांशत्वेव्याहृतिवेद सारांशत्वं प्रणव-स्य व्याहृति सारांशत्वं तत्रैत्यर्थः

वोपास्यंज्ञेयंच यएतारकंब्रह्मणोनित्यमधीते विष्णोर्नाम्नांसह-
स्राणां अनंताभगवन्मंत्राजपतः सर्ववेदांश्च सर्वमंत्राश्चपार्वति
तस्मात्कोटिगुणं पुण्यंरामनाम्नैवलभ्यते इत्यादिभिः तथापितत्
प्रत्यक्षरवाच्यनिर्णयावसरे अकारमकार वाच्यानामपि सर्वका-
रणत्वंरकारवाच्य तुल्यत्वेनप्राप्तंतद्वारणायरेफारूढामूर्त्तयः स्युः-
शक्तयस्तिस्र एवचेतिश्रुतिप्रवृतिः तथाचराचर वाचककारणा-
नामकारादीनामप्याऽऽश्रयत्वेनरेफस्याशेषवाचक निदानत्वो-
पपत्तेः चराचरकारणानांसशक्तिकानां ब्रह्मविष्णुवादीनामपिका-
रणत्वोपपत्त्यारेफवाच्यस्यैवादि कारणत्वमुपपद्यते ननुवाचको-
त्कृष्टत्वप्रदर्शनद्वारावाच्यपरत्वोपपादनेकोहेतुरि तिचेत्तयोस्तादा-
म्यसंबंधः सोपिकुतोज्ञायतेउपपत्तिभिःयुक्तिभिःश्रुतिभिश्चतथाहि
नामोच्चारणमात्रेणतद्वाच्यस्याभिमुखीभवनमन्यथा नुपपद्यमानं-
तयोस्तादात्म्यभावंसूचयति नचतस्यपर्णादिवत् घृतादिवद्वा-
कारोदृश्यतेयेनस्ववाच्ये नावयवावयवीभावः आधाराधेयभावो-
वोपपद्यते नापिकृपादयादिशब्दोच्चारणा समकालेतदाश्रयद्रव्य-
स्याभिमुखीभवनंदृश्यतेयेनतद्दृष्टांतेननाम्नोपिस्ववाच्येनसहगु-
णगुणीभावउपपद्यते यदितुकृपादयादिशब्दवाच्यानां गुणानां-
स्वाश्रयात्ताद्द्रव्यात्स्वरूपतोभिन्नत्ववत्भगवन्नामवाच्यमपिकिं-
चिद्वस्तुभगवत्स्वरूपतः पृथक्श्रूयतेस्मर्यतेवातदाकृपादिशब्दा-
नांस्ववाच्याश्रयपुरुषबोधनामकृपालुर्दलुः ज्ञानीशक्तिमानित्ये-
वंमत्वंतप्रयोगवत्स्वस्ववाच्याभेदगतस्यभगवन्नामोपिभगवत्स्वरु-

पवोधनायमत्वंते नप्रयोगःस्यात् न च तथाश्रूयते स्मर्यतेवा न च तयोःसंबंधः उपपद्यते नाम्नःस्ववाच्यतःपृथक् सत्ताकत्वात् अतः कृपादिशब्दोच्चारणकाले तत्तद्वाच्यगुणानां झटितिबोधात्स्वस्ववाच्येनसहतेषांतादात्म्यभावोपत्तिवत्भगवद्विशेष नामोच्चारण समकालेपितद्वाच्यविशेषस्यझटिति वोधात्तस्यापिस्ववाच्यविशेषणतादात्म्यभावः उपपद्यतेकिंचनृसिंहादिमंत्रानामनुष्टुभादीनां जगदुत्पत्तिहेतुत्वश्रवणादपिपरतत्व वाच्यवाचकयोस्तादात्म्यभाव उपपद्यतेयदितुभगवत्स्वरूपावतारायां परस्परमभेदत्ववत्तत्तन्मंत्राणामपि स्वस्ववाच्येनाभेदो नस्यात्तदाकारणत्वस्यद्विनिष्ठत्वानुपपत्तेः तत्तन्मंत्राणांशव्दात्मकत्वेनजडत्वाच्च जगत्कारणत्वंस्वातंत्र्येणनोपपद्यते श्रूयतेच तयोरभेदः सीतारामौतन्मयावत्रपूजाविति श्रीरामोपनिषदिपादामात्राः मात्राश्चपादाइतिमांडूक्योपनिषदिवायुर्यथैकोभुवनं प्रविष्टो जन्येजन्ये पंचरूपोवभूवकृष्णस्तथैकोपि जगद्धितार्थं शव्देनासौपंचपदी विभातीति गोपालोपनिषदि च एकांग संगिनी गंगापावयेदखिलं जगत् अंगप्रत्यंग सुव्यापि नामकिं कर्त्तुमक्षममित्यत्रत्यं अंगप्रत्यंग संव्यापीतीदं पदंस्व वाच्यांग प्रत्यंगाऽभेदत्वं गतंनामेत्ये तदर्थकं नतुतयोर्व्याप्य व्यापकभाववोधकमस्तीत्याशंकनीयं नाम्नो व्यापकत्वेन वाच्याधिक्योपपत्त्या स्वातंत्र्येण तत्रमूलकारणत्वप्रसक्तेः वाच्येपितद् व्यापकत्वेन परि.छिन्नतयाविनाशित्व प्रसक्तेश्चरामत्वत्तोधिकं नामयदुक्तंवपु

मांस्तरेत् विनापिसेतुर्निवाणमपारं भवसागरमित्यादि वचनानि तूपायत्वमात्रेनाम्न आधिक्यद्योतकानि तदुच्चारणेसर्वाधिकारात् सर्वसुलभत्वाच्चतस्य नाम्नः तदपितन्महत्वं वाच्य सम्बन्धकृतं न तु स्वाभाविक मिति यन्नामसंसर्ग वशात् द्विवर्णौ नष्ट स्वरौमूर्द्धिन्गतौ स्वराणांतद्रामपादौ हृदयेनिधाय देहीक कथनोर्ध्वगतिं लभतेति वचनादवगम्यते तत्तुरामनाम्नः स्ववाच्यांगप्रत्यँगाभेदत्वं स्फुटयामास भगवान्पार्वतीपतिः तेजोरूप मयोरेफः श्रीरामांबककंजयोरित्यादिनाश्रुतीरप्याह तथैव-ब्रह्मात्मकाः सच्चिदानन्दाख्याइत्युपासितव्यमित्येषातदेवं निश्चितंस्ववाच्य तादात्म्यभावस्य श्रीरामनाम्नो भगवन्नामान्तरेभ्योपिवहु सहस्रगुणाधिक्य श्रवणमन्याथानुपपद्यमानं स्ववाच्यस्य तत्तन्नाम वाच्येभ्यः सहस्रगुणाधिक्योपपादनद्वारशेषावतारांशित्वेनतत्तत्कारणत्वंबोधयतिश्रूयतेपि च तत्तस्यब्रह्मणोरूपकल्पनेत्यादाविति कारणस्य स्वाशेषकार्यरुपित्वेन युगपदशेषकार्यतुल्यत्वोपपत्तेः कार्यान्तरोत्पादनसामर्थ्येन तदाधिक्योपपत्तेश्च तथोपासकानां कार्यार्थं ब्रह्मणोरूपकल्पनेत्यादि श्रुत्यातत्कारणत्ववागमाच्च 'विष्णोर्नाम्नां सहस्राणां तुल्य एष महामनुः। विष्णोरेकैकं नामैव सर्ववेदाधिकं मतं ॥ तादृङ्नामसहस्रैस्तु रामनाम सममतं। अनन्ता भगवन्मन्त्रानानेनतु समाकृता ॥ वैष्णवेष्वपिमन्त्रेषु राममन्त्राः फलाधिकाः जपतः सर्ववेदाश्च सर्व मन्त्राश्च पार्वति ॥ तस्मात्कोटि गुणं

पुण्यं रामनाम्नैव लभ्यते। श्रीरामस्यकलांशाद्धै अवताराभवन्ति हि कोटिकोटिश्च कार्यार्थे सिन्धौवीचीवद्वैसुनेरि त्यादिस्मृतीनां युक्त्यानुगृहीतश्रुतिमूलकत्वागमात् तत्प्रतिपा द्यमतःश्रीरामः सर्वरूपीतत्तादवसरेतत्तद्रूपविशेषप्रकाशपूर्वकं तत्रतत्राविर्भूयता नि तानि कार्याणि कुर्वंस्तांस्तान्गुणांश्चप्रघट्यन तत्तत्क्रियः-गुणनामः सन् तत्रतत्रोपनिषदि स्मृतौच तथातथागीयते इत्य शेषवेदकारणवाक्यानामेक वाक्यतायोग्यादप्यत्रगम्यते तदेवं स्वरवोपनिषदिभगवद्विग्रहां तरपरावतारित्ववचनाश्रवणात्क्व-चिद्धृतस्यापि तथाविधवचनस्य प्रवलश्रुत्यन्तरविरोधेनार्थान्तर परत्वोपपत्तेः पुराणादिश्रुतस्य तत्तद्विग्रहपरस्यावतारित्व वच-नस्य श्रुतिमूलकत्वोपपादनायतदेव वचनं पक्षीकृत्यतेन वि-मतमिदंवचनं श्रुतिमूलकंशिष्टप्रणीतत्वात्मंत्रादिप्रणीतवाक्य-वदित्येवमनुमितायां तन्मूलश्रुतावपितथैवावतारान्तरपरावता-रित्व वचनैरनुमितानांतन्मूलश्रुतीनांवहुत्वाद्बह्ववतारिपरत्वेन-परस्परंविशंवादितयासर्वासांतासामप्रमाणत्वोपपत्तेस्तदनुमापक-पुराणादिवचनानांतुप्रत्यक्ष श्रुतिविशंवादित्वेनानाशिष्ट प्रणीत-वाक्यवदप्रमाणत्वे वाच्येपि शिष्टप्रणीतत्वेन सर्वथाऽप्रमाणी-कर्तुमनर्हतयातत्रतत्र स्वरूपविशेषेरुच्युत्पादनायतत्कारणभेद-दृष्ट्याकार्यवि ग्रहस्याप्यवतारित्वमुक्तमित्येवं तादृशवचनाना-मर्थान्तर परत्वेन नेतव्यत्वात् पुराणादिश्रुतातत्तद्विषय कावतार-त्ववचनानांतुश्रुतिमूलकत्वेन यथाश्रुतार्थकत्व निष्पत्तेःश्रीरामस्य

तुस्वोपनिषदि सर्वरूपित्व सर्वशब्दवाच्यत्व श्रवणात्तदवता-
रित्वपरपुराणादि श्रुततन्निष्ठान्यावतारत्व परवचनानांतु वेद
मूलकत्वदर्शनाय तान्येववचनानि पक्षीकृत्योक्तानुमाने नानु-
मितायाः श्रुतेस्तुक्लृप्त कल्पितयोः क्लृप्तस्यबलीयस्त्वादि-
तिन्यायेनब्रह्मणो रूपकल्पनेतिस्वोपनिषत्प्रसिद्ध तदवतारित्व
परश्रुतिविरुद्धार्थ कस्यचतादृशवचनस्या शिष्टवचनवदप्रमा-
णत्वे वक्तव्येपिशिष्टप्रणीत वाक्यत्वेन सर्वथा प्रमाणीकर्त्तुम-
शक्यतयामुख्यार्थत्यागेनार्थांतर परत्वेनेतव्यत्वात् नायं राघ-
वोमनुष्यः किंतुविष्णु नारायणाद्यवतारत्वेन परमेश्वर इत्येवं
तत्रत्य प्रातीतिक मनुष्यत्व देवतांशत्वादि बुद्धिनिवृत्यर्थ कत्वे
नार्थांतर परत्वोपपत्तेः यत्तस्य सर्वावतारित्वेन सर्वशब्द वाच्य-
त्वेनानंत रूपित्वेनच चरममंत्रेषु विष्णु नारायण वासुदेव पर-
ब्रह्मपरमपुरुष मत्स्यकूर्मादिरूपित्वं शिवादिरूपित्वंच श्रूयतेते-
नतत्तद्वाचकत्वावच्यत्वंचोपपद्यते तस्यतेनयत्तस्य सर्वोपनिषच्छ्रु-
ताशेष कारण वाक्यप्रतिपाद्यत्वं प्रतिज्ञायते समुपपाद्यते वात-
त्सर्वमुपपन्नंतरं क्वचिद्ब्रह्मशब्दो जीवपरः क्वचित्प्रकृतिविषयकः
क्वचित्तु नृसिंहोभवतिकृष्णः परंब्रह्मनारायणः परंब्रह्मेत्यादौतत्त-
च्छब्दविशेषणीभूयतत्तद्विषयिक प्रातीतिक नृसिंहत्वमनुष्यत्व-
मत्स्यादि जलनिवासी जीवांतरीयबुद्धि निरासार्थकः क्वचि-

१. परश्रुति विसम्वादित्वेनाप्रमाणत्वोपपत्तेरश्रुतिमूलकस्य रामनिष्ठ-
सर्वावतारित्व।

त्स्वातंत्र्येण सर्वकारणत्वबोधकः ब्रह्मणोरूप कल्पनेत्यादीह रेस्तनुभाः ब्रह्मतन्नखज्योतिर्ब्रह्मेत्यादि वाक्यगतस्तु ब्रह्मशब्दो-योग्यवृत्त्या तत्तदनुभासः तन्नखज्योतिश्च व्यापकत्व बोधकः सर्वंखल्विदंब्रह्म ब्रह्मविद्ब्रह्मैवभवति ब्रह्मैवसन्ब्रह्माप्येति आनंदोब्रह्मब्रह्मवाइदमग्र आसीत्ब्रह्मविदाप्नोति परंसत्यंज्ञा-नमनंतं ब्रह्मयो वेदनिहितं गुहायां सोश्नुतेसर्वान्कामान् सह-ब्रह्मणाविपश्चिता उपासकानांकार्यार्थे ब्रह्मणोरुपकल्पनेत्यादि सर्वोपनिषत्कारण वाक्यगत ब्रह्मशब्दाभिहितस्य हरिविष्णु-नारायण कृष्णादिरुपिणः स्वावस्थाविशेषहरिकृष्णादिनख-ज्योतिष्ट्वाद्यनुपपत्तेरित्यतः कारणवाक्यगतो ब्रह्मशब्दः सामा-न्यशब्दत्वात् रामशब्दमहत्ववच्छब्दांतर महत्वाश्रव-णादस्मृतेश्चोपक्रमादि लिंगैपशुद्वागन्येननापि चतस्य श्रीरामपरत्वोपपत्तेश्च सर्व शब्दवाच्यस्य सर्वरूपिणः श्रीरा-मस्यैव वाचकोनान्यस्य मूलकारणस्य बहुत्वानुपपत्तेरि-त्युक्तं तत्र तत्रेत्यव ध्येयं महद्भिः विशेषतः किं सरूपः श्रीराम इत्यपेक्षायां चिन्मय इति स्वयमेवाह श्रुतिः चिन्मयेऽस्मिन्नि-त्यादिना चिन्मयेइत्युपक्रमात् चिन्मयस्या द्वितीयस्येति धृत्वा व्याख्यान निरताश्चिन्मय परमेश्वर.इति यत्परं ब्रह्मरामचन्द्र-श्चिदात्मक इत्याद्यभ्यासात्परं ज्योतिः स्वरूपिणय: सच्चिदा-नन्दाद्वैतैक रसात्म्येत्युपसंहाराच्च तस्य चिन्मयत्वस्य व्यापक-त्वादयोवोगुणाः सन्ति तत्रव्यापकत्वेन चिदचिद्वस्तुमात्रं प्रवि-

तदवतारत्वोक्तोहेतुं सूचयंत्यस्तदन्तर मनादि सिद्धसत्यानंद-चिदात्मक तत्स्वरूपाभिधायकत्वेन रामनाम्नो नादि सिद्धत्व-प्रकाश नद्वारातद्वाच्यस्यसर्वावतारित्वं सूचयित्वा पुनस्तदेव-सूचितंतदद्वैविध्यं स्फुटयामासुः चिन्मयेऽस्मिन्नित्यारभ्य कल्पितस्य शरीरस्यतस्यसेनादिकल्पनेत्यंताश्रुतयः ॥

**चिन्मयेऽस्मिन्महाविष्णौ जातेदशरथे हरौ ।**
**रघुकुलेखिलंराति राजते यो महीस्थितः ॥ १ ॥**
**स राम इतिलोकेषु विद्वद्भिःप्रकटी कृतः ।**

अत्रायमन्वयः रघोः कुलेदशरथविषये महाव्यापकत्वा-दिगुणवत्यस्मिन् चिन्मयेपरत्वेरामाख्ये परे ब्रह्मणिजातेप्रादु-र्भावेसतिभक्तानामनुग्रहार्थमितिशेषः योमहीस्थितः सन्-भक्तानामखिलंरातियश्चमहीस्थितः सन्राजतेसविद्वद्भिर्लोके-षुरामइति प्रकटीकृतइत्यन्वयः अत्रचिन्मयस्याद्वितीयस्य चिन्मयः परमेश्वरः रामचन्द्रश्चिदात्मकइत्यादिषुतद चिन्मयपद-भ्यासात्चिन्मयं ज्योतिर्मयंस्वप्रकाशस्परं तत्वमेव तदुपनिषत्प्रति पाद्यमतस्तद्वाचकमेवचिन्मयइतिपदं विशेष्यं नेतरे हरिमहा-विष्णुपदे तथाभूतेतयोस्तथाभ्यासादर्शनात एकस्मिन्वाक्ये-बहुपदानांविशेष्यत्वानुपपत्त्या तयोर्व्यापकत्वादि गुणपरतया तद्विशेषणत्वे नापिसार्थकत्वोपपत्तेः ननुअस्तुचिन्मयंपदं महा-

---

१. विशेष्यं ।

विष्णुहरिपदेमुख्यनामपरेस्तः इमेतुइतिचेन्न इति रामस्यरामाख्याभुविस्यादित्यस्यां रामस्यैवावतारिणः भुव्यवतीर्य्यदाशरथित्वं प्राप्तस्यतद्गुणकर्मनिमित्तापि रामाख्याभुविस्यादित्यर्थिकायाः श्रुतेविरोधात् रमंतेयोगिनोनंते सत्यानंदेचिदात्मनि इति रामपदेनासौ परंब्रह्माभिधीयते इति तत् मुख्यनामपरोत्तार तन श्रुतिविरोधाच्चवहूनामेक वस्तु मुख्यनामत्वानुपपत्तेश्चतर्हितद्वहुषुगुण नामस्वनयोर्मुख्यत्वसूचके इमेइति चेन्नेदमप्युपपद्यते तयोः तद् व्यापकत्व दुःखहरत्वादि गुणद्वारातद्वाचकत्वेन तद्गुणनामत्वोपयतावपितेषुतन्मुख्यत्वानुपपत्तेः तत् कुतः रघुकुलेखिलंरातीत्याद्याभिः रामपदस्यैवतद्गुणनामप्रकाशनेन तद्गुण नामस्वपि तस्यैवमुख्यतासूचनात्तदपिकुतो ज्ञायते इति चेत् वैष्णवेष्वपिमंत्रेषु राममंत्राःफलाधिकाः लौकिकावैदिकाशव्दाः ये केचित्संतिपावर्ति, नामानिरामचन्द्रस्यसहस्रं तेषुचाधिकं एकैकरामचन्द्रस्य नामसर्वाधिकंमतं सहस्रनामफलदंसर्वाभीष्टप्रदायक मित्येवंवेदार्थज्ञैः शिष्टैस्तन्नामांतराणामपिविष्णवादिनामभ्यसहस्रगुणाधिकत्वस्मरणात्तस्मादनंतरश्रुतिभिःरामपदस्यद्विविधिनिरुक्त्या तस्यैवगौणमुख्यभेदेनतद्द्विविध नामत्वस्फुटीकरणात प्रथमयाश्रुत्यातन्नामधेयप्रकाशनं विनैवचिन्मयवस्तुनः श्रीदशरथविषये

१. वेदप्रमाणाभ्युपगन्तिरित्वं शिष्टत्वं फलसाधनानांशेभ्रान्तिरहितत्वं शिष्टत्वं वा।

आविर्भावोज्ञापित एव तदुपबृंहकैःशिष्टैरपितद्विशेषनामप्रका-
शनं विनैव परतत्व पर्यवसित सामान्यशब्दैस्तदाविर्भावत्व-
ज्ञापनात् सूच्चस्थेग्रहपंचकेसुरगुरौसेंदौनवम्यांतिथौलग्नेकर्क-
टके पुनर्वसुयुते मेषंगतेपूषणिनिर्दग्ध्वं निखिलाः पलाशसमिधो
मेध्यादयोध्याऽरणो राविर्भूतसभूतपूर्वविभवं यत्किंचदेकं मह ॥
इति वेदवेद्येपरेपुंसिजाते दशरथात्मजे इति च ' सासित्तूण
धनुर्बाणपाणिं नक्तं चरांतकं । स्वलीलयाजगत्रातुमाविर्भूत
मजंविभूमि ' तिच 'चैत्रमासेनवम्यांतुशुक्लपक्षेरघुद्वहः ।
प्रादुरासीत्परं ब्रह्मपरं ब्रह्मैवकेवल ' मितिचेत्यादिवाक्यगतै-
रेकं महः परंपुंस अजविभ्वादिभिः सामान्यशब्दैः महाविष्णु
हरिपदेतुचिन्मयपदविशेषणभूते तत्र महाविष्णुपदं चिन्मयस्य
सर्वव्यापकत्वेना शेषचिदचिन्नियामकत्वेन सर्वस्वामित्वं चिद
चितोस्त्वर्थान्तराच्छेषत्वं सूचयित्वास्वगत महदिति विशेषणेन-
च्चिद्रूपव्यापकेभ्योविभ्वादिभ्योपितंव्यावर्त्य तन्मूलकारण-
त्वं बोधयतियत्तूक्तमाकाशादीनां व्यावर्त्तकं तदिति तन्नोपप-
द्यतेतेषां जडानां चिन्मयपदेनैव व्यावृत्तेः श्रूयतेहि महाविष्णु
पदस्य तद्व्यापकत्वगुणद्वारापरमेश्वरपरत्वं नृसिंहतापनीयोप-
निषदि अथकस्मादुच्यते महाविष्णुरिति प्रथमस्य प्रतिवच-
नेयत्स्वमहिम्नासर्वांल्लोकान् व्याप्नोति व्यापयतिस्नेहो यथा
पलपिंड मोतंप्रोतमनुप्राप्तं व्यतिशक्नोति व्याप्यतेयस्मान्न-
जातः परोन्योस्तिय आविवेशभुवनानिविश्वायस्माद्न्यन्नपरं

किंचनास्ति प्रजापतिः प्रजयासंविदानस्त्रीणि ज्योतींषिसच-
तेसषोडाशीतस्मादुच्यते महाविष्णुरित्यत्रयेन विश्वव्यापक-
त्वेन श्रीनृसिंहे महाविष्णुः शब्दः पर्यवसितः तद्विश्व-
व्यापकत्वं तु श्रीराघवस्यात्रैवश्रूयते विश्वव्यापी राघवो
यस्तदानी मन्तर्दधे इति हरि रितितु विशेषणमविधाप-
र्यंत स्वभक्त दुःखहरत्व परं तथा च महाविष्णुपदेन
तस्य सर्वव्यापकत्वेन सर्वनियंतृतयासर्वस्वामित्वं हरिपदेन
स्वभक्तदुःखहरत्वेनाश्रयार्हत्वं चिन्मयपदेन प्राकृतशरीर हि-
त्यंरघुकुले दशरथे चिन्मये जातेइत्येतैः स्वनित्यविग्रहेणैवा-
त्राविर्भावत्वं तेनावतारिणः सतः एवतस्यावतारत्वं ज्ञापितंभवति
ननुमहाविष्णौ जातेइतिश्रुतेः यज्ञेविष्णुः सनातनः इतिस्मृते-
श्च महाविष्णुपदवाच्य एवात्र राघवत्वेनाविर्भूतइ तिचेन्नत-
थैवहरौ जातेइतिश्रुतेः अवताराह्य संख्याताहरेः सत्वनिधे र्द्वि-
जाइति स्मृतेश्चहरिरेवराघवत्वेनाविर्भूत इति वचन प्रसक्त्या
द्वयोरपिवाक्ययोः परस्परविरोधेन तदन्यतरस्यापि स्वार्थ परत्वा
नुपपत्तेः नापितौद्वौमिलित्वा रामरूपत्वं गता वितिवाच्यं चिन्म-
येस्मिन्नितिकारण परैकवचनविरोधात् नापि महाविष्णुहरिश-
ब्दयोः पर्यायवाचिनोर्वाच्यएक एवचिन्मयो दशरथे जातइति-
वाच्यं तथा सत्यन्य तरपदोपादानेनार्थ सिद्ध्यापदांतरोपादा
नस्यैवयर्थ्यात् नाप्युप निषत्पूर्व परवाक्यार्थ विचारेणापित
दन्यतरस्य तत् कारणत्व मुपपद्यते चिन्मयेस्मिन्महाविष्णा वि-

त्यस्याः उत्तरत्र अत्रत्यं चिन्मयत्वं चिन्मयस्य इत्यनूद्य इति रामपदे नासौपरंब्रह्माभिधीयते इति परब्रह्मवाचक रामपद पर्यायस्य ब्रह्मपदस्योपादानात् चिन्मयस्याद्वितीयस्य ब्रह्मण इति यदितु तत्र महाविष्णो हेरर्वा राघवकारणत्वं श्रुत्यभिप्रेतंस्यात्तदा तत्रापि ब्रह्मपदस्थाने महाविष्णुपदस्य हरिपदस्यवापाठः स्यात्नतु ब्रह्मपदस्य किंच इति रामस्य रामाख्या भुविस्यादितीदमेकस्यैव चिन्मयतत्वस्यावतारीदशायामवतारदशायांचरामनामकत्वप्रकाशक श्रुतिवचनं तथातत्व तइतिगौणमुख्यरामनामविभक्तृ वचनोत्तरतनंच श्रुतंरामशब्द निष्ठपरब्रह्माभिधायकत्वं चोभेन्यथानुपपद्यमानेमहाविष्णुहरिशब्दयोर्व्यापकत्वाद्युक्तगुणपरत्वेन तद्गुणनामत्वं सूचयतः मूल कारणत्वस्यैकनिष्ठत्वेनतन्मुख्यवाचकत्वस्याप्येक निष्ठतोपपत्तेः तदपि सच्चिदानंदार्थकराम शब्दनिष्ठमितिइतिरामपदे नासौपरं ब्रह्माभिधीयते इत्यत्ररामपदस्य परब्रह्माभिधायकत्व वाचकत्व श्रवणात् ततोहि यत्परं ब्रह्मरामपदेनाभिधीयते तस्यैव रामाख्यस्य चिन्मयस्याद्वितीयस्य ब्रह्मणोरूपकल्पनोपासकानां कार्यार्थमित्येवं द्वयोः श्रुत्योरन्वयनिष्पत्तेः रामपदस्यैवपरब्रह्म मुख्यवाचकत्वसिद्धेः तदेवसर्ववाच्य स्य वाचकजीवत्वेनेदमोंयस्येत्यादि ऋग्भिः विश्वरूपस्यतेराम विश्वेशब्दाहिवाचकाः तथापि रामनामेदं विशेषांवीजमक्षयमित्यादिस्मृतिभिश्चस्फुटीकृतं भवति यदित्वत्रमहाविष्णुहरिशब्दयोरन्यतरस्य भगव-

न्नामांतरस्यकस्य चिद्वाचिन्मयपरतत्वमुख्यवाचकत्वं श्रुत्यभिप्रेतंस्यात् तदा अथ ततत्व इतिद्विविध नाम विभक्तृवचनानंतरं परतत्वमुख्यवाचक निरुक्ति परमित्थंवाक्यंस्यात् वेवेष्टिसकलं यस्माच्चिदचिदात्मकं जगत्तस्माद्विष्णुपदेनासौ परंब्रह्माभिधीयते इतीत्थं वा नतु रमंतेयोगिनोनंते सत्यानंदे चिदात्मनि इति रामपदेनासौ परंब्रह्माभिधीयते इतीदंवाक्यंभवेत् अवतारपर रामशब्दनिरुक्ति परमिदंवाक्यमिति चेन्न यतः चिन्मये स्मिन्जाते दशरथेइतीदमवतारपरं वाक्यंश्रूयते अवतार नामनिरुक्तिपराणि अथतत्वतइत्यतः प्राक्तनानिरघुकुलेखिलंरातीत्यारभ्यतथा रामस्यरामाख्याभुविस्यादित्येतदंतानि च श्रूयंते तस्माद्राघवगौण मुख्यनाम प्रकाशक अथतत्वतइतीदं वचनंस्वोतरतन वाक्यनिरुक्तस्य रामशब्दस्यचिन्मय परतत्व मुख्यवाचकत्वं निवोध्यस्वपूर्वतन वाक्यनिरुक्तस्य रामशब्दस्य तद्गुणक्रियाद्वारातत्परत्वेन तद्गौणनामत्व सूचनवततन्नामांतराणामपिगौणत्वंसूचयित्वोपक्रमदृष्टयोर्महाविष्णु हरिशब्दयोरपितद्व्यापकत्वादिगुणार्थकत्वेन तद्गुणनामत्वंसूचयतीत्यवगम्यते ननुरघुकुलेखिलंरातीत्यादि ऋग्भिस्तद्गुण कर्मद्वारा रामशब्दस्यदाशरथि परत्वज्ञापनवत् रमंतेयोगिनोइतीयमपि ऋक्सच्चिदानंदात्मक परब्रह्माभिधायकस्य रामशब्दस्य दाशरथिपरत्व

---

१. इतियस्माद्दुःखम विद्यादि भक्तानां हरतिस्वयंतस्माद्धरिपदे नासौपरं ब्रह्माभिधीयते।

सूचनेनतस्य चिन्मयपरब्रह्मत्वंप्रकाशयति नतुतन्निष्ठावतारि-
त्वं नत्रोपक्रमगतमहाविष्णुहरिशब्दयोः परब्रह्मवाचकत्वंवारय-
तिनारायण कृष्णादिपरवाक्यवत् यथानारायणादि पराणिवा-
क्यानि नारायणादिशब्दानां परब्रह्मपरत्वं वोधयन्ति नतु वि-
ष्णवादिशब्दानां तत्परत्वं वारयंतितद्वदितिचेद्भ्रांतो भवानत्रय-
तोनास्माभिर्महाविष्णवादिशब्दानां परब्रह्मपरत्वं निवार्यतेकिं-
तु सत्यंज्ञानमनंतं ब्रह्मेतिब्रह्मशब्दाभिधीयमान सच्चिदादिस-
मस्त वाचकत्वा श्रवणेनतेषां ब्रह्मतादात्म्ये न साक्षाद्यत्तन्मुख्य-
वाच्चकत्वं तन्निवार्यतेनतु तद्व्यापकत्वादि गुणद्वारातत्परत्वं-
तद्द्वारातेषां तत्परत्वस्येष्टापत्तेः तत् कुतः वाच्यैक वाचके-
ष्वेकस्यैव मुख्यवाचकत्वोपपत्या वहूनां शब्दानांमूलकारणैक-
मुख्यवाचकत्वानिष्पत्तेः सूचयंतिहि रमंतेयोगिनः जीवत्वेनेद-
मोंयस्यइत्योमिति च ब्रह्मात्मकाइत्याद्याः श्रुतयःब्रह्मशब्दश-
ब्दितसत्यादि समस्त वाचकत्वेन ब्रह्मतादाम्यप्रासत्वेन च सर्व-
शब्दकारणप्रणव कारणत्वेन च रामशब्दस्य तन्मुख्यवाचकत्वं-
किंचकंठतोपि वदति तस्य सर्ववाच्यस्य वाचक इति श्रुतिःअतो
मुख्यवाचक मुख्यवाच्यस्य तद्गुणकर्मार्थक शब्दवाच्य विष्णु-
हर्याद्यवतारत्वानुपपत्तेरुपक्रमदष्टे महाविष्णुहरिपदे तद्व्यापक-
त्वादिगुणप्रत्वेननीत्वा शब्दांतरवाच्यस्य तदवतारित्व निर-
स्तं इतोप्युपपद्यतेततयतोऽथतत्वतः इत्यस्य पूर्वतनानिवाक्या-
नि रामशब्दस्यात्र रघुकुल आविर्भूत चिन्मयतत्वगुणकर्मार्थ-

कत्व सूचनद्वारातद्गुणकर्ममात्रवाच्यत्वेनतस्य दाशरथेरवतारत्वं सूचयंतितदुत्तरत्यं च वाक्यमनादि सिद्धिसच्चिदानंद स्वरूपाभिधायक रामशब्दवाच्यस्यैव तदवतारित्वं सूचयित्वा शब्दांतर वाच्यस्य तदवतारित्वं वारयति अन्यथातदुत्तरतन वाक्यं महा विष्णु हरिशब्दान्यतर निरुक्तिपरं भूत्वा तदन्यतर वाच्यस्य दशरथात्मजावतारित्वं सूचकं स्यात् नहितस्य तदन्यतर निरुक्तिपरत्वं श्रूयते अपितु रामशब्द निरुक्तिपरत्वमेवातो यथोक्तंमंतव्यं वस्तुतस्तु चिन्मयेस्मिन्महाविष्णावितीयं ऋक्चिन्मये महाविष्णौ हराविति पदैरेतैर्दाशरथेः केवल मनुष्यत्वं निवार्य्यपरतत्वावतारत्वं वोधयति तथा रामस्य रामाख्याभुविस्यादितीयं रामाख्यस्यैव परस्य ब्रह्मणोदाशरथि रामावतारित्वं ज्ञापयित्वामहाविष्णुहरि पदवाच्ययोस्तदवतारित्वंनिवार्य्यतयोर्महाविष्णु हरि पदयोस्तद्गुण कर्मार्थकत्वेन तत् रामाख्यगुणनामत्वं वोधयतिरमंतेयोगिनोनंते सत्यानंदेचिदात्मनि इतिरामपदेनासौपरंब्रह्माभिधीयते इतीयंचसत्यानंदचिदात्मक परब्रह्माभिधायकरामपदवाच्यत्वेन तस्यैवदाशरथेःपरस्व रूपत्वंसर्वावतारित्वं सर्वनिदानत्वं च ज्ञापयति कस्यापिपरब्रह्म व्यतिरिक्तस्यततश्रेष्ठत्वानुपपत्त्या सर्वावतारित्वसर्वकारणत्व परस्वरूपत्वानिष्पत्तेः किंचोपनिषदंतराणि नारायणादीनां शिवादीनां च तत्तद्वाचकानां च जगदुत्पत्यत्यादिहेतुत्वंवोधयंति नतुतेषांतद्वाचकानां च सर्वावतारित्वं प्रणवादि-

कारणत्वं च श्रीरामतापिनीयेयमुपनिषत्तु रमंतेयोगिनोऽनंते-
स्वभूर्योतिर्मयोनंतरूपीस्वेनैव भासतेजीवत्वेनेदमोंयस्यरेफारूढा
मूर्त्तयःस्युः सर्ववाच्यस्य वाचकइत्योमितिचब्रह्मात्मकाः सच्चि-
दानंदाख्याइत्युपासितव्यं एतदेवोपास्यमितिज्ञेयमिति चेत्यादि
कारणपरवचनैः रामशब्दस्य स्वतः सिद्धत्वस्वप्रकाशत्व प्रणव-
कारणत्व सर्वोत्तरकारणाकारमकाराश्रयत्वसच्चिदानंद ब्रह्मवा-
चकत्वतादृश ब्रह्मात्मकत्वतदेकोपास्यत्व ज्ञेयत्वप्रतिपादनद्वारा
शेषभगवन्नाममुख्यत्वंसूचयित्वा सर्ववाच्यस्यवाचक इति कंठ-
तोपितदुक्त्वातेनैवतद्वाच्यस्य सर्वावतारित्वं सूचयित्वाउपासका-
नांकार्य्यार्थंब्रह्मणोरूपकल्पनेत्यादिनाकंठतोपितदुक्त्वापुनस्त
द्गतशंकानिवृत्तयेचरममंत्रैस्तत्सर्वरूपित्वबोधनेनतस्यएकस्यैव-
तत्तद्विषाद्यादिरूपेणाभासमानत्व लक्षणं सर्वावतारित्वंप्रका-
शयामासयस्माच्चचिन्मयेस्मिन् महाविष्णोजातेदशरथे हरावि-
तिप्रथमयैवर्चा दशरथात्मजस्यचिन्मयपरतत्वावतारत्वेन पर-
ब्रह्मत्वंस्फुटमुक्तंभवति तस्मादुपपद्यते रमंतेयोगिनंइत्यस्याऋ-
चःरामशब्दस्यसच्चिदानंदार्थकत्व परंब्रह्माभिधायकत्वप्रकाश-
नेनतद्वाच्यनिष्ठावतारित्वसूचकत्वं नतुप्रथमर्क्षस्फुटीकृतस्य-
तत्परब्रह्मावतारत्वस्य सूचकत्वं प्रकाशकत्वंवास्फुटार्थस्यपुनः-
प्रकाशत्वसूचनत्वानुपपत्तेः द्विविधरामशब्दयोरवतारपरत्वेनस-
मानार्थकत्वे तद्विभक्तृवचनस्याथतत्वतइत्यस्यवैपर्थ्यापत्तेश्चा-
तोमहाविष्ण्वादि शब्दानांतद्गुणार्थकत्वेनतन्मुख्य वाचकत्वा-

नुपपत्तेर्नतद्वाच्यस्यात्रावतारित्वमुपपद्यते नन्वत्रैवोपनिषदिचि-
न्मयोस्मिन्महाविष्णौ जातेइतिमहाविष्णोर्राघवावतारित्वोपक्र-
मात्ब्रह्मणोरूपकल्पनेत्यादिनातत्फुटीकरणात् ॐतत्सत्यः परं-
ब्रह्म रामचन्द्रइत्याद्यभ्यासात् विश्वाधारंमहाविष्णुंमनसासं-
स्मरन्ब्रह्मा तुष्टावेत्युपसंहाराच्च तत्रतुष्टावेतिवचनेनश्रीरामसर्व-
रूपित्वपरचरममंत्राणां तत्स्तुतिमात्रपरत्वोपपत्तेश्चमहाविष्णो-
र्हरेर्वाराघवावतारित्वं राघवस्यतुजाते दशरथेइतिमहामहावि-
ष्णावातारत्वोपक्रमात् रघोःकुलेखिलंरातीत्यादिनातदभ्यासात्क-
ल्पितस्यशरीरस्यतस्यसेनादि कल्पनेति तदवतारत्व परवाक्य-
तश्च विश्वव्यापीराघवो यस्तदानीमन्तर्दधे शंख चक्रेगदाब्जे
धृत्वेत्युपसंहाराच्च तदवतारत्वंस्फुटमवगम्यते इतिचेन्नैवंवाच्यं
अस्या एवोपनिषदः उपक्रमे इति रामस्य रामाख्याभुविस्या
दितीयंश्रुतिः इतिरामपदेनासौ परंब्रह्माभिधीयतेइतीयंचश्रुतिः
महाविष्णुहरि पदयोःप्रतीयतेयच्चिन्मय परब्रह्ममुख्यवाचकत्वं
तद्बोधनद्वारा महाविष्णोर्हरेश्च दाशरथ्यवतारित्वं बोधयित्वा
सच्चिदानंदार्थक रामपदवाच्यस्यपरस्य ब्रह्मणश्चिन्मयस्य
दाशरथ्यवतारित्व मुपपादयतः यदि महाविष्णोर्हरेर्वादाश-
रथ्यवतारित्वश्रुत्यभिप्रेतंस्यात् तदाइतिरामस्य रामाख्या
भुविस्यादित्यत्र इति विष्णोर्हरेर्वा रामाख्याभुविस्यादितीदृशी
श्रुतिः स्यात् पुनः इतिरामपदेनासौपरंब्रह्माभिधीयते इत्यत्र-
इतिविष्णुपदेनइतिहरिपदेनवासौ परंब्रह्माभिधीयत इतीदृशी-

श्रुतिः स्यात्नचैवंश्रूयते अतउपनिषदुपक्रमेसिद्धंयद्रामाख्यस्य-
परस्यब्रह्मणो दाशरथ्यवतारित्वंतदनुसारेणोपनिषच्छ्रुत्यंतरा-
णां नेतव्यत्वात्यानित्वदुक्तानिश्रुतिवाक्यानिविष्ण्वतारित्वप-
रत्वेनप्रतीयंतेतानिसर्वाण्यपि रामाख्यपरब्रह्मावतारित्वपरत्वेन-
नीतान्येवनिर्बाधंस्वार्थंलभंते ननुत्तदुपबृंहणभूतेवाल्मीकीयेपि-
तंमब्रुवन्सुराः सर्वेसमभिष्टूयसन्नताः त्वांनियोक्ष्यामहे विष्णो-
लोकानांहितकाम्यया राज्ञोदशरथस्य त्वमयोध्याधिपतेर्विभोः
धर्मज्ञस्यवदान्यस्य महर्षिसमतेजसः तस्यभार्यासुतिसृषुश्रीह्री-
कीर्त्युपमासुच विष्णोपुत्रत्वमगच्छ कृत्वात्मानंचतुर्विधं तत्र-
त्वंमानुषोभूत्वाप्रबृद्धंलोककंटकं अवध्यंदैवतैर्विष्णोसमरेजहि-
रावणमिति एवंदत्वा वरंदेवोदेवानांविष्णुरात्मवान् मानुषेचिंत-
यामास जन्मभूमिमथात्मन इत्युपक्रमात्यज्ञेविष्णुः सनातनः
आगच्छविष्णोभद्रंते दृष्ट्या प्राप्तोसिमानद अथविष्णुम
हातेजाः पितामहमुवाचहेत्याद्यभ्यासात्ततः प्रतिष्ठितो
विष्णुस्वर्गेलोके यथापुरेत्युपसंहाराच्चतस्य विष्ण्ववतार-
त्वमवगम्यते तदनुरोधेनतत्स्त्वमसिदुर्द्धर्षस्तस्माद्भावात्सनात्
रक्षांविधास्यन्भूतानांविष्णुत्वमुपजग्मिवानित्यादीनांतत्कारण-
भेददृष्ट्यातत्स्तुतिपरतया वानेतव्याच्चतदनुरोधेनैवश्रियःश्री-
श्चभवेदग्र्याकीर्त्तेः कीर्त्तिःक्षितेक्षमाः सूर्यस्यापिभवेत्सूर्योह्यग्ने-
रग्निः प्रभोप्रभुरित्यादीनांश्रियःशोभायाः श्रीःशोभाभवति
जानकीतस्याः शोभायाः तदन्वयव्याश्रितत्वात्कीर्त्तेः यशसःकी-

न्तिः जानकीगुणकर्म जन्यत्वात् श्रीरामतोपि जानक्याः शरण्यत्वे आधिक्याच्चदिते क्षमाइति क्षमावत् दिति सारभूता अथ वाक्षिति क्षमातोप्यधिक क्षमाव तीक्षितिर्हि जडत्वेन वक्तुं कर्त्तुं चासक्ताइयंतु चेतना जगदीश्वरि-त्वेन सर्वकर्त्तुं समर्थापिसमर्थेन हनुमता प्रार्थितापियत.स्व-दुःखप्रदा अपिराक्षसीर्नताडितवती अतः क्षितेरप्यधिक क्षमा-वतीयम्सूर्यस्यसूर्यत्वं अग्निरग्नित्वंस्पष्टं सर्वसम्मतंप्रभोः ब्रह्म-णःशिवस्यप्रभुः रामः नतुविष्णोः तस्यतदवतारित्वेनतंप्रतित त्प्रभुत्वानुपपत्ते रित्येवमर्थस्यनयनाच्चग्रंथपूर्वापरवाक्यनिर्विरो-धोप्युपपद्यतेइतिचेन्नरमंतेयोगिनइतिरामशब्दस्यचिन्मयपरब्रह्म मुख्यनामत्वप्रकाशकश्रुतिविरोधात्यदिदाशरथे विष्ण्वतारत्वं-श्रुत्यभिप्रेतंस्यात्तदाइतिविष्णुपदेनासौ परंब्रह्माभिधीयतइती-दृशीतत्चिन्मयपरब्रह्मतच्छब्दार्थ मुख्यनामव्युत्पादिकाश्रुतिः-स्यात् पुनरपिरूपस्थानां देवतानामित्यादिब्रह्मण्येवंहिपंचधेत्य-न्तंयद्वाक्यंब्रह्मसमस्तावतारपरंतस्मात्पृथक्त्वेन श्रूयते कल्पित-स्यशरीरस्य तस्यसेनादिकल्पनेतियद्वाक्यमवतारांतरपरंतद्विरो-धात्यदिदाशरथेरपिमहाविष्ण्वाद्यवतारत्वं श्रुत्यभिप्रेतंस्यात्त-दातस्याप्यवतारत्व सामान्यादव तारांतर वतद्व्यादिसहस्रां-तहस्तवत्परवाक्यैनैवज्ञापिताव तारत्वस्यपुनस्तज्ज्ञापयितुंतत्पृ-थक्वाक्यप्रवृत्तिर्नस्यात् नचतत्पृथग्वाक्यमवतारांतरपरमि-

१. ब्रह्मणे विष्णुत्वेन ब्रह्मावतार समस्त द्विसहस्रांत हस्त वत्स रघुनाथ रूपसंगृहित्वैन पृथक्कोक्तं वैयर्थ्यात् तद्विरोध तस्यात् ।

तिचोदनीयंप्रकरणीयंदाशरथिंविहायतस्यान्यपरत्वानुपपत्तेः इ-
तोपितन्नोपपद्यतेस्वभूः स्वेनैवभासतइतिवचनविरोधात्विष्णवा-
तारत्वेतु श्रीरामस्यविष्णुभाव्यत्वेनतत्प्रकाश्यतयास्वभवनंस्वप्र-
काशत्वंचनोपपद्येतइतोपिजीवत्वेनेद मोयस्यरेफारूढाःमूर्त्तयः-
स्युः इत्योमितीति चेतत्यादि रामनाम निष्ठ प्रणव कारणत्व
प्रकाशक श्रुतिविरोधात्तन्नोपपद्यते कार्य विग्रह पर शब्दस्य
कारण विग्रहपरशब्द कारणत्वानुपपत्तेः अस्यामुपनिषद्यन्या
सुचभगवन्स्वरूपनाम्नोस्तादात्म्यसंबंधावगत्या नामपरत्व द्वा-
रापितद्वाच्य परत्वो पपत्त्या सर्वशब्दकारण प्रणवकारण राम
शब्द वाच्यस्य सर्वशब्दवाच्यं कारण प्रणव वाच्य कारण-
त्वोपपतेश्चइत्यतोपि ॐ योवै श्रीरामचन्द्रः सभगवानयः परं
ब्रह्मयोविष्णुः योमहाविष्णुरित्यादि श्रीरामनिष्ठ सर्वरूपित्व
प्रकाशकोपसंहार मंत्र समुदाय विरोधाद्यदुक्तं निर्विरोधोप्युपप-
द्यते इति यदुक्तंत्वयातन्नोपपद्यते महाविष्णवादि रूपिणः
राघवस्य तद् विष्णुस्तच्छब्दार्थ रूपत्वानुपपत्तेः ननूपसंहा-
रादुपक्रमस्यबलीयस्त्वात्तदनुरोधे नोपसंहार वाक्यानि श्रीराम-
प्रशंसामात्र परत्वेन नेतव्यानितत्रतुष्टावेतिश्रवणाच्चेतिचेन्न
असंदिग्धोपक्रमस्य तथा भूतत्वान्नतु संदिग्धस्ययतः संदि-
ग्धो पक्रमार्थस्य वाक्य शेषानुसारनिर्णये नासंदिग्धोपसंहाराद
पकृष्टत्वं संदिग्धोपक्रमस्य ज्ञापितवान् भगवान् जैमिनिः सं-
दिग्धंतु वाक्य शेषादिति सूत्रेण तत्रयथा आक्ताशर्करा

उपदधातीत्यत्र घृतेन तैलेन वशावाकेनाक्ता इति संदेहस्य आयुर्वैघृतं भवतीतिवाक्यशेषेण घृतेन तदाक्तत्व सूचनेन निवृत्तिः कृतायथा वा इमामगृभ्णान् रशनामृतस्य ऋतस्य सत्यस्य सत्यफलस्येत्यर्थः इत्यत्राश्वगर्दभयोर्मध्ये कस्यरशनाम गृह्णन्गृहीतवंतः इति संदेहे इत्यश्वाभिधानी मादत्त इति वाक्य शेषादश्वस्येति निश्चयो भवति तथात्राप्युप क्रमस्य संदिग्धत्वादयमपि तथैनिर्णेतव्यः कुतः संदिग्धः सःतत्र श्रुती-नांमहाविष्णु ब्रह्म हरि शब्दानां महाव्यापकत्वदुःखहरत्व भग-वत्सर्वविग्रह साधारण धर्मार्थकत्वेन झटितिकस्यचित्तद्वि-ग्रह विशेषस्यासाधारण्येन बोधकत्वाभावात् ननुस्यातां ब्रह्म हरि शब्दौ सामान्यशब्दौ महाविष्णुशब्दस्तु विशेषस्तस्य झटिति विष्णुबोधकत्वात् ॐ विष्णुविष्णुर्महाविष्णु रित्युभयोः विष्णुमहाविष्णुशब्दयोः पर्यायत्व स्मरणाच्चातो ब्रह्म हरि-शब्दौपशुछागन्यायेन तद्वाच्ये पर्यवस्यतस्यैवावताश्विं बोध-यत ननुस्यातां चरममंत्रेषु विष्णुमहाविष्णुशब्दयोः पृथक् श्रव-णेन श्रौतयोःतयोर्मुख्यवृत्यैकविग्रहपरत्वानुपपत्तेः श्रौतोविष्णु शब्दोजगत्पालकश्चतुर्भुज विष्णुपरः जगत्सृष्टिसंहारकर्तृ ब्रह्म रूद्रसाहचर्य्येणतत्पाठ श्रवणात् यो ब्रह्मा विष्णुरीश्वर इति श्रौतो महाविष्णु शब्दस्तु महाव्यापकार्थ कत्वेन चिन्मयपरत त्वस्य विष्णु कारणत्वद्योतकः चिन्मयेस्मिन्महाविष्णावित्युप-क्रमश्रुतस्य महाविष्णु शब्दस्य चिन्मय परतत्व निष्टविष्णु

कारणत्वोपपादकत्वनिष्पत्तेः चिन्मये महाविष्णौ विश्वाधारं महाविष्णुं यो महाविष्णुरित्येवमादि श्रौतानां महाविष्णु शब्दानामेकार्थकत्वोपपत्तेश्चतदनुरोधेनतद्विरोधेन वास्मार्त्तस्य महदिति विशेषणस्याकाशादि व्यापकपदार्थांतर व्यावृत्त्यर्थक त्वेन विष्णुशब्दस्याकाशाद्यतिव्याप्तिप्रतिषेधेनमहाविष्णु शब्द स्य विष्णुपर्यवसानत्वेन विष्णुशब्दपर्यायत्वोपपत्तेश्च श्रीरामप-रत्वं तुतयोरन्येषांच विशेष शब्दानां तद्धृतानेक शरीरवाच कत्व द्वारोपपद्यते सामान्य शब्दानां सर्वशाखाप्रत्ययन्यायेन कारणवाक्यगतानामेकत्रैवपर्यवसानत्वयोग्यात् सर्वकारणेत-स्मिन्नेवपर्यवसानात्तद्वाचकत्वमुपपद्यतेकिंचश्रौतस्यमहाविष्णु शब्दस्य विष्णुपरत्वेतत्रत्यं महदितिविशेषणं किमर्थंस्मार्त्तवदा-काशादिव्यापकपदार्थव्यावृत्यर्थमिति चेन्नात्रस्मार्त्तन्यायावका-शः कुतस्तेषांजडानामाकाशादीनामत्र चिन्मयेस्मिन्निति चि-न्मयपदेनैव व्यावृत्तेः नापिवद्धजीवव्यावृत्यर्थंतत् चिन्मयेजा-तेइत्याभ्यांतद्व्यावृत्तेः जीवानांस्वरूपतश्चिद्रूपित्वेपि अचिच्छ-रीर वैशिष्ट्येनैव जन्मदर्शनात् नापिमुक्तानां नित्यानां वाव्या वृत्त्यर्थं तत्तेषां लक्ष्मणादि विग्रहाणांचिन्मय श्रीरामविग्रहतः पृथक्त्व श्रवणाच्चोत्तरत्रदक्षिणे लक्ष्मणेनाथसधनुः पाणिना-पुनः इत्यादौ किंचसीतारामौ तन्मयावत्रेत्यादौ चिन्मयस्य-

१ ननुनाचेल्लक्ष्मणोऽपिनित्य मुक्तानां मध्येऽस्ति तस्यदशरथ गृहे जन्म दर्शनात् स्यात्तद्व्यावर्त्यर्थ मित्या शंक्याह लक्ष्मणादिरिति ।

दाशरथेर्जगत्कारणत्व श्रवणात् जगद्व्यापारवर्जं मितिसूत्रेण-
मुक्तानांजगद्धेतुत्वप्रतिषेधाच्च श्रीरामस्यनित्यमुक्तजीवत्वानुप-
पत्तेः नापिसर्व व्यापकस्य भगवतः तनुभासो व्यावृ-
त्यर्थं तत् तस्य हरिपदवाच्यत्वाऽसिद्ध्याहरिपदेन व्यावृत्तेः
मुक्तानां नित्यानां च हरिपदेनव्यावृत्तेश्च किमर्थं तर्हितदिति
चेच्छृणु चिन्मयस्य दाशरथेः रामशव्दाभिहितस्य परब्रह्मश-
व्देनापिसूचित महाव्यापकत्वस्य महाव्यापकत्व सूचनद्वारा
सर्वव्यापकस्यविष्णोरपि व्यापकत्वोपलक्षित तत्कारणत्व
सूचनार्थमित्यवगम्यते ॐ योवै श्रीरामचन्द्रः सभगवान्
योब्रह्माविष्णुरीश्वर इत्युपसंहारवाक्येतत्य विष्णुरूपित्व श्रव-
णात् रक्षांविधास्यन्भूतानां विष्णुत्वमुपजग्मिवानिति तथा-
स्मरणाच्च ब्रह्मरुद्रसहचारिणोविष्णोरन्योयं विष्णुर्नारायण
गायत्र्य भिहितो नारायणवासुदेव शव्दवाच्योमहाविष्णुपदवा
च्यत्वेनस्मृतश्चेतिचेत्तदाॐयोवैश्रीरामचन्द्रस्सभगवान्योब्रह्मा-
ण्डस्यांतर्वहिर्व्याप्नोत्यत्रनारायणस्ययोब्रह्माण्डस्यांतर्वहिर्व्या-
प्नोति सनारायण इत्याहश्रुतिः यच्च किञ्चिज्जगत्यस्मिन्
दृश्यते श्रूयतेपिवेति ॐ योवैश्रीरामचन्द्रः सभगवान् यः
ॐ नमोभगवते वासुदेवाय योमहाविष्णुरित्यत्रवासुदेवस्य
महाविष्णोश्च श्रीरामरूपत्व श्रवणात् नारायणादि शव्द-
त्रयवाच्यस्यापि श्रीरामकार्यत्वमुपपद्यते श्रुत्यपेक्षयास्मृतेर्दुर्व-
लत्वात्श्रुत्यनुकूलेनस्मार्त्तस्यमहादितिविशेषणस्यविष्णुपदार्था

काशाद्यतिव्याप्तिनिवर्त्तकत्वेनसार्थकत्वं चोपपद्यते एवमुपसंहार
गतमहाविष्णुशब्दशब्दितस्यश्रीरामकार्यत्वावगमात् उपक्रमश्रु-
तस्य महाविष्णुशब्दस्य गत्यंतरानुपपत्त्याचिन्मयतत्वमहाव्या-
पकत्वगुणगणपरत्वेननेतव्यः सः चरममंत्रश्रुतोमहाविष्णुशब्दः
सामान्यशब्दश्चेत्तर्हियथावाक्यशेषस्थः सोमहाविष्णुशब्दः महा
व्यापकत्वतद्धर्मवाचकद्वारा श्रीरामेपर्यवसितव्यस्तथोपक्रमस्थो-
पिपर्य्यवसितव्यःसंदिग्धोपक्रमादर्थनिर्णयस्यासंदिग्धवाक्यशेषा
धीनत्वोक्तेः किंच रमंतेयोगिनः स्वभूर्ज्योतिर्मयोजीवत्वेनेदमों-
यस्यइत्योमितिच रुद्रस्तारकं ब्रह्मव्याचष्टे तारकंदीर्घानलं
ब्रह्मात्मकासच्चिदानन्दाख्याइत्युपासितव्यं एतदेवोपास्यमितिज्ञे-
यमिति च श्रीरामस्यमनुंकाश्यां जजाप वृषभध्वजः इत्येव-
मादिरामशब्दनिष्ठचिन्मयपरतत्वमुख्यवाचकत्व प्रकाशकश्रुति-
संदर्भविरोधाच्चोपक्रमश्रुतमहाविष्णुशब्दस्यगत्यंरानुपपत्त्यापरि-
शेषात्चिन्मयतत्वं महाव्यापकत्वं धर्मप्रकाशकत्वमेवोपपद्यते
यतोब्रह्महरिशब्द वन्महाविष्णुशब्दोपिसामान्यशब्दः तदूच्चा-
रणादिसमकालेकस्यभगवद्विग्रहविशेषस्यास्फुरणाच्चतस्यसामा-
न्यशब्दत्वस्वीकारेणैव रमंतयोगिन इत्यादिप्रदर्शितवाक्यानां-
स्वारस्योपपत्तेश्चयस्माच्च चिन्मयेस्मिन्महाविष्णावित्युपक्रांतंचि-
न्मयतत्वंमहव्यापकत्वंच तद्गुणंचिदात्मनिपरंब्रह्मेत्याभ्यामनूद्यत
स्यरामेतिसंज्ञाप्रकाश्यते नतुविधीयते रमंतेयोगिनोनंतेसत्यानंदे-
चिदात्मनिइतिरामपदेनासौपरंब्रह्माभिधीयतेइतिश्रुत्याप्यत्रमन्त्रो-

न्वर्थादिसंज्ञकइतितस्यादिसंज्ञत्व श्रुतेरनादिसिद्धायारामेतिसं-
ज्ञायाः प्रकाशनमेवोपपद्यते श्रुतेर्नतुविधानंतस्माद्रामशब्दस्यचि-
न्मयपरतत्वमुख्यवाचकत्वसिद्धेस्तस्यैमहाविष्णुशब्दस्यतन्मुख्य-
वाचकत्वबाधेनसामान्यशब्दत्वोपपत्तिपूर्वकं तन्महाव्यापकध-
र्मप्रकाशकत्वोपपत्तेः उपक्रमे श्रुतोमहाविष्णुशब्दोनविष्णोरव-
तारित्वविधायकः किंतुसच्चिदानंदार्थकरामशब्दाभिहितस्य-
चिन्मयस्यैवतथैवरमंतेयोगिनइति श्रुत्याप्रकाशितंतत्कुतोवग-
म्यते इतिचेत्रामपदाभिधेयंयत्परंब्रह्मचिन्मयंतस्यरामाख्यस्यचि-
न्मयस्याद्वितीयस्यब्रह्मणोरूपकल्पनाउपासकानांकार्यार्थमित्येव-
मन्वयोपपत्तेः रमंतेयोगिनइतिश्रुत्युक्त परब्रह्मव्यतिरिक्तस्यस-
र्वावतारित्वानुपपत्तेः रमंतेयोगिनइतिश्रुतेः चिन्मयस्याद्विती-
यस्यब्रह्मणइतिश्रुत्यैकार्थप्रतिपादकत्वनिष्पत्तेः इतिरामपदेना-
सौपरंब्रह्माभिधीयत इत्युक्तंरामपदाभिहितंयत्परंब्रह्मतस्यैवरामा
ख्यस्यपरब्रह्मपर्य्यायस्याद्वितीयस्यब्रह्मणोरूपकल्पना उपासकानां
कार्य्यार्थमित्येवमन्वयसत्त्वात् रामशब्दशब्दितस्यैवचिन्मयस्य-
महाव्यापकत्वधर्मवतोऽइत्यादिसहस्रांतहस्तवदशेषावतारनिदान-
त्वा वगमादभ्यासोपिरामशब्दाभिहितपरत्वेनोपपन्नतरः एवमुप-
क्रमश्रुतमहाविष्णुशब्दस्यार्थान्तरपरत्वेनान्यथासिद्धिवत्विश्वा-
धारंमहाविष्णुमित्युपसंहार श्रुतोपिमहाविष्णुशब्दोऽन्यथासिद्धः
चरमोपसंहारश्रुतमहाविष्णुशब्दशब्दितस्य श्रीरामरूपत्वोपपत्त्या

१. उपक्रमस्य चिन्मयस्तच्छब्दार्थः ।

सामान्यशब्दत्वेनवातस्यैोक्तरीत्यातत्पर्यवसानत्वोपपत्त्या तत्पू-
र्वतनदृष्टस्यापि तस्यैवविश्वाधारंमहाविष्णुमित्युक्तस्य महावि-
ष्णुशब्दस्य तेनैवन्यायेनतत्पर्यवसानत्वोपपत्तेरुपसंहारोप्यन्यथा
सिद्धः एवमस्यामुपनिषदिप्रदर्शितरीत्योपक्रमादिलिङ्गैःसच्चि
दानंदार्थकानादिसिद्धरामशब्दाभिहितस्यैव रामाख्यस्यपरस्यब्र
ह्मणः सर्वावतारित्वंनिष्पद्यते यथातथास्यामेव जातेदशरथ-
स्यात्मजेरघुकुलेखिलंरातिकल्पितस्यशरीरस्येत्याद्युपक्रमादिलिं-
गैस्तद्गुणक्रियार्थकरामशब्दाभिहितत्वेनतस्यैवरामाख्यस्य परस्य
ब्रह्मणःस्वावतारत्वमवगम्यतेतेनस्वयमवतारिणःसतोद्विभुजस्यै
वश्रीरामस्याजहत्स्वनित्याकृतिस्वभावादेरेव श्रीदशरथगृहेऽवता
रउपपद्यते नतुविष्ण्वादेश्चतुर्भुजाद्याकृतिमतःअत्रैवचरममंत्रेषु-
विष्णु नारायणवासुदेवादि शब्द शब्दितस्य श्रीरामरूपत्व
श्रवणेन सर्वरूपिणस्तस्य नारायणस्तच्छब्दार्थः तदवतारत्वा
नुपपत्तेः अपौरुषेय वचनापेक्षया पौरुषेय वचसां दुर्बलत्वात्
विष्णुनारायणाद्यवतारित्व परेतिहास पुराणादिवाक्यानामर्था
तरपरत्वेनैवात्रप्रमाणत्वोपपत्तेः मुख्यार्थत्वस्वीकारेतु तेषांश्रुति-
विरुद्धार्थकत्वेनाप्रामाण्यापपत्तेश्च यथाहभगवान् जैमिनिर्विरो-
धेत्वपेक्ष्यंस्याद्यसत्यनुमानमिति श्रुतिवत्स्मृतिरपि श्रीरामस्या-
वतारित्वमवतारत्वं चाह उक्तवान् पूर्णःपूर्णावतारश्च श्यामो-

---

१ पशुच्छागन्यायपर्यवसान ।
२ नारायणादि ।

रामो रघूद्वहः " अंशाः नृसिंहकृष्णाद्याः राघवोभगवान्स्वयं श्रीरामस्यकलांशाद्वै अवताराभवंतिहि कोटि कोटिश्च कार्यार्थे सिंधौवीचीवद्वैमुने इतीत्याद्या यत्तुतत्र तुष्टावेति श्रुतिमवलम्ब्य चरममंत्राणां प्रशंसामात्र परत्वेनार्थवादत्वं सूचितं तन्न मन्त्रभागादर्थ वादभागस्य पृथकांगीकारातकिंच यथालोकेगुणाद्युत्कृष्ट पुरुषनिष्टगुणादीन्पुरुषांतरे-आरोप्यतंस्तुवन्तितथास्वरूपांतर निष्टस्य परब्रह्मादिरूपित्वस्य तादृशसामान्यशब्दवाच्ययत्वस्य चश्रीरामचन्द्रे आरोप्यततस्तुत्यनुपपत्तेश्च तत्कुतः सर्वशब्दवाच्यवाचकत्वेन प्रणवकारणत्वेनरुद्रोपदिष्टत्वेनचश्रुतस्यातएव'विष्णोर्नाम्नासहस्राणां तुल्य एषमहामनुः । अनंता भगवन्मत्रानानेनतु समाकृताः विष्णोरेकैकनामैव सर्ववेदाधिकं मतं । तादृङ्नामसहस्रैस्तु रामनाम समं मतं । जपतः सर्ववेदांश्च सर्वमंत्रांश्च पार्वति । तस्मात्कोटि गुणं पुण्यं राम नाम्नैव लभ्यते । इत्येवं विष्ण्वादिसहस्रनामसमत्वेनसर्ववेदसर्वमंत्र जपफलाधिक फल प्रदत्वेनचस्मृतस्यरामनाम्नो यद्वाच्यंतस्यतन्न्यूनतर नामांतर वाच्यायकृष्ठत्वानुपपत्तेरित्यतस्तद्याथात्म्यस्वरूपप्रकाशकत्वेनमंत्राणां तत्प्रशंसामात्र परत्वानुपपत्त्यातुष्टावेतिवचनस्यौपकारित्वोपपत्तेरादित्योयूयइत्यस्यवचनस्ययूयोविरुद्धा दित्यगुणविधायकत्वेनगुणवादाख्यार्थ वादत्ववत् कस्याप्यन्यनिष्टगुणवि

१ महाविष्णुशब्द सदृशाये सामान्यशब्दास्तेषां वाच्यत्वंच

शेषस्यतत्रासतोविधानेन गुणवादाख्यार्थवादत्वमुपपद्यतेयस्मा त् नाप्याग्निर्हिमस्य भेषज मिति वाक्यस्य प्रत्यक्ष प्रमाणा वगतस्य पर ब्रह्मादि रूपित्वस्य प्रकाशकत्वे नैषांमंत्राणां नप्रमाणान्तराव गतार्था नुवादित्वेनानुवा दाख्यार्थं वादत्व मुप-पद्यते यस्माच्च वायव्यं श्वेतमाल भेतेत्यस्यविधेः सानिध्यात् वायुर्वैक्षेपिष्ठा देवेतेत्यस्य विधिशेषार्थ वादत्ववत् तेषांविधायक वाक्यांतर सन्निधेर दर्शनात् विविधशेषार्थ वादत्व मुपपद्यते तस्मात प्रमाणांतरान वगत लक्षणस्या पूर्वार्थस्यज्ञापकत्वात्त त्रापितत्र पूर्व मसतो विधायकत्वानु पपत्या नादिसिद्धस्वाभाविकस्य श्रीरामः तत्परं ब्रह्मपरमपुरुषादि सा-मान्य शब्दवाच्यत्वस्य विष्णु नारायणादि रूपित्वस्यच प्रका-शत्वात्स्वार्थ बोधने तेषां स्वातंत्र्येण स्वतंत्र प्रमाणत्वनि-ष्पत्तेः चरममंत्रास्तच्छब्दार्थः तज्ज्ञापितस्य श्रीराम निष्ठा परब्रह्म श्रुत्यानुकूलार्थानामेवस्मृतिवचनानांतदर्थप्रकाशकत्वेन प्रमाणतयाश्रुतिविरुद्धार्थकत्वेनभारयमानां वेदार्थ शिष्टप्रणी-

---

१ आग्नेहिमभेषजत्वस्य नुवादकत्वे नानुवादाख्यार्थं वादत्वत् प्रमाणांतरावगतस्य ।

२, तेषां मस्तुतिमंत्राणां सन्निधे विधायक वाक्यानांतराऽ-दर्शनात् ।

३. तस्यापूर्वार्थस्य प्रमाणांतरानवगदलक्षणस्य ।

४. प्रमाणांतरानवगतत्वम पूर्वत्वं सचासावर्थ अपूर्वार्थः ।

५. अस्तुतिमन्त्राणां ।

दिशब्दवाच्यत्वस्य नारायणादि तद्रूपित्वस्य च बाधाभावेन तस्य निर्बाधंसर्वावतारित्वं निष्पद्यते एवं चरममंत्र दर्शितन्याये नस्वभूर्ज्योतिर्मयोऽनन्तरूपीत्वे नैवभासते जीवत्वेनेदमोंयस्या इत्योमिचेत्यादिष्वपिरामनामपरत्व ज्ञापकोपनिषद्वचनविरोधेनै षामर्थान्तर परत्वकल्पनं युक्तमिति चेन्नतत्रापि जीवत्वेनेद मों-यस्यइत्योमित्यस्य चोपसंहारेणरामशब्द कार्यत्व पूर्वकं प्रणवस्य सर्वरूपित्वोपपत्तेःअन्यथास्यामेवोपनिषदि इत्योमित्यस्यरामनाम-परत्वं परस्पर ॐ इत्ये तदक्षरं सर्वमित्यस्य प्रणवोत्कृष्टत्व पर-स्यच वाक्यद्वयस्य दर्शनात् तयोः परस्परं विरुधार्थ कत्वेना-स्यामप्रमाणयता पद्यतेनत्वैवं चेत्तदाप्रणवपरत्व परोपनिषदंतर वचन सहकृतस्यैतदुपनिषत्प्रणवपर वाक्यस्य प्राबल्यंराम नाम परवाक्यस्य दौर्बल्यं च बुद्धारामनाम्नः प्रणवकार्यत्वां गीकारेणोक्तदोषः परिहरणीय इतिचेन्नास्यामुपनिषदि तथा न्यासुच जीवत्वेनेदमोंयस्यइत्योमिति चेति,प्रणवनिष्ठ राम-नामकार्यत्वबोधक वाक्यवत् रामशब्दगत प्रणवकार्यत्वबोधक वाक्याश्रवणात्शब्दशास्त्ररीत्यापि प्रणवाक्षरे रामशब्दानि-ष्पत्तेश्च रामशब्दनिष्ठ तदुभयैत्व वाक्य तश्चशब्दशास्त्र तश्च-निष्पत्तेरतः सामान्येन प्रणवनिष्ठं सर्वकारणत्व परवाक्यानां

१ प्रणव कारणबोधके।

२ प्रणव कारणत्वस्य सर्वजगत्कारणत्वस्य इत्योमितिवाक्यतः तथैव रामबीजस्थं जगदेतच्चराचरमिति।

३ जीवत्वे वेदेत्यादितच्छब्दार्थः।

सामान्या नामस्ये विशेष वाक्यस्य विरोधेन अग्निषोमीयं पशु मालभेततस्य विरोधेन नहिंस्यात् सर्वभूतानीत्यस्यैकदेशसं-कोच्च वदैकांशसंकोचात् प्रणवनिष्ठतज्ज्ञापकेह्यर्थवाद वचना-नुपपत्तेः तेषामपिप्रशंसामात्र परत्वमर्थान्तर परत्वेनान्यथा सिद्ध त्वम् वानोपपद्यते तादृशप्रमाणाभावात् प्रणवपरप्रमाणाविरो-धाच्चनतत्रार्थान्तर परत्वं कल्पनीयम् ननुओंमित्यक्षरं सर्वमित्या दिप्रणवनिष्ठ सर्वरूपित्व तत्कारणत्वन्त परिविशेष वाक्येषु रामशब्दा श्रवणाच्च रामशब्दस्य तत्कार्य-त्वानिष्पत्तेः पूर्वोक्तरीत्यातत्कार्यत्वपूर्वकं प्रणवस्यसर्वकारण-त्वोःत्वनिष्पत्तेश्चएतदुपनिषद्गतयोर्रामनामप्रणवनिष्ठयोर्वाक्ययोः परस्परंनिर्विरोधेनतयोरुपनिषदंतर श्रुतप्रणव परवाक्यनिर्वि-रोधेनचोक्त दोषपरिहारस्यावश्यकत्वात् तदेवमस्यामुप-निषदिकारण त्वपरपूर्वापरवाक्यानामके वाक्यताकरणे-नरामपदवाच्यस्य महाव्यापकस्यसर्वावतारित्वनिश्चयात्सर्वशा-खाप्रत्यय न्यायेनमूलकारणत्वस्यद्विनिष्ठत्वा नुपपत्त्या चोप-निषदंतरीय कारणपरशब्दानामपि तदेकपरत्वेनोपपत्ते-स्तदुप- वृंहणभूतेतिहासपुराणादि कारणवाक्यानामपित-देकैपरत्वेनस्वारस्याच्चान्यपि तात्पर्यतः तस्यैवसर्वकारणत्वेप-

---

(१)श्रीरामतापनीय वाक्यस्य ।

(२)ब्रह्मणोरुपकल्पनेतिब्रह्म स्वरूपस्य

(३)श्रीरामाख्यस्यैक

(४)रामाख्यैकपरत्वेन

यंवस्यंतिस्फुटयंति चकानिचित् श्रीरामस्यकलांशाद्दैअवतारा-
भवंतिहीत्यादिनिब्रह्मणोरूपकल्पनेतिश्रुत्यर्थप्रकाशकानीत्यव-
गंतव्यं यच्चोक्तंवाल्मीकीयेप्युपक्रमादिलिंगैः श्रीरामस्यविष्णुव-
तारत्व ममगम्यते तदप्युप निषदुपक्रमादिवाक्य संदर्भविरो-
धेनानुपपन्नमपितत्रत्यपूर्वापरवाक्य विरोधेनाप्युनुपपन्नतरंतत्रा-
प्युपक्रमेकौशिल्या जनयद्राममितिनामकरणात्पूर्वंतेनरामश-
ब्दोपादानेनसूचितंयत्तस्यतदनादिनामत्वंतद्विरोधातकुतः सच्चि-
दानंदस्वरूपवाचकानादिरामनामवाच्यस्यतद्व्यापकत्वगुणद्वारा
तद्वाचकविष्णुशब्दवाच्यावतारत्वानुपपत्तेःमध्येपिसूर्यस्यापिभवे
त्सूर्योह्यग्नेरग्निः प्रभोप्रभुरित्युक्तंयत्तस्यप्रभोः प्रभुत्वंतद्विरोधात्पु-
नश्चब्रह्मास्वयंभूश्चतुराननोवाइन्द्रोमहेन्द्रःसुरनायकोवारुद्रस्त्रिने
त्रस्त्रिपुरांतकोवात्रातुंनशक्तायुधिरामवध्यं नकालस्यनरुद्रस्य-
नविष्णोर्वित्तपस्यच कर्माणितानिश्रूयंतेयानियुद्धेहनूमतः इत्य-
त्रहनुमत्कर्मणोविष्णु कर्माधिक्योक्त्यासूचितंयत्तत्स्वामिनोवि-
ष्णवाधिक्यंतद्विरोधात्तथोपसंहारेपि संक्षिप्यहिपुरालोकान्-
माययास्वयमेवहि महार्णवेशयानोप्सुमांत्वंपूर्वमजीजनः सोहं-
सन्यस्तभारोहित्वामुपास्येजगद्गुरुं रक्षांविधत्स्वभूतेषुममतेजस्क-
रोभवान् ततस्त्वरत्वमसिदुर्धर्षस्तस्माद्भावातनात्तनात् रक्षां-
विधास्यन्भूतानांविष्णुत्वमुपजग्मिवानिति स्फुटीकृतंयद्रामस्य-

विष्णुनारायणकारणत्वं तद्विरोधाच्चोपनिषदुपक्रमादिश्रुतम-
हाविष्णवादि शब्दानामर्थांतर परत्वेनान्यथा सिद्धिवत्तत्रत्योप
क्रमादिश्रुत विष्णवादि शब्दानामर्थांतर परत्वोपपत्तेः एत-
न्मूलो-पनिषत्संदिग्धोपक्रमार्थस्यासंदिग्ध वाक्यशेषानुरोधेननि-
र्णयवत्तदुपक्रमस्यापि संदिग्धार्थत्वेनासंदिग्ध वाक्यशेषानु-
रोधेन तदर्थनिर्णययोग्याच्चकुतस्तत्रत्योप्युपक्रमसंदिग्धार्थइति-
चेच्छृणुतत्रकृत्वात्मानंचतुर्विधमित्यत्रएवंदत्वा वरंदेवोदेवानां
वि[१]ष्णुरात्मवानि त्यत्रचविष्णोरात्मवत्वस्मरणात्तत्रत्य आत्म-
शब्दः किमर्थकइत्यनिश्चयात्कथंच तद्विशेषार्थनिश्चयइति-
चेत् आत्मादेहधृतौजीवेस्वभावेपरमात्मनीति स्मृतानेकार्थस्या-
त्मशब्दस्यतत्रविष्णु शरीरस्यप्रत्यक्षात्युक्षाद्यप्रकरणात्धृत्य-
र्थकत्वनियामक बचनानुपलब्धेश्चतदुभयार्थकत्वानुपपत्तेःतथै-
वजीवत्वकथनस्यप्रयोजनाभावात् तत्सात्विकस्वभावप्रसिद्धा-
त्तज्ज्ञापकत्वानुपपत्तेश्चदेहादि परत्वानुपपत्त्यापिरिशेषात्
परमा[३]त्मपरत्वेन तदुपलक्षित तत्कार- णपरत्वोपपत्तेः
विष्णुरात्मवा नित्यस्यकारणवान्विष्णुरित्यर्थ कत्वोपपत्तेः
तदर्थनियामकस्य रक्षांविधास्यन्भूतानांविष्णुत्वमुपजग्मिवा
नित्युपसंहार वचनस्यापि सद्भावाच्च उपसंहार बचन-
स्योप क्रमसंदेहनिवर्त्त कत्वोक्तेश्चेत्येवंत त्रत्यस्यात्मशब्द-

१. आदिपदे नाभ्यासोप संहारः।
२. विष्णुस्तच्छब्दार्थः
३. परब्रह्मपरत्वेनेत्यर्थः

स्यविष्णुकारणोपलक्षकत्वनिर्णयात्ततश्च एवंदत्वावरंदेवो-
देवानांविष्णुरात्मवान् मानुष्येचिंतयामास जन्मभूमिमथात्मन
इत्युपक्रमं वाक्यस्य संदिग्धार्थस्य रक्षांविधास्यन् भूतानां-
विष्णुत्व मुपजग्मिवान् सत्वं वित्रास्य नानासुप्रजासु"
जगतांवर रावणस्य बधाकांक्षी मानुषेषुमनो दधा-
इतिरामंप्रति ब्रह्मणोक्ते नोपसंहार वाक्येन विरोधः त्वं-
मानुषेषुमनोदधा इत्यसंदिग्ध वचनानुरोधेन विष्णुरात्मनः स्वा
त्मनः स्वकारणस्यरामस्य जन्मभूमि मानुषे लोके चिंतयामा-
सेत्येवंव्याख्यानने परिहर्त्तव्यः पुनः विष्णोपुत्रत्व मागच्छकृ-
त्वात्मानं चतुर्विधमिति बालकाण्डे आत्मवद्विष्णुं प्रतिदेवता
कृतप्रार्थनायाःतेषामपिमहातेजाःरामोरतिकरःपितुःस्वयंभूरिव-
भूतानां वभूवगुणवत्तरः सहिदेवैरुदीर्णस्य रावणस्य च बधा-
र्थिभिः अर्थितो मानुषेलोके यज्ञेविष्णुः सनातनः इति सहि-
रामःदेवैरर्थितः मानुषे लोके यज्ञेकथंभूतः विष्णुः सर्वव्यापकः
सनातनः अनादिः इत्योध्याकाण्डे श्रुतायाः रामंप्रतिदेवकृत-
प्रार्थनायाः परस्पर विरोध परिहारः विष्णुत्वमुपजग्मिवानिति
प्रमाणात् विष्णुं प्रतिकृताया देवताप्रार्थनायाः पर्यवसानात्
उभयत्रदेव प्रार्थनायाराम विषयकत्वोपपत्तेरूपपद्यते सपरस्पर
विरोध परिहारः इतीत्थं ननुततः प्रतिष्ठितो विष्णुःस्वर्गलोके
यथापुरेतितत्रत्य परमुपसंहार वचनं विष्णोराघव कारणत्व
सूचनेनत्वदुक्तार्थं वाधते इतिचेन्न अस्यवचनस्यार्थांतर परत्वे-

नान्यथासिद्धेः अन्यथासिद्धिरतः ततकुतः स्तन्मूलोपनिषत्पर-
मुपसंहार मंत्रेषु श्रीरामस्य विष्णुनारायणादि रूपित्वश्रवणात्
श्रुत्युपसंहारापत्त्योया स्मृत्पसंहारस्य दुर्वलत्वाच्च श्रुत्यनुकूला
र्थानामेव स्मृति वचनानां तदर्थप्रकाशकत्वेन प्रमाणातया श्रुति
विरुद्धार्थकत्वेन भास्यमानां वेदार्थ शिष्टप्रणीतानांतत्प्रमा-
ण्यान्यथा नुपपत्त्यार्थांतर परत्वकल्पनोपपत्त्याशिष्ट प्रणीतानां
तादृशामुपेक्ष्यत्व वचनेना प्रमाणात्वोपपत्तेश्च ननुश्रुतिगूढार्थ-
प्रकाशकानि स्मृति वचनान्यतः स्मृत्यर्थावाधेन तदनुकूल-
तया श्रुतिवाक्यानां व्याख्यातव्यतयास्मृतिरफुट विष्णुकारण-
त्व परतयैव श्रुतिवाक्यानिनेतव्यानि चिन्मयेस्मिन्महाविष्णा-
वित्यादीनीति चेन्न श्रीरामनिष्ठ विष्णवादि रूपित्वतत्कारण-
त्व प्रकाशक स्फुटार्थ श्रुत्युपसंहार वचन विरोधेन स्फुटार्थाना
मपि स्मृतिवचनानां तदविरुद्धार्थ कत्वेनैवनेतव्यात् अन्यथा-
राजवचनविरोधेन मंत्रिवचनवत् श्रुत्यनुयायिनां तेषां श्रुतिवि-
रोधेनाप्रमाणात्वोपपत्तेः किंचविष्णुत्वमुपजग्मिवानिति स्फुटा-
र्थक वाक्य शेष विरोधेन विष्णु कारणत्व परतयापि
भास्यमानानां स्मृतिवचसां मुख्यार्थत्वानुपपत्तेः प्रत्यु-
ताप्रमाणात्वोपपत्तेः तदनुरोधेन श्रुतिवाक्य व्याख्यानुपपत्तेश्चतत्र
वाच्यंस्मृत्यनुसारेण श्रुति र्व्याख्यानं अन्यच्च रामशब्दनिष्ठ-

१. अर्थांतरपरत्व कल्पनोपपत्तेः ।

२. यत्त्वयोक्त मितिशेषः ।

प्रणा चकारणात्व परवक्य विरोधेन श्रीरामस्य विष्णावतार-
त्वानुपपत्तेश्चतन्न वाच्यंतदेवं विष्णुरात्मवानित्युक्तस्यात्मपदस्य
विष्णुकारणा लक्षकत्वसिद्धेः कृत्वात्मानं चतुर्विध मित्युक्त-
स्याप्यात्मपदस्य तल्लक्षकत्व मुपपद्यते तत्रापि कृत्वात्मानं
चतुर्विध मित्युक्तस्य परमात्मानोऽखंडस्यकेनापि भेदकं पदा-
र्थेनखण्डनस्या शक्यतया चतुर्भागने तत्रापिन्यूनाधिक भागे-
नतत्रापि स्वाम्यनुचरभावेन चतुर्विधत्वानुपपत्तेः अतः वैशेष्या
त्तद्वादस्तद्वादइति ब्रह्मसूत्रप्रमाणात् पार्थिवंशरीरमित्यत्र श-
रीरस्यपंचभूतात्मकत्वे पितत्र पृथिव्याः प्राधान्यात् पृथीवी-
शब्देन व्यपदेशवत्स्वस्वानुचरेषुविष्णोस्तत्कारणस्य चप्राधा-
न्यात् विष्णुपदस्य तदात्मपदस्यवा तत्तदनुचर लक्षकत्वोप-
पत्तेः कृत्वात्मानं च चतुर्विध मित्यस्यस्वानुचरैः सहित-
मात्मानं चतुर्विधकृत्वेत्यर्थ कत्वमुपपद्यते श्रीरामनिष्ठ विष्णा-
वाद्यवतारित्व परवचनानुरोधेन तत्संबंधिनां लक्ष्मणादीना-
मपितत्संबंधिशेषादि कारणात्वोपपत्तेः शेषाद्यवतारित्व परपु-
राणादि वाक्यानामेतद्विरोधेन लक्ष्मणादि विषयक प्रातीति-
कमानुखबुद्धि निवृत्यर्थ कत्वेनान्यथा सिद्धत्वं चोपपद्यतेएवं-
विष्णोः पुत्रत्वमागच्छ तत्रत्वंमानुषोभूत्वेति विष्णुंप्रतिराज-
पुत्रत्व प्राप्तिप्रार्थनापिकार्य्यकारणाभेद दृष्ट्याततत्रयज्ञे विष्णो

१ कुद्दारादिना।

रेवप्रत्यक्षाच्चोपपद्यते विष्णवादिसहस्र नामसमेरामशब्दस्य तदवतारत्वा नुपपत्तेश्च विष्णुत्वमुपजग्मेवा नितिवाक्शेयषेण रामतिष्ठ विष्णुकारणत्वावगमाच्चतत्रैव सत्वंवित्रास्य माना- सुप्रजासु जगतांवर रावणस्य वधाकाक्षी मानुषेषुमनोऽदधा इतिविष्णुत्वमुपजग्मवानिति वचनेन योविष्णुरुपत्वं प्राप्त- वान् श्रीरामाख्यस्तत्कारणस्यैव राजगृहाविर्भाव स्फुटीकर- णाच्च अन्यथामानुषेचिंतयामासजन्मभूमि प्रथात्मनः इति बालकांड वचनस्य विष्णुरात्मनोजन्मभूमिं मानुषेचिंतया- मासेत्यर्थ कस्यरावणस्य वाधाकाक्षी मानुषेषुमनोदधाइत्यु- क्तबालकाण्डेवचनस्य श्रीरामस्त्वंरावणस्य वधाकांक्षी सन्- मानुषेषुमनोदधाइत्यर्थकस्यचपरस्परं विरुद्धार्थकत्वेन वाल- मीकवचनेत्वप्रमाण्यापत्तेश्चसत्वमित्यस्ययस्त्वंविष्णुत्वमुपजग्मि- वान् सत्वमित्यन्वयोद्रष्टव्यः नचतत्रविष्णुत्वमुपजग्मिवानित्या- दीन्यपितत्कारणाभेददृष्ट्याप्रयुक्तानीत्याशंकनीयंरामनिष्ठसर्वा- वतारित्वपरश्रुतिसंदर्भविरोधेनतदन्य शब्दवाच्यस्यमूलकारण- त्वानुपपत्तेरतोपितेषांविष्णुत्वमुपजग्मिवानित्यादीनांप्रशंसामात्र- परत्वेनसूचितमर्थवादत्वमपिनोपपद्यते कथमितिचेत्सचसर्वगु- णोपेतः कौशिल्यानन्दवर्द्धन इतिसर्व गुणोपेतत्वेन स्मृतेत- स्मिन्मूलकत्वणोतदन्यगुणाधानानूपपत्त्या गुणवादाख्यार्थवाद त्वंनोपपद्यते प्रत्यक्षादि प्रमाणाविषयस्य सर्वावतारित्वादेः ज्ञापकत्वेन संवादित्वाभावात्तेषामनुवादाख्यार्थ वादत्वमपि-

नोपपद्यते श्रुत्यर्थानुवादत्वंतु तत्प्रमाणत्वे मूलत्वाद्युक्तं नहि-
पौरुषेयवचसां श्रुत्यनुगामित्वेनविनापरतत्वयाथात्म्य प्रकाशने-
शक्तिः पुरुषवाङ्मनसा गोचरस्यब्रह्मणः प्रत्यक्षादि प्रमाणविष-
यत्वानुपपत्त्या स्वतंत्रपुरुषवचनप्रकाश्यत्वा नुपपत्तेरिति
विधिसन्निध्यभावेन तच्छेषत्वानुपपत्तेः प्रत्युतविधेयं स्तूयते-
इतिन्यायात् तत्ररामोविष्णुःनारायणादिरूपधारित्वेनसर्वाव-
तारीतिज्ञातव्यइति विधिकल्पनायोग्याच्च विधिशेषाख्यमप्यर्थ-
वादत्वंतेषांनोपपद्यतेइत्येवं श्रीरामस्यस्वर्गारोहणाय ब्रह्मणास्व-
दूतमुखेनयत्कृतः समयस्तेमहाबाहोइत्यादिनातत्प्रतिज्ञावि-
ज्ञापनं तदुपोद्बातत्वेनतद्याथात्म्यपूर्वं चरित्रप्रकाशकानां सं-
क्षिप्यहिपुरालोकान्मायया स्वयमेवहि महार्णवेशयानोप्सुमा-
त्वंपूर्वमजीजनः रक्षांविधास्यन्भूतानां विष्णुत्वमुपजग्मिवान्
इत्यादीनामर्थवादत्वानुपपत्तेः विष्णोरामावतारत्व परवाक्यै-
विरोधेनापिजज्ञेविष्णुःसनातनः इत्येवमादीनां रामविषयक-
प्रातीतिक बुद्धिनिवृत्यर्थकत्वेनान्यथासिद्धत्वमुपपद्यतेइत्यभ्या-
सोन्यथासिद्धः तथायोवैश्रीरामचन्द्रः योविष्णुः यो महावि-
ष्णुरित्युपनिषच्चरममंत्रविरोधेन विश्वव्यापीराघवोयइति राम
पूर्वतापनीयोपसंहारश्रुतस्य रामनिष्ठविश्वव्यापकत्व स्यार्थ-
प्रकाशकत्वेन तदुपबृंहणत्वेन चततः प्रतिष्ठितोविष्णुस्वर्ग-
इतिस्मृत्युपसंहारोप्यन्यथासिद्धः सुतरांद्रष्टव्यःतत्रततःप्रतिष्ठ

१. श्रुत्युपसंहारापेक्षया स्मृत्युपसंहारस्य दुर्बलत्वोप पत्तिरिति-
न्यायात् ।

तोविष्णुः स्वर्गेलोकेयथापुरा येनव्याप्तमिदंसर्वं त्रैलोक्यंसच-
राचरमित्यस्यस्थानेततः प्रतिष्ठितः स्वर्गेपूर्ववद्रघुनंदन इत्येव
मुक्तेधर्मात्मकप्रारयंतरवत्राघवस्यापि स्वर्गप्राप्तिरिति प्रती-
तिःस्यात् पूर्ववदित्यनेना सकृत्तत्प्राप्तिप्रतीतिश्च तन्निवृत्तये-
विष्णुरित्युक्तं जीवस्यापिस्वशरीर व्यापकत्वमाशंक्ययेन
व्याप्तमिदि मित्यादिना विशेषितंच उपपद्यतेहि तत्रमानुषत्व-
बुद्धिः तस्यसर्वदास्वाकुलाचारावेशतः प्रायशोमनुष्यवदाचर-
णात् स्वकंठतोपिस्वस्यमानुषत्वोक्तेश्च आत्मानंमानुषंमन्ये रामं-
दशरथात्मज मितिमर्हिषणापिवहुशः तत्कुलानुरूपाणिवत्सरा-
घव रघुंनदनदशरथात्मजेत्यादीनिनामानि उच्चार्योच्चार्य हा-
सीतेइत्यादिनाशोकाकुलमनुष्य चरित्रवत्तच्चरित्र वर्णनाच्च-
अतएवप्राकृतमानुष्यवत् जानक्यांतदाशक्तिविशेषमुपलभ्य-
तत्ररावणस्यकेवलं मानुषत्वबुद्धिरभूदित्युक्तं विष्णुपुराणेत-
स्यामानुषत्वबुद्धेः शिशुपालत्वप्राप्तिहेतुत्वं च तत्रैव सूचितं-
तथाहि तत्रमैत्रेयप्रश्नश्चतुर्थेंशेहिरण्य कशिपुत्वेच विष्णुना-
अवाय निहतोभोगानप्राप्यानमरैरपि नालभत्तत्र चैवेहासयु-
ज्यंसकथंपुनः संप्राप्तः शिशुपालत्वेसायुज्यंशाश्वतेहरौ
श्रीपाराशरोन्तरंदैत्येश्वरस्य वधायाखिल लोकोत्पत्तिस्थितिवि
नाशकारिणाऽपूर्वतनुग्रहणंकुर्वता नृसिंहरुपमाविष्कृतंतत्रतु-
हिरण्यकशिपोर्विष्णुरयमित्ये तन्नमनस्यभूतनिरतिशयपुण्य-

जात समुद्भूत मेतत्सत्वमिति रजोद्रेक प्रेरितै कान्नमतितद्भाव नायोगात्ततोऽवाप्तवधेहेतु कींनिरतिशयामेवाखिल त्रैलोक्या-धिक्यधारिणीं दशानत्वे भोगसंपदमवापनातस्तस्मिन्ननादि-निधने परब्रह्मभूतेभगवत्यालंब नाद्दतेमनसस्तल्लयः दशान नत्वेप्यनंगपराधीनतया जानकीसमासक्त चेतसोदाशरथिरूप-धारिणास्तद्रूपदर्शनमेवासीत् नायमच्युत इत्याशक्तिरित्यतों-ऽतष्करणोंमानुषत्व बुद्धिरेवकेवलमस्याभूतपुनरप्यच्युत विनि पातमात्र फलमखिल भूमंडलश्लाघ्यं चेदिति राजकुलजन्म अभ्याहितंचैश्वर्यं शिशुपालत्वे चावापतत्रत्वखिला नामेवना-म्नांकारणान्यभवन्ततश्चतत्कालकृतानां तेषामशेषाणामच्युतः नाम्नामनवरतानेक जन्मसंवर्द्धित विद्वेषानुबंधचित्तेविनिंदन-संतर्जनादिषूच्चारणा मकरोत्तच्चरूपमुत्फुल्लपद्मदलामलाक्षम-त्युज्वलपीतवस्त्रधारि अमलकिरीटकेयूरादि कटकोपशोभि-तमुदारपीवर चतुर्बाहुशंखचक्रगदाधरमति प्ररूढवैरानुभावाद-टनभोजनस्नानाशनशयनादिष्व शेषावस्थांतरेषु नैवापययया-वस्यात्मचेतसः ततस्तमेवाक्रोशेषूच्चारयंस्तमेवहृदयेनाधारयन्ना माविनाशायभगवद्स्तचक्रांशुमालोज्वल मक्षयतेजः स्वरूपं परब्रह्मभूतमपगतद्वेषादिदोषो भगवंत मद्राक्षीत्तावच्चक्रेणा-शुव्यापादितस्तत्स्मरणादग्धाखिलाघसंचयोभगवतातेनांत मुप-नीतस्तस्मिन्नेव लयमुपययौ १एतत्तवाखिलंमयाभिहित मि-

---

१. परमेश्वरान्तरत्वं तस्तच्छब्दार्थः ।

तीति अत्रास्य विष्णुपुराणीयवाक्यस्य हिरण्यकशिपुरावणा-
दि विषयक पुराणांतरवाक्ये नैक्य वाक्यतायोग्यात् वेदपुरा-
णादौ नृसिंहादिभ्यः कृष्णाधिक्या श्रवणाच्चतत्तद्विषयक नृ-
सिंहत्वमानुषत्वमात्रबुद्ध्युत्पत्तौ हेतोर्वक्तव्याच्चपुराणांतरोक्तस्य
तज्जन्मत्रयकारणस्य विप्रशापस्यैव तत्रापिहेतुत्वोपस्थितश्च
अन्यथातदीश्वरत्वाज्ञानेकारणांतराभावेन हिरण्यकशिपु जन्म
न्येवत्वदभीष्टेश्वरत्वज्ञानजन्य तन्मोक्षापत्तेश्च भागवतपुराणो-
क्तस्यतज्जन्मत्रयहेतुभूतस्य विप्रशापस्य उपस्थितस्यहेतोःपरि-
त्यागे तदीश्वरत्वस्वरूपाज्ञाने कारणांतर कल्पनेच्च मानाभावा-
च्चक्लृप्तकल्पितयोः क्लृप्तस्यबलीयस्त्वाच्च विप्रशापात् जन्म-
द्वयेतस्यतत्रनृसिंहत्वमानुषत्वमात्र दृष्ट्या तादृशबुद्ध्युत्पत्तिस्त
त्कृतमोक्षाभावश्चतृतीयजन्मनितुविप्र शापावसाने तत्स्वरूपा-
ज्ञाननिवृत्तिपूर्वकं तत्परब्रह्मत्वदर्शन पूर्वकं तल्लयइतितद्वच-
नैरप्यत्रगम्यते विष्णुरयमित्येतन्नमनस्यभूतनिरतिशयपुण्यजा-
तसमुद्भूतमेतत्सत्वमितिनात्तास्तस्मिन्नादिनिधने परब्रह्मभूतेमन
सोऽवलंबनादृते तल्लयइतिनायमच्युत इत्याशक्तिरित्यतोंतः
करणेमानुषबुद्धिरेव केवलमस्याभूदितिच्च अनेकजन्मसंवर्द्धित
विद्वेषानुबंध चित्तेविनिंदन संतर्जनादिषु इतिपरब्रह्मभूतंभग-
वंतमद्राक्षीतेनांतमुपनीतस्तस्मिन्नेव लयमुपययावितीत्यादि-
भिः किंच्चविप्रशापवधेः पूर्वश्रीकृष्णेपितस्य मानुषत्वबुद्धि-
रेवाऽऽसीत् ययातत्र विद्वेषमकरोत्तत्शापावसानकालेतु हेतोर-

भावात् सा विनष्टा ततश्च विद्वेषाभावपूर्वकं भगवद्यथात्म्य स्वरूपदर्शनमभूदिति परब्रह्मभूतमपगतद्वेषादिदोषो भगवन्तमद्राक्षीदिति वचनादवगम्यते अन्यत्र नारदस्य वसुदेवं प्रति कृष्णविषयकापत्य बुद्धिनिषेधवचनाच्च मा यत्य बुद्धिमकृथाः कृष्णे सर्वात्मनीश्वरे इति अतस्तस्यापि तत्र तत्स्वरूपाज्ञानकृता मानुषत्वबुद्धिरनुमातुं शक्या यत्त्वत्र विप्रशापवचनाश्रवणात् अच्युतनाम्नामशेषाणामुच्चारणमकरोत्ताञ्च रूपं शंखचक्रगदाधरं नैवापपयावस्यात्मचेतस इति वचनाच्च तदशेषनामोच्चारणात्तत्पारमेश्वर विग्रहध्यानाच्च तदास्तत्स्वरूप ज्ञानपूर्वकं तत्र तल्लय इत्युक्तं तत्रतज्जन्मत्रयकारणस्य जन्मद्वये तृतीयेपि तत्पारमेश्वरत्वाज्ञानकारणस्य चवक्तव्यात् न च जीवांतर वत्तस्याप्यनाद्य ज्ञानहेतुकं जन्मत्रयमपीति वाच्यं तस्य विष्णुपार्षदत्व प्रसिध्यात्तद्वचनानवकाशात् नापि जन्मद्वये पारमेश्वर नृसिंहादि तच्छरीरमेवतदज्ञानकारणं पारमेश्वरस्या तज्ज्ञानजनकत्वदर्शनाच्चतुर्भुजविग्रहस्य इति वाच्यं तत्रैव विष्णुरयमिति मनसि ना भूतनाय मच्युतइत्याशक्तिरिति तत्पारमेश्वर त्वानिश्चयस्य तदनात्तेश्च तन्मोक्षाभावेहेतुत्वसूचनात् अनादिनिधिने परब्रह्मभूते इति परब्रह्मभूतत्वे न तद्विग्रहस्य पारमेश्वरत्व ज्ञापनाच्च अन्यत्र नतु मां शक्यसद्रेष्टुमनेनैव स्वचक्षुषा दिव्यं ददामि ते चक्षुरिति चतुर्भुजविग्रहस्याप्य पारमेश्वरत्व सूचनाच्च तत्कल्पना नुपपत्तेः अतः पूर्वोक्तरीत्या विप्रशापस्यैव तज्जन्म त्रयस्य तत्पारमेश्वर

त्वाज्ञानस्य चहेतुत्व ।सेद्धेर्नामोच्चारणांतस्त्वरूप चिंतनं चतत्र तच्छायावसानशीघ्रता जनक सिदानीतनशापादिमोक्षोपाय-त्वसूचनार्थत्वेन वातद्वचनमन्यथा सिद्धंतत्स्मरण दग्धाखि-लाघसंचय इत्युक्तोवशब्दः शिशुपाल जन्म कृताघपरः पार्ष-दानां संचिताघानुपपत्तेः एवमशेषाच्युत नामोच्चारणस्यापि तद्धेतुत्व कल्पनमयुक्तं पूर्वशरीरेपि नृसिंहराघव नामोच्चारणे नतन्मोक्षप्रसंगात् एकस्य सकृदुच्चरितस्य राघवनाम्नोऽशेषा-च्युतनामोच्चारण फलाधिकफलप्रदत्वस्यानेकशास्त्रप्रसिद्धेश्चे त्यलं वहुशास्त्र विरुद्धेवादिनिरासेन " साप्रातीतिकीबुद्धि-र्मुक्तिवाधिकेत्यत्रैवसूचितं मानुषबुद्धिरेव केवलमस्याभूदिति अतएव वसुदेवनिष्ठा साकृष्ण विषयकानिवारिता नारदेन „ मापत्यबुद्धिमकृथाकृष्णेसर्वात्मनीश्वरे ॥इतिश्रीवाल्मीकीयेपि॥ आत्मानं मानुषं मन्येरामं दशरथात्मजं । योहं यश्च यतश्चाहं तद्भवान् वक्तुमर्हती „ त्युक्तवत्तं रामं प्रतिभवान्नारायणोदेवः श्रीमान् चक्रायुधः प्रभुः एक शृंगावराहस्त्वमित्यादिभिः वाक्यैः श्रीरामस्यौपनिषत्चरममंत्रैः परब्रह्मत्वादि सर्व-रूपित्व प्रकाशनवत् नारायणादि रूपित्व प्रकाशनेन तद्वि षयकमानुषबुद्धेर्निरसनाच्च केवलमानुषबुद्धिर्मुक्तिवाधकत्वं-ततस्तन्निषेधश्चोपपद्यते अत्रभवान्नारायणोस्ति नारायणोभवा-नस्तीति क्रियावचनस्योभयथाप्यन्वयोपपत्त्यातस्य श्रीरामनारा यणयोरन्यतर कारणत्वा निर्धारकत्वेपि एकशृंगवराहस्त्वमित्या

दौत्वमित्यस्यैवक्रियान्वयित्वोपपत्त्या प्रकृतेर्विकृतेर्वापि यत्रो-
क्तिःस्याद्द्वयोरपि वाचकः प्रकृते संज्ञाग्रहणातिविकृतेर्नत्विति
वचनात्त्वमित्यस्य वाच्यस्य श्रीरामस्यैव प्रकृतित्वोपपत्त्या
नारायणादिरूपित्वमवगम्यते न च नारायणस्य राघवकारणत्वं
राघवस्यैक शृंगवराहादिकारणत्वंचबोधयतीदं वाक्यमित्याशंक-
नीयंवाक्यभेदापत्तेः एकस्योभयार्थत्वंवाक्यभेदत्वमितितल्ल-
क्षणात्तस्मात्श्लोकादौपठितस्यभवानिति पदस्यवाच्यस्यराम-
स्यैवभवान्नारायणोदेवोस्ति त्वमेकशृंगवराहादिरसीत्याद्युक्त्या-
नारायणादिकारणत्वंमुपपद्यते महार्णवेशयानोप्सुमांत्वंपूर्वमजी-
जन इतिरामस्य नारायणकारणत्वबोधकस्यब्रह्मणः रामस्य-
नारायणावतारत्वबोधकत्वानुपपत्तेः महार्णवेशयानस्त्वमित्य-
संदिग्ध वाक्यानुरोधेनभवानानारायणोदेवइतिसंदिग्धवाचन-
स्यनेतव्यत्वाच्चात्रापिरामस्यैव नारायणावतारित्वमुपपद्यतेयता-
श्चनारायणैक शृंगवराहादीनांवहूनांचेतानानांयुगपत्क्रमे-
णवाएकरामरूपत्वानुपपत्तेरुपनिषत्सुतथा श्रवणाच्चरामस्यत्वे-
कस्यशौभरिवत् युगपत्क्रमेणवाबहुरूपधारित्वोपपत्तेरुपनिषत्
चरममंत्रेषुतथात्वश्रवणाच्चौपनिषदुतत्सर्वरूपित्वानुरोधेनस्मृ-
तिष्वपितस्य सर्वरूपित्वं मुख्यमुपपद्यते तथैवोक्तं चवाल्मीकीये
ब्रह्मणा रामंप्रतिरामस्य नारायण रूपधारित्वं महार्णवे शयाने-
प्सुमांत्वं पूर्वमजीजनः इति किंचविष्णुपुराणे विष्णुरय मित्येत-
न्नमनस्य भूदित्युक्तो विष्णु शब्दो न चतुर्भुज जगत्स्थिति

हेतुपरः किंतुकेवल योगवृत्त्या व्यापकार्थ कत्वेन ब्रह्मशब्दवत् सर्वकारणपरः नातस्तस्मिन्नादिनिधने परब्रह्मभूतेमनसस्तल्लय इति तत्रैव विष्णुपदस्थाने परब्रह्मपदप्रयोगेन तस्यपरब्रह्म शब्दपर्यायत्वोपपत्तेः वाल्मीकीये जगत्स्थति हेतोर्विष्णोः श्री रामकार्यत्वस्मरणाच्च रक्षांविधारयन्भूतानां विष्णुत्वमुपजग्मि- मवानि तीत्यलमतिविस्तरेण प्रकृतमनुसरामः तदेवमुक्तप्रका- रेण विष्णवादिशब्दानां प्रातीतिक बुद्धि निराकरणाय प्रयुक्त त्वेनार्थांतरपरत्वोपपत्तेः प्रदर्शिताभ्यासस्य परमोपसंहारस्यचा न्यथासिद्धिर्द्रष्टव्या तथा चौपनिषदोपक्रमश्रुतम हाविष्णुशब्द- स्यरमंतेयोगिन इत्यादि वचनसंदर्भ विरोधेनव्यापकत्वतद्धर्मा- र्थकतयार्थांतरपरत्वेनान्यथासिद्धिवत् वाल्मीकीयेपितन्मूलोपनि- षद्वचनसमूहविरोधात् कौशिल्या जनयद्रामंविष्णुत्वमुपजग्- मवानित्यादितत्त्वत्यवनसंदर्भविरोधाच्चविष्णुत्वमुपजग्मवानित्या- दिवचनानांश्रुतिमूलकत्वेन विष्णो पुत्रत्वमागच्छ कृत्वात्मानं चतुर्विध मित्यादिवचनेभ्योऽश्रुतिमूलकेभ्योबलीयस्त्वाच्च तत्र- त्यानामपिविष्णवादिशब्दानामर्थांतरपरत्वेनान्यथासिद्धिरुपप- द्यते नचविष्णवादिशब्दानामप्युपनिषदिश्रवणात्तेपि श्रुतिमू- लकत्वेनबलिष्ठाइत्याशंकनीयं चरममंत्रेपुविष्णुमहाविष्णवादि- शब्दानां श्रीरामकार्यविग्रहपरत्वनिश्चयात् सामान्यशब्दत्वेन श्रीरामपरत्वनिश्चयाद्रामहाविष्णु शब्दस्यतदनुरोधनेतयोपक्र- माणां महाविष्णवादिशब्दानामर्थान्तरपरत्वेननीतत्वात्तस्मात्

स्थानेवलिष्टानीति चेन्न परस्परविरुद्धार्थकत्वेनसर्वेषामप्रमाणया पत्या तदविरोधाकांक्षया तदन्यतर वाक्यानां मुख्यार्थत्वत्यागे नार्थान्तरपरत्वोपपत्तेः तत्कथमितिचेत् विष्णुपरवाक्यानांमुख्यार्थत्वबाधेन तेषांतत् प्राशस्त्यमात्रलक्षकत्वंद्योतयतिकार्यनाम्नः कारणनामोत्कृष्टत्वा नुपपत्तेः रामनामपरवाक्यानांमुख्यार्थपरत्वंतु विष्णुपराणामर्थांतरपरत्वंज्ञापयति विष्णवादिनामवाच्यस्य तत्सहस्रगुणाधिक रामशब्दवाच्यकारणत्वानुपपत्तेरित्येवमितिचेदस्तु तर्हिरामनाम पराणांमुख्यार्थ त्वत्यागोविष्ण्वादि परवाक्यविरोधात् विष्णवादिमंत्रस्थप्रणव विरोधाच्चविष्ण्वादिमंत्रांगत्वेन दृष्टस्यप्रणवस्य निश्चितविष्ण्वादि वाचकत्वस्यविरोधेनरामशब्दस्यवास्तव तत्सहस्रनाम तुल्यत्वानुपपत्तेरितिचेन्नप्रणवस्यश्रुतरामशब्द कार्यत्वस्यस्वकारण श्रेष्टत्वोपपादकत्वेन तद्विरोधित्वानुपपत्तेः किंच प्रणवस्य विष्णु नारायणवासुदेव नृसिंह गोपाल शिव दुर्गा गणेशादि बहुदेवतामंत्राद्या वयवत्वश्रवणात्तदन्यतरदेवताया असाधारणवाचकत्वानुपपत्या तदन्य तरकारणत्वसूचकत्वा नुपपत्तेः बहूनांमूलकारणत्वा नुपपत्तेश्च न चैषां मंत्राणामन्यतरस्या साधारणयेनप्रणवविवरण त्वं प्रणवस्यतन्मूलत्वं चोपपद्यतेतुल्ययुक्त्या-प्रणवस्य तत्पूर्वकमंत्राणां च सर्वेषां मूलत्व तद्विवरणत्वोपपत्ते यथाषडक्षरतारक संज्ञकस्य राममंत्रस्यवह्नि बीजमंत्रशेषयोः

१. पूर्वोक्तवाक्यत्रयन्तलक्षकार्थः।

विवरार्यविवरणा रूपत्वमुपपद्यतेद्वयोः सारूप्यदर्शनात् अतोमा-
हात्म्य तश्चसाम्यत्वश्रवणात तत्स्मरणाच्च नचैषामन्यतर
मंत्रस्याक्षरतःप्रणवसा रूप्यंदृश्यतेऽर्थतश्च तत्साम्यंवगम्यतेप्रण
वाक्षरेभ्यस्तत्तन्मंत्राक्षराणांवैरूप्यदर्शनात शव्दशास्त्ररीत्यापि-
तेभ्यस्तदसिद्धेश्चमंत्रान्तरेभ्यः बहूत्कृष्टत्व श्रवणाच्चप्रणवस्ये-
त्यतोपि नतेषांतद्विवरणत्वमुपपद्यतेतदक्षरसारूप्य तदर्थसाम्या-
भावेपितद्विवरणत्वांगीकारे सर्वमंत्रवाच्यानां प्रणववाच्यत्व-
साम्योपपत्त्यासर्वोत्कृष्टत्वं समानंनचतद्युक्तं वहूनांमूलकारण-
त्वानुपपत्तेः किंचवैदिकप्रणवनिष्ठसर्वाक्षरात्मकत्व श्रवणावष्टं-
भेनापिनतदन्यतरस्यतद्विवरणत्वमुपपद्यते तुल्ययुक्त्यासमस्त-
मंत्राणामक्षरांतराणां चतद्विवरणत्वोपपत्त्योक्तदोषतादवस्थ्यात्
ननुप्रणवप्रत्यक्षरस्यानेकार्थकत्वात तद्विवरणत्वेपिसर्वेषांमंत्रा-
णांप्रणवतद्बहूल्यार्थ प्रकाशकत्वेनतन्मुख्यगौणार्थप्रकाशकत्वे-
नचश्रेष्ठत्वं केषांचित्केषांचिदश्रेष्ठत्वंचोपपद्यतेयथागाणपत्त्या-
दिमंत्रापेक्षया वैष्णवमंत्राणांश्रेष्ठत्वमुक्तमितिचेत्सत्यं तथापि-
युक्तिमात्रसिद्धोयंपक्षः श्रुत्यपेक्षयादुर्वलः यस्मादुपनिषत्सुवा-
च्यनिष्ठश्रेष्ठत्वमश्रेष्ठत्वंचावलंव्यवाचकस्य श्रेष्ठत्वमश्रेष्ठत्वंचाव-
गम्यतेवाचकस्यवाच्यतादात्म्यश्रवणात सीतारामौतन्मयावत्र-
पुज्यावितिपादामात्राः मात्राश्चपादाइतिचकृष्णस्तथैकोपिजग-
द्धितार्थशव्देनासौपंचपदीवभूवेतिचस्मृतिरपिवाच्यसंवंधनेवाच-
कस्यश्रैष्ठयंवदति एकांगसंगिनीगंगापावयेदखिलंजगत् अंग-

प्रत्यंगसंव्यापिनामकिं कर्त्तुमक्षममितिकिंचमंत्राणांप्रणावैकैका-
र्थप्रकाशकत्वेन नतद्विवरणत्वमुपपद्यतेविवरणस्यमूलसर्वगूढा-
र्थप्रकाशकत्वा त्सर्वैमिलित्वातद्विवरणभूताश्चे त्तदेकैकस्यन-
तद्विवरणत्वं एकस्यतदल्पार्थप्रकाशकत्वादतस्तत्तान्मंत्रन्यून
त्वपूर्त्तयेप्रणवस्यतत्तान्मंत्रपूर्ववृतित्वमुपपद्यते मिलितानांसर्वेषां
तत्सर्वार्थं प्रकाशकत्वं नत्वेकैकस्य तथात्वस्वीकारे गाण
पत्त्यादीनामपिप्रणव विवरणत्वोपपत्त्यागणेशादीनामपिप्रणव-
वाच्यत्वेनसर्वकारणत्वोपपत्तेदुर्वारात् भगवन्मंत्राणामेवतत्सर्वा-
र्थप्रकाशकत्वंन गाणपत्यादीनांमंत्राणामिति चेत्तर्हिमिलि-
तानां सर्वेषांतत्पूर्वकानामेकैकस्यवा आद्ये एकमंत्रस्यार्थ ज्ञाने-
ननकार्यसिद्धिः प्रणवकृत्स्नार्थज्ञानात्द्वितीयेपिएकमंत्रस्यार्थ
ज्ञानेनैवकृत्स्नप्रणवार्थ ज्ञानात्मंत्रान्तरस्यतदर्थज्ञानस्यवावै-
यर्थ्यापत्तिः नचभगवन्मंत्रेष्वप्यन्यतरमंत्रस्यतत्सर्वार्थप्रकाशक-
त्वमुपपद्यते सत्यंज्ञानमनंतंब्रह्मयोवेदनिहितंगुहायांसोश्नुतेसर्वा-
न्कामान्सहब्रह्मणाविपश्चितेतिमंत्रब्राह्मणयोःफलैक्यश्रवणवत्
मंत्रवाच्यज्ञाफलस्यब्राह्मणप्रकाश्यवद्वाप्रणवमंत्रशेषयोः फलै
क्यश्रवणात्प्रणवार्थ ज्ञानफलस्यमंत्रशेषप्रकाश्यत्वाश्रवणाच्च
नचप्रणवार्थज्ञानफलंकश्चिन्मंत्रः प्रकाशयतिनापिप्रणवमंत्र-
शेषयोः फलसाम्यंश्रूयतेप्रत्युतमंत्रशेषगतविषावादिनामभ्यो-

१. मूलस्य सर्वगूढार्थः मूलसवगूढार्थः मंत्राणांतत्प्रकाशभानो पपद्यते विवर्णत्वम्।

महत्वाधिक्यंप्रणवस्य ननूपपद्यतेतत्त्वोपबृंहणापुराणादिपाठ-
फलतः श्रुतिपाठफलस्याधिक्यश्रवणादितिचेन्न तत्पाठफला-
धिक्ययोः तत्पौरुषेयत्वापौरुषेयत्वहेतुत्वात्प्रकृतेतुमंन्त्रतद्ब्रा-
ह्मणयोरिव प्रणवमंत्रशेषयोरुभयोरपिवैदिकत्वेनपौरुषेयत्व
साम्यात् फलवैषम्यानुपपत्तिः सावैषम्यानुपपत्तिः प्रणवस्यत-
दुत्तरतनस्यविष्णुनारायणादि नाम्नश्चतुर्थ्यन्तस्यमूलत्वंतद्वि-
वरणत्वंबाधयति यदिप्रणवस्य बिवरणभूतंतदर्थप्रकाशकं
प्रणवोत्तर तनचतुर्थ्यन्तंबिष्णुनारायणादिकं किमपिनाम-
स्यात् तदापूर्वोक्तमंत्रप्रतिपाद्यब्रह्मज्ञानफलस्यप्रकाशक ब्राह्म-
णवत्प्रणवज्ञानफलप्रकाशकंचतुर्थ्यन्तविष्णुनारायणादिकंकि-
मपि नामस्यात्नचतथाश्रूयतेश्रूयतेहि ॐ मित्येतदक्षरंसर्वमि-
तिभूतंभव्यंभविष्यदिति सर्वमोकारएवेतियच्चान्यत्त्रिकालातो-
तंतदप्योंकारएवेतीत्येवमादीनिश्रुतिवाक्यानि प्रणवार्थस्यत-
न्माहात्म्यस्यचप्रकाशकानिश्रतः एषांवाक्यानामेवप्रणवार्थप्र-
काशकत्वेनतद्विवरणत्वमुपपद्यतेनतुतदर्थाप्रकाशकानां चतुर्थ्य-
न्तानां विष्ण्वादिनाम्नांकिंचकस्यापिमंत्रस्याक्षराणांप्रणवाक्षर
सारूप्यंनदृश्यते नप्रणवसमानार्थकत्वंचेत्यतोनतयोर्मूलतद्वि-
वर्णत्वमुपपद्यते नचक्वाप्युपनिषदिमंत्रांतर कृत्स्नार्थप्रकाश-
कानिवाक्यानिश्रूयंतेयत्रहिरामोपनिषद्यत्रोवराममंत्रकृत्स्नार्थप्र-
काशकानिवाक्यानिश्रूयंतेतत्र दृश्यतेमूलतद्विवरणयोरक्षर-
सारूप्य मर्थसाम्यंमहत्वसाम्यंच श्रूयतेतत्कथंज्ञायतेइतिचेत्-

तत्रवह्निवीजाकृतेरिवमंत्रशेषाकृतेदर्शनात् तपोरक्षरसारूप्येणै-
कार्थकत्वोपपत्तेश्चमंत्रशेषस्यवह्निवीजार्थप्रकाशकत्वावगमाच्च-
क्रियाकर्मेज्यकर्तृणामर्थं मंत्रोवदत्यथेत्याद्यौपनिषद्वाक्यानां-
स्वाभीष्टजीवेश्वरशेषशेषिभावादि मंत्रार्थप्रकाशकत्वावगमाच्च
चतुर्थीदीयते चात्रतादर्थ्यैकमलोद्भवेति तथैवरमृतेश्चमंत्रशे-
षवह्निवीजविवरणत्वमुपपद्यतेरेफारुढामूर्त्तयः स्युरितिरेफस्यो-
त्कृष्टत्वं यथाश्रूयतेतथैव जीवत्वेनेदमोंयस्येतिवह्निवीजोत्कृष्टत्वं
श्रूयतेइत्योमितीतिचमंत्रस्याप्युत्कृष्टत्वं श्रूयतेयस्मातयस्माच्च
यथाकरण्डे रत्नानि गुप्तान्यज्ञैर्नदृश्यते तद्वन्मंत्राश्चवेदाश्च-
रकारेसुव्यवस्थिताः वीजेयथास्थितोवृक्षः शाखापल्लवसंयुतः
तथैवसर्ववेदाहिरकारेसुव्यस्थिताः सहस्रनामतुल्यंरामनामवरा-
ननेलौकिकाः वैदिकाः शब्दाः येकेचित्संतिपार्वतिनामानिरा-
मचन्द्रस्यसहस्रंतेषुचाधिकं तद्दङ्नामसहस्रैस्तुरामनामसमंमतं-
विष्णोरेकैकनामैव सर्ववेदाधिकंमतं तादृङ्नामसहस्रैस्तुराम-
नामसमंमतं जपतःसर्ववेदांश्चसर्वमंत्रांश्चपार्वति तस्मात्कोटि-
गुणंपुण्यंरामनाम्नैवलभ्यतेइति वैष्णवेष्वपिमंत्रेपुराममंत्राफला-
धिकाः गाणपत्यादिमंत्रेभ्यः कोटिकोटिगुणाधिकाः विष्णोर्ना-
म्नांसहस्राणांतुल्यएषमहामनुः अनंताभगवन्मंत्रानानेनतुस-
माःकृताः इत्येवंरेफवन्हिवीजमंत्राणामौत्कृष्ट्यचसाम्यंश्रूयतेत
स्मात् षडक्षरेतदुपपद्यते यथानतथामंत्रान्तरेषु तत्रतदक्षरसारू-
प्यादर्शनादर्थसाम्यप्रणवोत्कृष्टत्व वन्मंत्राणांविषयवादि नाम्नां

चोत्कृष्टत्वाश्रवणादस्मरणाच्च तत्तदुपनिषत्सुजीवेश्वरशेषशे-
षीभावसंवंधादि मंत्रार्थपरवाक्या श्रवणाच्चतथाहि गोपालोप-
निषदिकादायः लात्पृथिवीत्येवं कामवीजककाराद्यक्षराणांज-
लाद्युत्पादकत्वमात्रं श्रूयतेनतुतेषांजीवेश्वरसंवंधादिमंत्रार्थप्र-
काशकत्वंनृसिंहोपनिषदिॐमितिअथकस्मादुच्यतेउग्रमितीत्या-
दिप्रश्नप्रतिवचन वाक्येषुनृसिंहानुष्टुपपदार्थमात्रंश्रूयतेतत्रस-
र्वेषांपदानां परमेश्वरमात्रपरत्वंश्रूयतेनकस्यापिपदस्य जीवेश्वर-
संवंधादि परत्वं तत्रैवप्रणवार्थात् उग्रादिपदानामर्थांतरत्वंस्फु-
टंश्रूयतेऽतेन प्रणवविवरणत्वमुग्रादिमंत्र शेषपदाना मुपपद्यते
उपनिषदंतरेषु मंत्रपदार्थमात्रमपिनश्रूयते अस्यांरामोपनिषदि
तु जीतेश्वर संवंधादिसमस्तमंत्रार्थ प्रकाशकानि वाक्यानि
श्रूयंतेरेफारूढामूर्त्तयः स्युः क्रियाकर्मेज्यकर्तृणामर्थं मंत्रोवदत्य
थेत्यादीनिअत्रैव षडक्षरार्थानुरोधेनैवमंत्रांतराणामप्यर्थःसमर्थ-
नीयइत्यपिज्ञापयति सर्वेषामेवमंत्राणामेषः साधारणःक्रमः
इत्येषाश्रुतिः अतोमंत्रांतरार्थपराणिपुराणादिवाक्यानिअश्रुति-
मूलकत्वेनाप्रमाणत्वं गतव्यान्यपि सर्वेषामेवमंत्राणामेषः
साधारणः क्रमइतिश्रुत्यवष्टंभेनषडक्षरमंत्रार्थपरवाक्यानुगामि-
त्वेनैवप्रमाण्यपदवींगच्छंति तस्मातुमंत्रांतरार्थपरस्वतंत्रवेद
वाक्यानुपलंभाच्चप्रणवविवरणत्वंमंत्रांतराणामुपपद्यते किंतु-
स्वस्वन्यूनतापूर्त्तयेप्रणवाश्रयत्वमेव यतः प्रणवस्यतत्तन्मंत्र-
पूर्वबृत्ति रन्यथानुपपद्यमानातत्तन्न्यूनतापूर्त्तिद्वारातस्यतस्य

चापकृष्टत्वं प्रणवस्य च सर्वोत्कृष्टत्वं सूचयतितत्तत्संयोगेन पृथक्त्वेननचतत्फलोपपादकत्वात् खादिरादिवत् यथाखादिरोयुपः यज्ञांगत्वेनतन्न्यूनतापूर्त्तिद्वारातत्तत्फलोपपादकः स्वातंत्र्येणावीर्यफलप्रदश्च तथा प्रणवोपि तत्तन्मंत्राङ्गत्वेनतत्तन्न्यूनतापूर्त्तिद्वारातत्तत्फलोपपादकःस्वातन्त्र्येणसर्वफलप्रदश्च-यः प्रणवमधीते सर्वमधीते यस्तत्त्रिमात्रं ॐ मित्येकाक्षरं ससर्वमित्याद्यासुश्रुतः तस्यैवंभूतस्यप्रणवस्य जीवत्वेनेद मोंयस्येति रामशब्दकार्यत्वश्रुतेः शाब्दशास्त्ररीत्यापि तदवयवाक्षरैस्तत्तिन्देश्च ततस्तदाधिक्योपपत्तेः प्रणवांकृतार्थीकृतशूद्रादि कृतार्थी करणादपि ततस्तत्कीर्त्त्याधिक्योपपत्तेश्च नस्वकारण रामनामोत्कृष्टत्व सूचकस्यप्रणवस्योत्कृष्टत्व मवालंव्यविष्णुपरवाक्यानां रामशब्द परवाक्योत्कृष्टत्वंतद्वाच्यत्वावष्टंभेने विष्णोरवतारित्वं चोपपद्यते किंचभवतु प्रणवविवरणत्वं विष्णवादिमंत्राणां तथापिनतत्सहायेन विष्णुपरवाक्यानां रामनामपरवाक्योत्कृष्टत्वंनचतद्वाच्यत्वा वष्टंभनेविष्णोरवतारित्वं चोपपद्यते वैष्णावेष्वपिमंत्रेषु अनंता भगवन्मंत्रानानेनतुसमाकृताः इत्यादि बहुस्मृतिवाक्यविरोधात् तत्रप्रणवविशिष्टसमस्त भगवन्मंत्रेभ्यः राममंत्रोत्कृष्टत्व स्मरणात्मंत्राणांप्रणववैशिष्ट्यानगीकारेतयोर्मूल विवरणत्वव्याघातात्प्रणवस्य तत्पक्षपातित्वा नुपपत्तेश्चेत्युभयतः पाशारज्जुरित्यलम्मतिविस्तरेण यत्तूक्तमस्तुतर्हिरामनाम पराणांमुख्या-

र्थत्वत्यागो विष्णु परवाक्यविरोधादिति तदपिनोपपद्यते पूर्वो-
क्तरीत्योपक्रमश्रुतिविरोधेन उपसंहार चरममंत्रविरोधेन चार्था-
तरपरत्वेन नीतानांतेषामेव रामनाम परवाक्यसंदर्भे विरोधेन
सुतरामर्थांतरपरत्वोपपत्त्या अर्थांतर परत्वेनैवतेषां श्रुतिमूल-
कत्वोपपन्नत्वात्तत्कुतः विष्णुपरवेद वचनस्य तद्वचनसंदर्भे
विरोधेनार्थांतर परत्वोपपादनात् यद्यपि विष्णुपरस्मृति
वचन मुख्यार्थत्वे श्रौतं प्रमाणंनोपलभ्यते तथापिक-
श्चिद्यदिस्वप्रौढ्या वेद मूलकं तन्मुख्यार्थकत्वमङ्गीकृत्य
तद्विरोधेन रामनामपराणां प्रशंसामात्रपरत्वं वदेत्तदपिनैषां-
तदुपपद्यते भगवन्नाम्न्यर्थवादत्वानुपपत्तेः किंचत्वदभीष्टतत्प्रशं-
सामात्र परत्वेपि नत्वदभीष्टसिद्धिः कुतइतिचेच्छृणु तत्रहेतुं
यदिपेक्षयास्तूयते यद्वस्तु तस्मात्किंचिद्गुणाधिक्यं तन्निष्ठ
मवलंब्य प्रसंसायाः प्रवृत्तेः यतोगुणाद्यपकृष्टक्षत्रियाद्यपेक्षया-
गुणाद्याधिक्येन ब्राह्मणजातिः स्तूयतेइयं भूमिदेवतेति अ-
विद्यब्राह्मणापेक्षया विद्यावान् ब्राह्मणः तदपेक्षयापि शंशय
छेत्तादिरुत्तरोत्तर, गुणाधिकः नतुस्वसामभ्यधिक गुणादिमद्ब्रा-
ह्मणापेक्षया ब्राह्मणांतरंस्तूयते अतोविष्णवादि नामभ्योयद्गु-
णाद्याधिक्य मवलंब्य रामनामस्तूयतेतस्यैव गुणादेस्तद्वाच्य
निष्ठत्वोपपत्ते विष्णवादिशब्दवाच्येभ्यस्तद्वाच्याधिक्य मुपप-
द्यते वस्तुतस्तु भगवन्नाम महत्वेर्थवादत्वानुपपत्तेस्तद्विषयं
प्रशंसामात्र वचनम ज्ञानमूलं असंमतं च तेषां वेदवचना-

नां स्मृतिवाक्यानां तदवलंब्याचार्याणां च येउपदिशंति
प्रथमं ब्रह्मणत्व संपादिनीं परमेश्वर नामात्मिकांब्राह्मण
भायत्रींयेच स्वशिष्यान्प्रतिमंत्रमादावुपदिशंति नामात्मकंभग-
वत्स्वरूपध्यानादिकंतुपश्चात् जपात्तेनैवदेवता दर्शनंकरोति-
कलौ नान्येषा मितिश्रुतेः हरेर्नामैव नामैव नामैव ममजी-
वनं कलौनास्त्येवनास्येव नास्त्येवगतिरन्यथा रामेतिवर्णद्वय
मादरेणसदाजपन्जंतुरुपैतिमुक्तिं कलौयुगे कल्मषमानसाना-
मन्यत्रधर्मेखलुनाधिकारः इत्यादिस्मृतिवचनानांचविरुद्धं
तद्वचनंयाभिः श्रुतिस्मृतिभिः कलेयुगेमुमुक्षून्प्रत्युपायांतर-
परित्यागेनहरिनामैकोपायत्वंशिक्षितं तथार्थवादोहरिनाम्नि-
कल्पनमित्यादितद्विषयकार्थवादप्रतिषेधकस्मृतिवचन विरु-
द्धंचद्भ्रुवो नादरणीयंपंडितैः अनुपपन्नत्वाच्चकथंतदनुपपत्तिरि-
तिचेच्छृणुयूयतद्विरुद्धादित्यागुणविधायकवाक्यवत् नाग्नितं-
द्विरुद्धगुणविधायकवचनाभावान्नतत्रगुणवादोपपत्तिः जगदु-
त्पादकत्वादि तद्वाच्यधर्मविधानंतु तत्रयुक्तंवाच्यवाचकयोरभे-
दश्रुतेः प्रत्यक्षावगताग्नि हिमभेषजत्वानुवादक वाक्यवत्
नामपर वाक्यानां प्रमाणांतरावगतार्थानुवादकत्वाभावान्न
तत्रानुवादाख्यार्थ वादत्वोपपत्तिः श्रुत्यर्थानुवादकत्वंतुस्मृति
प्रमाणत्वे मूलं किंच यच्छ्रुति प्रमाणावगतस्य नाममहत्वस्य
निर्बाधात्तद्वाचस्य निर्बाधं सर्वोत्कृष्टत्व मुपपद्यते विध्यऽ-
सन्निधेर्न विधि शेषत्वोपपत्तिः प्रत्युत पत्सूयते

ततद्विधीयते इतिन्यायात्तत्र विधिः कल्प्यते तदेवं श्रुति स्मृति महाजन वचन विरोधादयोक्ति कत्वाच्च तत्रार्थ-वादत्वासिद्धेर्वाध कांतराभावाच्च भगवन्नाम महत्व विषयक वाक्य संदर्भबोधितार्थस्य निर्वाधत्वनिश्चयात् तद्विरोधेन तद्वाच्यस्यतदपकृष्ट गुणविष्णवादि नामवाच्यावतारत्वा-सिद्धेः विष्णवादि विषयक कारणत्वावभासकानां जज्ञेविष्णु-रित्यादीनांतेषामपि महातेजाः रामोरतिकरः पितुः स्वयंभूरि-त्रभूतानां वभूवगुणवत्तरः सहिदेवैरुदीर्णस्य रावणस्यवधा-र्थिभिरर्थितो मानुषे लोके जज्ञेविष्णुः सनातनः इतिसहिरामो-जज्ञे कथंभूतो रामः विष्णुः व्यापकः गुणः सनातनः अनादि व्यापकइत्यर्थः इत्यवंविष्णु शब्दस्य रामपदविशेषणत्वेनार्थां-तरपरतया निर्वाधेनान्यथा सिद्धिर्निष्पन्नतरेत्य वधेयं संप्रदाय-विद्भिः श्रुतिस्मृति निर्विरोधार्थावकलनतत्परैः शास्त्रैकप्रमाण-वद्भिः पंडितैः येत्वेवनिर्णीयदर्शितमपी ममर्थं न जानंति-ज्ञात्वापि नधारयंति नोपदिशंति च स्वशिष्यान्प्रतिग्रंथ परं-परोपदिष्टार्था छादितपरतत्व ज्ञान चक्षुषः परलोका नादरेणैहि कार्थ परतया पंडिता पसदाइत्यनादरणीयाः श्रुतिस्मृतिपुर्वा-पर वाक्यनिर्विरोधार्थ निर्णयपूर्वकं तदनुष्ठानतत्परैः पंडितैः यत्तुवाल्मीकीये विष्णोरर्द्धमित्युक्तं तस्य तत्पुर्वापरवाक्यनि-र्विरोधेनार्थईदृशो निष्पद्यते विष्णोः स्वरूपतो व्यापकस्य व्या-पकतेजो विशिष्टस्य चार्द्धतेजः संकोचनेन तदाश्रयमात्रं श्री-

दशरथगृहे अप्रकाशितत्तेजस्कत्वात् स्वर्गारोहन समये तत्प्र-
कटीकरणाच्च अतएव तत्समये अथविष्णुर्महातेजाः पितामह-
मुवाचहेत्येवमादयस्तत्प्रकटिततेजः सूचकोक्तयः संगच्छन्ते
प्रकाशापेक्षया प्रकाशिनः प्रधान्यादुक्तं महाभागमितिअथवा
विष्णवादि कारणस्य रामस्यतदर्द्ध भागत्वानुपपत्तेः सर्वव्याप-
कत्वेन सर्वनियामकस्य तस्यस्वव्याप्येननियम्येनकेनाप्यशक्य-
खण्ड नाच्च तद्विषयकार्द्ध शब्दस्याखंडार्थपरत्वानुपपत्त्यास्था-
नार्थ परत्वेन विष्णवाद्याधार लक्षकत्वमुपपद्यते परमेपरार्द्धे-
पितुरर्द्धमियायराज्ञोर्द्ध मियायत्यादि वेदवचनेभ्योप्यर्द्ध शब्दस्य
स्थानवाचकत्वावगमात्तथा चविष्णोरर्द्धस्थानं तल्लक्षितमा-
धारं आश्रयमितियावत् इत्येवमत्रस्यार्द्धशब्दस्यविष्णोराश्रया-
र्थकं त्वमुपपद्यते उपक्रमे विष्णुरात्मवानित्यत्र श्रीरामस्यवि-
ष्णवात्मत्वनि र्देशेनतदाश्रयत्वसूचनात् विष्णुत्वमुपजग्मि-
वानित्युपसंहारेतु तस्यविष्णवतारित्वेनतदाश्रयत्व स्फुटीकर-
णाच्च ब्रह्मणोरूपकल्पना ॐ योवैश्रीरामचन्द्रः सभगवान्-
यत्परंब्रह्मयो ब्रह्माविष्णुरित्यादि वेदवचनैः श्रीरामस्य विष्णा-
वादि रूपित्वावगमाच्च तदेवं वाल्मीकीयेपि श्रीरामस्य विष्णा-
वादि कारणत्व निष्पत्त्या तत्संबंधिनां तत्पत्न्यादीनामपि
तत्पत्न्यादि कारणत्वोपपत्तेः श्रियःश्रीर्भवेदग्रेत्यादि वाक्यानां
यथाश्रुतार्थकत्व निष्पत्तेः श्रियः श्रीः श्रीदेव्या अपिश्रीत्वोप-
लक्षिततच्छ्रेष्ठत्वे न तत्कारणत्वं तथाकीर्त्तेः लीलादेव्या

अपिकीर्तित्वंन तल्लीलात्वहेतुत्वे नतथावसुधायाश्च वसुधां श्रियः श्रीभर्तृवत्सलामिति युद्धकांडेक्तितेः भूमिदेव्या अपि-भूमि देवीत्व हेतुत्वे नतत्तत्कारणत्वं श्रीजानक्या उपपद्यते तथाप्रभोः प्रभुरित्यत्रापि विष्णवादि कारणत्वात्तत्प्रत्यपि प्रभु-त्वं श्रीरामस्योपपद्यते अवतारस्य स्वकारणाभिप्रेतकार्यकारि-त्व मात्रेणैव तन्नियम्य त्वोपपत्तेः अत्रापरोऽतिप्रश्नं करोतिननु रामशव्दस्य परतत्व मुख्यनामधेयत्वे तस्यैवप्रातीतिकबुद्धि-निर्वत्तकत्वोपपत्तेः विष्णोपुत्रत्वमागच्छेत्यत्र आगच्छ विष्णो-भद्रंतेइत्यत्र च अथविष्णुर्महातेजाः इत्यत्र च जज्ञे विष्णु-सनातन इत्यत्र च भवान्नारायणोदेव इत्यत्र चततः प्रति-ष्ठितोविष्णुस्वर्गेइत्यत्र चसर्वत्र विष्णवादि पदस्थाने रामपदं-किंनदत्तामिति चेच्छृणु नेत्थंकेन चित्किमपि प्रतिपृष्ठमद्या-पिपदांतरस्थाने पदांतरं किंनप्रयुक्तंस्मृतिकारैः श्रुतिभिश्चयेन-निः संसयं पदार्थवोधः स्यादितिकिंतु सर्वैरपि शिष्टैराचार्यैस्ता-त्पर्या नुपपत्या संभवितार्थे वाक्य विरोधाच्च संभवितार्थे-वाक्यान्यर्थांतर परत्वेननीतानि यथा आकाशादिवाक्येषु परमेश्वर लिंगवाहुल्य दर्शनात् अनन्यथा सिद्ध-लिंगेनश्रुतिवाधात् आकाश प्राणादिश्रुतयः परमेश्वरपरत्वेन नीता यथा च अनाश्रितः कर्मफलं कार्यं कर्म करोतियः ससन्यासी च योगी च न निरग्निर्नचाक्रियः" इत्यत्रगौण सन्यासित्वमुक्तं "क्षेत्रज्ञं चापिमां विद्धीत्यत्रतात्पर्यानुपपत्त्या

मामित्यस्य मदात्मके लक्षणाकृता अहं ब्रह्मास्मीति अयमात्मा ब्रह्मत्येवत्वादिष्वपितयैवरीत्याब्रह्मशब्दस्य तदात्मके लक्षणाकृतान तु तत्र तत्तद्व्याख्यातॄनप्रतिकेनापि श्रोत्रा- किमर्थं श्रुतिभिर्वियदादिरूढमाकाशादि पदं परमेश्वर परत्वेन प्रयुक्तंन तु योगरूढं तद्विषयकं विष्णवादिपदं येननिः संशयं परमात्मबोधोभवेत्किमर्थं भगवतापि सगौण सन्यासी गौण योगी च क्षेत्रज्ञंमदात्मकं विद्धीत्येवं नोक्तं अहं ब्रह्मात्मको स्मीतीदृशी श्रुतिश्चापि किंनामूदित्येवं न पृष्टं यथा त्वं पृच्छसि किमर्थं ' विष्णोपुत्रत्वमागच्छ जज्ञेविष्णुः सनातनः । महार्णवेशयानोप्सुमांत्वं पूर्वमजीजनः । रक्षांविधास्यन्भूतानां विष्णुत्वमुपजग्मिवानि " त्यादीनिच परस्परविरुद्धार्थकान्युक्तानि परमर्षिणेति तस्मात्तावायं प्रश्नोयद्यपि निरर्थकः महाजनः परम्परा विपरीततयादृष्टांतपूर्वक तत्प्रत्युत्तराला- भात्तथापित्वन्मनः सन्तोषाय किंचिद्वक्ष्यामः शृणु तदेकाग्रेणमनसाभगवन्नान्यर्थवादानुपपत्तेः प्रत्युत्तन्निषेध श्रवणाच्च यथा श्रुतार्थकानि विष्णो ' र्नाम्नां सहस्राणां तुल्यएषमहामनुः । जपतः हर्वेवेदांश्चेत्यादीनि श्रीरामनाम्नो विष्णवादि भगवन्नामान्तरेभ्यः सहस्रगुणाधिक्य प्रतिपादकानि श्रीरामशब्दवाच्यस्य विष्णवादि शब्द वाच्येभ्यः सहस्रगुणोत्कृष्ठ त्वद्योतनेन रामविषयक विष्णवतारत्व वचनानुपपत्ति सूचनद्वारातदन्य थासिद्धि सूचयंति उदाहृत वाक्य संदर्भ सह-

क्तानां विष्णुत्वमुपजग्मिवानित्यादीनां विरोधेनाप्युपपद्यते तेषां तादृशसहकारिरहिता नामन्यथा सिद्धिः साचान्यथा सिद्धिस्तेषां तत्तद्वाक्याविरुद्धार्थाकांक्षिभिर्विद्वद्भिर्यथासंभव मुह्येत्यस्माभिर्यथा मत्यूह्यमानां तामवलोकयतावत् ' विष्णो-पुत्र त्वमागच्छकृत्वात्मानं चतुर्विधमित्यत्र जज्ञेविष्णोरेव प्रत्यक्षात् किंच विष्णुंप्रतिरामंपुत्रत्वमापाद्यघातयते न रावण मित्येवमुक्ते श्रीरामात्तस्यतात्विकभेदप्रतीतिः स्यादतोन तथोक्तं किंच विष्णोर्पुत्रत्वमागच्छेत्येतावत्यैवोक्त्या स्वार्थ सिद्धेरन्यथातत्रात्मपदोपादानस्यवैय्यर्थापत्तेरतदात्म्य पदमन्य थानुपपद्यमानं तत्कारणं लक्षयतीत्यवगम्यते रक्षांविधारयन्भू-तानां विष्णुत्वमुपजग्मिवानिति रामनिष्ठ विष्णु कारणत्व द्योतकोपसंहार वाक्यानुरोधेनोपक्रमस्थात्म पदस्यान्यथा स्वार्थमनुपलभ मानस्य तत्कारणं लक्षकत्वोपपत्तेश्च आगच्छ विष्णोभद्रंते इत्येवमादौ तु वशिष्टकृतना-म्नः सच्चिदानंदार्थक तदनादि नाम्नश्चोभयोः सारूप्येण-भेदानवगमात् कृतनाम्नो दशरथात्मज वाचकत्वलोकप्रसि-द्धयाशास्त्रीय तत्परं ब्रह्मवाचकत्वाछादनेन तदज्ञानात्तुच्छानंद विषया छादितदृष्टीनां शास्त्रावगत ब्रह्मनिरति शयानंदाज्ञा-नवत्तथात्मानं मानुषंमन्ये रामंदशरथात्मज मिति स्वकंठतोपि-स्वमानुषत्व विषयकोक्त्या रामशब्दस्य तत्परत्वोक्त्या च तत्परब्रह्मपरत्वा छादनाच्च आगच्छ रामभद्रं तेइत्येवमाद्युक्ति

भिस्तद्विषयक मानुषत्वप्रतीत्यनिवृते न तत्रतत्र वि ष्णुपद-स्थाने रामेतिपदंप्रदत्तं स्वर्गगमनसमये पूर्वोपार्जितपुण्य निचय जीवानामपिमहातेजस्त्वोपपत्त्या तेनपदेन विशेषि तस्यापि रामपदस्य प्रातीतिकबुद्धिनिवर्त्तकत्वानुपपत्तेर्नत्ररामममहातेजाः इत्येवमुक्तं तथा भावान्नारायणोदेव इत्यत्रभवान् रामोदेवइत्यु-क्त्यापितादृशबुद्ध्यनिवृते. किंचास्मिन् वाक्ये नारायणपदेनैव-तादृशबुद्धिनिवृत्या एकशृंगवराहादि पदोपाद। नस्यवैयर्थ्यापत्ते र्विशेषतः श्रीरामस्य नारायणादिरूपित्व द्योतनार्थक मिदंवा-क्य मि॰ गवगम्यते महार्णवेशयानोप्सु मांत्वं पूर्वमजीजन इति तथैवस्मरणात् उपनिषच्चरममंत्रेपु तथैव श्रवणाच्च ततःप्रतिष्ठितो विष्णुः स्वर्गेइत्यस्य ॰त्युत्तरं ततःप्रतिष्ठितः स्वर्गेपूर्ववद्रघुनंदन इत्यादिनापूर्वदत्तं तथाजज्ञेविष्णुःसनातन इत्यत्र तेषामपिमहातेजाःरामोरतिकरः पितुः स्वयंभूरिवभूतानां वभूवगुणवत्तरः सहिदेवैरुदीर्णस्य रावणस्यवधार्थिभिः अर्थितोमानुषेलोके जज्ञेविष्णुः सनातनः इत्यत्रासहिदेवैरर्थि-तोरामोमानुषेलोके जज्ञे आविर्वभूव कथंभूतः विष्णुःसर्व-व्यापकः पुनः सनातनः अनादिः सच्चिदानंदार्थकरामनाम्नो ऽनादित्वेन तद्वाच्यस्य सदानंदगुणकापरिच्छिन्नचिदात्मक-स्यरामस्य ब्रह्मणोनादित्व निर्बाधादित्येवं रामपदस्य क्रिया-न्वयित्वेनविशेष्यपदत्वं विष्णुपदस्य तद्विशेषणत्वमुपपद्यते यस्माततस्माद्विष्णुपदस्य जज्ञेइतिक्रियापदेनान्वया भावात्

न विष्णोर्मानुषेलोके आविर्भाव उपपद्यते अपिसच्चिदानंदार्थ करामपद वाच्यस्य रामस्यैव इतिरामस्य रामाख्याभुविस्या-दिति तथैवश्रुतेश्च अत्रसनातन पदविशेषित्वेन रामपदस्यस्व-वाच्य निष्ठ मूलकारणत्व द्योतकत्वेपिवेदैक प्रमाणवतां शि-ष्टानां वेदवचनानुरूप वचनवत्वयोग्यात् चिन्मयेस्मिन्महा-विष्णौ जातेइत्यस्यानुरोधेनोक्तं जज्ञेविष्णुः सनातन इति तत्रसनातनइति विशेषणंमहदिति श्रौतविशेषणवच्चतुर्भुज जगत्पालक विष्णवाविर्भावव्यावृत्तिद्वारातत्कारणस्यात्रावि-र्भावत्वं द्योतयतिततस्त्वमसिदुर्धषस्तस्माद्भावात्सनातनात् रक्षां विधास्यन्भूतानां विष्णुत्वमुपजग्मिवानिति विष्णुकारणपर-वाक्ये सनातन पदस्मरणात्तत्रैव रामस्यविष्णुकारणत्व द्योत-नाच्च वेदेपिरामस्य ॐ योवै श्रीरामचन्द्रः सभगवान् योब्रह्मा-विष्णुमहेश्वरइति विष्णुरूपित्व श्रवणाच्च तस्मात्स्मार्त्त विष्णु पदस्यापिश्रौत विष्णुपदवत् तद्व्यापकत्व गुणपरत्वागमात् सहिजज्ञेविष्णुः सनातन इत्यस्य सहिरामः व्यापकः अनादि सर्वव्यापकोरामः सच्चिदानंदार्थक रामपदवाच्यः प्रादुर्भूवेत्य-र्थकत्व मुपपद्यते ननुवेदेनापि चिन्मयेस्मिन्परेरामे दशरथा-त्मजेइत्येवं किंनोक्तं येननिः संशयंपरत्वबोधः स्यादितिचेन्-मैवंशंकनीयं स्वतंत्रत्वस्य तस्य नियोज्यानुयोज्या विषयत्वात्त थापिवेदस्यदेवानां चपरोक्ष प्रियत्वाच्च तथोक्तमितिब्रूमः तदि-दंदृंसंत्तमिंद्रमित्याचक्षते परोक्षप्रियाइवहिदेवा इत्येवमादि

श्रुतिभ्यः परोक्षवादोवेदोयं परोक्षं च ममप्रियमित्येव मादिस्मृ-
तिभ्यश्चवेद देवयोस्तथात्वावगमात् वेदेनरामशब्दस्य परतत्व-
मुख्यवाचकत्वं गोपितमित्यवगम्यते तच्चकश्चिद्विशिष्टाधिका-
रीजानातु न सर्वोपिजन इत्येतदर्थं ननुतत्सत्त्वेतद्गोपनत्वोपपत्ते
रत्रतदभावातन्नास्तीति वक्तव्यमितिचेन्न अन्वर्थादिसंज्ञकः
रुद्रस्तारकं ब्रह्मव्या चष्टे तारकंदीर्घानलमित्येव मादिभिरत-
स्यानादिसंज्ञकत्वेन परतत्वमुख्यवाचकत्वसूचनात् ब्रह्मा
दीनांवाचकोयंस्वभूर्ज्योतिर्मयोऽनंतरूपीस्वेनैवभासतेजीवत्वेने-
दमोंयस्यइत्योमिति च ब्रह्मात्मकाः सच्चिदानंदाख्यारेफा-
रूढा मूर्तयः स्युः सर्ववाच्यस्यवाचकः इत्येवमादिभिस्तस्य-
प्रणवकारणत्वेन ब्रह्मात्मकत्वेन ब्रह्मविष्णुमहेश्वरा श्रयत्वेन
सर्वशब्दवाच्यवाचकत्वेन च रामनाम्नः परतत्वपरब्रह्ममुख्य-
वाचकत्वस्फुटीकरणाच्च विष्णोर्नाम्नां सहस्राणांतुल्य अनंता-
भगवन्मंत्राः नानेनतुसमाकृताः विष्णोरेकैक नामैव जपतः
सर्ववेदांश्चत्येवमाद्याभिःस्मृतिभिःस्ततस्फुटीकरणाच्चननुवेदे
नतद्गोपितं तेनैवतत्स्फुटीकृतं चेतिपरस्परं विरुद्धमिति चेन्न-
कंठतस्तथानुक्तेस्तन्महात्म्य कथनद्वारातद्योतनाच्च तद्वाच्यस्य
स्फुटमवतारित्वानुक्तेश्चयतश्चिन्मयेस्मिन्महाविष्णौ चिन्मय-
स्यब्रह्मणोरूपकल्पनेत्यत्र ब्रह्मणोऽवतारित्वं श्रूयतेमहाविष्णु-
ब्रह्मशब्दयोः पर्यायित्वेन तन्मुख्यवाचकत्वं च प्रतीयते ननु-
दाशरथ्याकृतेरनादित्वं महाविष्णुहरिशब्दयोस्तद्गुणवाचकत्वं

च्चकिं तुजातेदशरथे इति वचनतस्तस्यकेवल मवतारत्वं रघु-कुलेऽखिलं रातीत्येव मादिवाक्यानिरुक्तस्य रामशब्दस्यतद्वा-च्चकत्वंच्च रमंतेयोगिन इतिनिरुक्तस्य रामशब्दस्यासाविति सूचितदाशरथि परत्वेन तत्परब्रह्मावतारत्व सूचकत्वंच्चप्रतीयते नत्ववतार्य्या ङ्क्त्यैवात्रतदाविर्भाव सूचकत्वमतः परोद्देशातद-वतारित्व मुक्तमित्युच्यतेऽस्माभिः तस्यविशिष्ठाधिकारि विज्ञे-यत्वंत्वित्थमुपपद्यते कथमितिचेत महाविष्णुब्रह्मादिशब्दानां सामान्य शब्दत्वेन पशुछागन्यायतो विशेष शब्दो पस्थापिते पर्यवसानत्व योग्यात्ते सर्वेपिकस्य चित्स्वसमा-भ्यधिक महात्म्यवद्विशेष शब्दस्य वाच्ये पर्यवस्य तस्यैवाव-तारित्वं वोधयंति " रामशब्दस्य तु प्रणवकारणत्व श्रवणं विष्णवादि सहस्रनाम तुल्यत्व सर्ववेदसर्वमंत्र जपफलाधिक फलप्रदत्वस्मरणं चान्यथानुपपद्यमानं " स्ववाच्यस्य विष्णवा-दि शब्दवाच्य कारणत्वं ज्ञापयति " रमन्ते योगिन इति वाक्ये श्रुतस्य सच्चिदानन्द वाचकस्य रामशब्दस्य " दाश-रथिगतपरब्रह्मावतारत्वसूचकत्वं तु नोपपद्यते " चिन्मयेस्मि न्महाविष्णौजाते दशरथे हरावित्यनया प्रथमयैवर्चातस्य चि-न्मय महाविष्णुत्वावतारत्व स्फुटीकरणात् " वाक्यान्तरेण सूचितस्य वाक्यान्तरेण स्फुटीकरणोपपत्तावपि उपक्रमवाक्य स्फुटार्थस्य " वाक्यान्तरेण सूचनत्वानुपपत्तेः " किंतु रमन्ते योगिन " इति वाक्यस्य रामशब्दनिष्ठानादि सच्चिदानन्दा

त्मक परब्रह्माभिधायकत्व द्योतनेन "सच्चिदानन्द ब्रह्म सर्वां ग वाचकत्व सूचनद्वारातदनादि मुख्यनामध्येयत्व सूचनेन तद्वाच्य रामनिष्ठावतारित्व सूचकत्वमुपपद्यते " गुप्तार्थस्य सूचनत्वोपपत्तेः " तदगतस्या साविति पदस्य तु रघुकुलेऽखिलन्तरातीत्येवमादिवाक्य निरुक्त गौणरामपदवाच्याद्दशरथात्मजात्सच्चिदानन्दार्थक रामशब्दा भिहितस्य परब्रह्मणः पृथक् प्रतीति निवारकत्वेन तदैक्यबोधनद्वाराद्दाशरथ्याकृतिनामधेययोरेव तदवतार्याकृति नामध्येयत्व सूचनद्वारा च स्वयमवतारिण एव रामस्यात्रावतारत्व सूचकत्वमुपपद्यते न तु पर ब्रह्मावतारत्वमात्र सूचकत्वं " चिन्मयेस्मिन्महाविष्णौजाते दशरथेहराविव्यनया तस्य तदावतारत्व स्फुटीकृतत्वात रघुकुलेखिलं रातीत्याद्याभिश्चादावेव तस्य परब्रह्मावतारत्व सूचनात् स्फुटार्थस्य सूचनत्वानुपपत्तिवत् " वाक्यांतरेण सूचितस्यापि सूचनत्वानुपपत्त्या तस्य " वाक्यांतराज्ञाततदवतारित्व ज्ञापकत्वोपपत्तेः " किंचशिष्टैरवतार्यवतारयोः पूर्वोत्तरावस्थामात्रभेदांगीकारात ब्रह्मणोऽद्वितीयस्य खण्डीभावानुपपत्त्या तन्न्यूनाधिकभाग नैमित्तकावतार्यवतारवचनायुक्ताच्च तत्तन्नामधेय माहात्म्यन्यूनाधिक द्वारैवतत्तद्वाच्याविषय कावतार्यवतारवचनोपपत्तेः भगवन्नाम्नांमध्ये रामेतिनाम्नः सर्वशब्द सर्ववेदकारण प्रणवकारणत्वश्रुतेरतोपि विषणवादि, सहस्रनामतुल्यतत्स्मरणोपपत्तेश्च " जपतः

सर्ववेदांश्च सर्वमन्त्रांश्च पार्वति। तस्मात्कोटि गुणां पुण्यं राम नाम्नैव लभ्यत इत्यस्याः रामशब्दनिष्ठ सर्ववेद सर्व मंत्रजप फलाधिक फलप्रदत्वस्मृतेः तस्य प्रणवादि कारण त्वोपपादकत्वाच्च रामशब्द वाच्यस्य मन्त्रान्तर वाच्यावतारित्वमुपपद्यते किंचरामशब्द परत्वपर श्रुतिस्मृतियुक्ति सहकृतानां श्रीरामनिष्ठसर्वरूपित्वप्रकाशकचरममंत्रात्मकश्रुतीनामीदृशश्रुति स्मृति सहकारिहीनेभ्यो महाविष्णु हरिब्रह्मश्रुतिभ्यो वलीयस्त्वेनवलवदनुरोधेन दुर्वलानां तासांगंतव्यतया गौणार्थकत्वोपपत्तेः श्रीरामशब्दवाच्येतेसर्वे पिमहाविष्णवादि शब्दारत त्तद्गुण कर्मप्रकाशनद्वारापर्य्यवस्य तस्यैवावतारित्वं ज्ञापयंती तीत्थमप्युपपद्यतेतस्यसर्वोत्कृष्टत्वंकिंचाकाशप्राणादि वाक्येषु ब्रह्मलिंग वाहुल्यदर्शनात्वहूनामनुग्रहोन्याय्यः त्यजेदेकंकुलस्यार्थेग्रामार्थेचकुलंत्यजेत्ग्रामंजनपदस्यार्थेमात्मार्थेसकलंत्यजेदित्येवमादिन्यायात् अन्यथासिद्धलिंगेनार्थांतरगंतव्यायाः श्रुतेर्मुख्यार्थवाधाच्चयथा काशादि श्रुतीनांभूताकाशादि परत्वनिरासेन परब्रह्मपरत्व मुपपादितं तथा त्रापि महाविष्णु हरिब्रह्मशब्दवाच्यस्यासाधारणलिंगा श्रवणात् द्विभुजधनुर्द्धरत्वजानकी पतित्वादि रामशब्दवाच्यलिंग वाहुल्य दर्शनाच्च परतत्वस्या विद्याविरोधित्वेन मायिकद्विभुजत्वाद्या नुपपत्तेश्च वलात्तदंगीकारेच्चतुर्भुजत्वादिष्वपितद्दृष्टांते नमायिकत्वापत्तेश्चोक्तरीत्या लिंगतः श्रुतिवाधाच्च बहुशब्दानां मुख्यवृत्त्याएकवाचकत्वानुप

पत्तेश्चमहाविष्णुब्रह्मादि शब्दानामन्यथा सिद्धयाव्यापकत्वा
दितद्गुण परत्वेन श्रीरामपरत्वोपपत्ते धनुर्द्धर द्विभुजादिमतः
परात्परस्यतस्यैकाकृतेरेवद्विविध रामशब्दवाच्यत्वोपपत्त्यावतारि-
णःसतः एवावतारत्वं चोपपद्यते इत्येवं कश्चिद्विशिष्टाधिकारी
जानातिनसर्वोपियतोद्यापि महाविद्वांसः इतिजगति ख्याति-
गता आचार्यत्वाभिमानिनोपि महाविष्णुहरि शब्द श्रवण
मात्रेणदाशरथेर्विष्णुहर्य्यवतारत्वं रामशब्दस्यावतार मात्रवा
च्यकत्वंचमन्यंते उपदिशंति च तथैव स्वशिष्यान्प्रतितेपितथैव
स्वशिष्यान्प्रतितेपितथैव स्वशिष्यान्प्रतीत्येवंगतानुगतिकाअद्या-
पिभ्रांताःनहितेश्रीरामशब्दश्रुतस्मृतेद्दशमाहात्म्ये किंकारणमि-
त्येवं संदिह्यसर्वेषांभगवन्नाम्नांसर्वपापदाहकत्व मुक्तिप्रदत्वादि-
समानत्वश्रवणात्तथैव तत्स्मरणाच्चतयोस्तदाधिक्येहेतुत्वं नोपपद्यते
श्रूयतेस्मर्य्यते चतयोस्तत्राधिक्यं चेत्तादातत्रतदाधिक्येपिकोहे-
तुरितिच्च संदिह्यतत्ररमंतेयोगिन इत्यादिश्रुत्योक्तं रामशब्दनि-
ष्टाशेषसच्चिदानंद स्वरूप परब्रह्मसाक्षातवाचकत्वं तथास्वभू-
र्ज्योतिर्मयोऽनन्तरूपीस्वेनैवभासते ब्रह्मात्मकाः सच्चिदानंदा-
ख्या इत्युपासितव्यं रेफारूढामूर्त्तयः स्युरित्येवमादिश्रुतिभिरु-
क्त मृयद्रामशब्दस्यस्वप्रकाशज्योतिर्मयापरिछिन्न चित्स्वरूपत्वे
न परब्रह्मात्मकत्वं च ब्रह्मविष्णुमहेशाद्याश्रयत्वेनतत्तत्कार-
णत्वंचेतिहेतु त्रयंचविचार्य तेनैवहेतुत्रयेण तद्वाच्यस्यसच्चि-
दानन्दात्मकस्य परस्यब्रह्मणः रामाख्यस्य परात्परतरस्यस्वनि-

त्यद्धिभुजाद्याकृत्यैवात्राविर्भावत्वं रामशब्दस्य तन्मुख्यवाचकत्वंसर्वोत्कृष्टवाच्य तादात्म्य संबंधस्यैवतद्वाचक सर्वोत्कृष्टत्वे हेतुत्वं च जानंत्यतोविष्णु हर्यादि शब्दश्रुतिमाश्रित्य " तस्यैवावतारत्वं " मन्यंते न च तत्पूर्वापर श्रुति विरोधेन तदुपपद्यते " भोक्ता भोग्यं प्रेरितारंच मत्वा सदापश्यंतिसूरयइत्यादि श्रुत्यंतर विरोधे नायमात्मा ब्रह्मअहं ब्रह्मास्मीत्यादिश्रुतिगत ब्रह्मशब्दस्यब्रह्मात्मके लक्षणाकारणात्तासां श्रुतीनांमद्वैतपरत्वानुपपत्तिवत्यदितु चिन्मयेस्मिन्महा विष्णौ जज्ञे विष्णुः सनातनः विष्णोपुत्रत्वमागच्छेत्यत्रविष्णुमात्र श्रुतिमात्रेण विष्णुः कारणत्वंस्वीक्रियतेतदाहं ब्रह्मास्मीत्यादी नामपिश्रुतिमात्रेण द्वैतार्थपरत्वंस्वीकार्यमितितेनश्रीरामपरत्वहानिरिवद्वैतस्यविशिष्टाद्वैतस्यापिहानिः स्यात्यस्मात् अद्वैतवादिभिरपिभोक्ता भोग्यं प्रेरितारंचमत्वाज्ञाज्ञावजावीशानी शानावित्यादीनां स्फुटं तद्वैतार्थ वादिनीनां श्रुतीनां यथाश्रुतार्थ कत्वांमंतव्यंनत्वौपाधिकत्वं तेनतेषामप्यद्वैत वादहानिर्भवेत्तस्माद्यथान्यायानुग्रहीत श्रुत्यंतरविरोधेनासां श्रुतीनां ब्रह्मात्मैक्य परत्वनिरासेन ब्रह्मशब्दस्य ब्रह्मात्मके लक्षणयाहं ब्रह्मात्मकोस्मीत्येवंद्वैतार्थ परत्वं विशिष्टार्थ परत्वं चोपपद्यते वैष्णवैः अद्वैतपरैस्तु यथा अहंब्रह्मास्मि अयमात्मा ब्रह्मेत्यादि श्रुतिविरोधेन भोक्ताभोग्यं प्रेरितारमित्यादीनामौपाधिकभेदपरत्वमंगीकृत्वाद्वैतार्थपरश्रुतिभिरेकवाक्यतासिद्धयेभेदपर श्रुतीनामपि तात्पर्यतोऽद्वैतार्थपर-

त्वमुपपद्यते तथैवन्यायानुग्रहीत श्रुतिस्मृतिविरोधेनतेषांउप-क्रमादिश्रुतविष्णुहर्य्यादिशब्दानामपि विष्णुकारणत्वपरत्व-निरासेन गौणार्थक तयाश्रीरामनिष्ठावतारित्व पर्यवसायि-त्वंयथास्माभिरसकृदुपपादितंतथैवमंतव्यंविविद्भिः सर्वेषांस-मानार्थक श्रुतिस्मृतिवाक्यानां तद्बलाबलविचारेण गौण-मुख्यार्थकत्वद्वारैक वाक्यत्वोपपादनकुशलैः सत्संप्रदाय-विद्भिः तदेवं चिन्मयतत्वस्यावतारि त्वेनावतारत्वेचैकरूपत्वं सर्वव्यापकत्वादि गुणविशिष्टत्वेन सर्वोत्कृष्टत्वं स्वाश्रित दुःखहारि त्वेनातिकारुणिकत्वं चनिर्दिश्याथतस्य सच्चि-दानंद ब्रह्मनिः शेषवाचकत्वेन रामेतिमुख्यनाम-ध्येयमस्तीतिप्रकटयितु मादौश्रीदशरथगृहाविर्भावानन्तरं तस्य रामेत्याख्या बभूवपूर्वंतुविष्ण्वादि संज्ञासीदित्येवं केवलमंध-परं परोपदिष्टार्थं बहुमन्यमानानांसूक्ष्मार्थ विचारहीनानां श्री-रामचन्द्रन्यूनत्वदृष्टीनां तादृशमतिभ्रांतिनिवृत्त्ययेकतिधा श्री रामशब्दनिरुक्त्या तदभिमतार्थ मुक्त्वापश्चाद्भगवन्नामांतरगौ-णत्व प्रकाशिकयासच्चिदानंदार्थक श्रीरामनाममुख्यनिरुक्त्या तन्मुख्यत्वं प्रकाशयामासुः रघुकुलेखिलंरातीत्यारम्भ परंब्रह्मा भिधीयते इत्यंताः श्रुतयः

रघुकुलेखिलं रातिराजतेयो महीस्थितः।
सरामइतिलोकेषु विद्वद्भिः प्रकटीकृतः॥१॥

रामनामनिरुक्तिमाहश्रुतिः अखिलंरातीत्यादि ना अत्र-रामनाम्नोंद्वेनिरुक्ती अभिमतेएकातुरातीत्यर्थे केराशब्दे मही-स्थितइत्यर्थके मकारेयोजितेसति रामोभवति अपरातुराजतेइत्य-र्थके राशब्देमहीस्थितइत्यर्थके मकारेयोजितेसतिरामोभवति अत्रैषाक्षरयोजनायश्चिन्मयोरघुकुले आविर्भूयरातिददात्यखिलं-भक्तानामभीष्टं तथायश्चिन्मयोभक्ताभीष्टप्रदोराजते महीस्थितः सन्सरामइतिलोकेषुसर्वेषु तन्निवासिजनेषुविद्वद्भिः तत्स्वरूप-गुणादियाथात्म्यविद्भिः प्रकटीकृतः तादृशविद्वद्वाक्यद्वारातें-लोकास्तस्यरामेति संज्ञां ज्ञातवंत इत्यर्थः अक्षर साम्यादिदं निरुक्तिद्वयं अत्रचिन्मयः महीस्थितइत्याभ्यांपरतत्वस्यसुलभ-त्वेन सुसेव्यत्वंमहीस्थितः सन्निखिलं रातीत्याभ्यांतु सुलभ-त्वेसत्यखिलेष्टप्रदत्वात् अखिलाभीष्टप्रदानाय सुलभीभूत-त्वाद्वा आश्रयार्हत्वंच तथामहीस्थितः राजते इत्याभ्यांतत्स-माभ्यधिक राहित्य सूचनेननतत्समश्चाभ्यधिकश्चदृश्यते इत्यस्याः श्रुतेर्विषयत्वंच दर्शितं तथाविद्विद्भिः प्रकटीकृतः इत्यनेनतस्य स्वभक्ताखिलाभीष्टप्रदत्वं मह्यांप्रकाशमानत्वंच

रामेतिसंज्ञायां निमित्तमुक्तं भवति एवंतथारामस्य रामाख्या-
भुविस्यादित्ये तत्पर्यंतं तद्गौणरामाख्या प्रवृत्तिहेत वस्तद्गु-
णादयोद्रष्टव्याः तत्रचवक्ष्यमाणस्यानादि सिद्धस्य रामशब्द-
स्य वाचिचिन्मयेपरतत्वे अत्राविर्भूते सतितद्गौणस्यरामेति
नामधेयस्य प्रवृत्तिहेतवस्तदीय गुणादयोदर्शिता रघुकुलेखिलं
रातीत्यारभ्य रामनामभुविख्यातं तथा रामस्यरामाख्याभुवि-
स्या दित्यंतेनतत्रापि चिन्मयतत्वस्यभुव्याविर्भावानंतरं तदी-
यगुणकर्मप्राकट्यं निमित्तीकृत्य विद्वद्भिस्तस्य रामेतिसंज्ञा-
प्रकटीकरणात्तद्गौणरामनाम सुसादित्वप्रसक्तेस्तत्संबन्धा-
त्तद्वाच्येपितदौपाधिक सादित्वप्रसक्त्यावतारत्वोक्तिः संग-
च्छते अन्यथा त्वाऽसूचितावतारत्वस्यतदुपबृंहणभूतेतिहास
पुराणादिषु तदवतारत्वोक्तिर्नोपपद्यते यद्यप्यवताराणामपिपुनः
पुनराविर्भावतिरोभावश्रवणे नानादित्वोपपत्त्या तद्गुणाद्यावि-
ष्करणस्याप्यनादित्वोपपत्ते गौणस्यापितन्नाम्नो ऽनादित्वमुप-
पद्यते इतिनोक्तदोषप्रसक्तिः तथापि रघुकुलेखिलंरातिस
रामइतिलोकेषुविद्वद्भिः प्रकटीकृतः इत्यादि वचन मवलं-
व्यतथोच्यते स्माभिस्तदुपबृंहकैः पौराणिकादिभि श्चवस्तु-
तस्तु अथतत्वत इत्यनेन तदद्विविधनामनिरुक्ति परवाक्य
मध्यीभूतेन तद्विभक्तृवचनेनैव रामनाम्नोद्वैविध्यं सूचयित्वा
स्वपूर्वतनैर्वाक्यैरामनाम्नो गौणत्वं स्वोत्तरतनेन रमंतेयोगिन
इति वाक्येन तस्यमुख्यत्वंच सूचयित्वातद्वाच्य स्वरूप परत्वेन

तत्तदात्स्य प्राख्यातन्मुख्यवाचकत्वं प्रकाश्यचिन्मयेस्मिन् तथारामस्य रामाख्ये त्याभ्यां सूचितावतारित्वस्यापिचिन्मयस्य रामस्य सच्चिदानन्दार्थक मुख्यरामनामवाच्यत्वे नावतारित्वं तथागौण रामनामवाच्यत्वेन गुणादिप्राकट्यं गुणक्रियाव-त्यारोप्य तस्यावतारत्वं मुख्यवतरणाच्चावतारत्व मित्यवतारि-णः सतएवतस्य स्वयमवतारत्व मूपक्रमश्रुतिभिः सूचितमु-त्तरतनाः श्रुतयः प्रकटयामासुः उपासकानांकार्य्यार्थे ब्रह्मणो रूपकल्पनेत्यादयः प्रकारांतरेण रामनामनिरुक्तिमाहराक्षसाइति

राक्षसायेन मरणायांतिस्वोद्रेकतोथवा ।
रामनाम भुविख्यातमभिरामेणवापुनः ॥२॥

येनहेतुनाराक्षसाः स्वोद्रेकतः स्वस्य शक्त्याद्यतिक्रम हेतुभूतेनोद्रेकतः श्रीरामनिष्टस्वाधिक्यतः स्वाधिकेन मरणां-यांति म्रियंते भगवता मारिता इत्यर्थः तेनरामनामभुविख्यातं राक्षसार्थके राशब्दे मरणंयांति इत्यर्थकेमकारे योजिते सतीयं निरुक्तिः अनेन श्रीरामः स्वभक्तानिष्ठ कारिणः कामक्रोधादीन्नाशयतीति सूचितंभवति रामनाम-निरुक्त्यंतरमाहअभिरामेणेति अभिरामेणसुंदरेण वपुषावा तस्य रामनामभुविख्यातं तथाचवपुषारामःसुंदरइति रामश-ब्दार्थः एतदभिप्रेत्य कालिदासेनोक्तं रामइत्यभिरामेणवपुषा-तस्यनोदितः नामधेयंगुरुश्चक्रे जगत्प्रथममंगलमितिएतेनभग-

वन्नामांतराणां स्ववाच्यसौंदर्यप्रकाशकत्वाश्रवणात् श्रीरामना म्नस्तुस्ववाच्यसौंदर्यपरत्वस्यात्रापिश्रवणात् श्रीरामशब्दवाच्ये-सर्वोत्तमश्रृंगाररसम्पतिः सूचिताभवति उपबृंहयामासचेममर्थं-भगवान्वाल्मीकिः सदैवप्रियदर्शनइतिसर्वलोकप्रियः साधुरिति चचन्द्रकांताननं राममतीवप्रियदर्शनं रूपौदार्यगुणैः पुंसांदृष्टि-च्चित्तापहारकमितिरूपसंहननं लक्ष्मींसौकुमार्यसुवेषतां ददृशु-र्विस्मिताकारा रामस्यवनवासिनः इत्यादिनाचपाद्मेपितथैवोक्तं पुरामहर्षयः सर्वेदंडकारण्यवासिनः दृष्ट्वारामंहरिंतत्रभोक्तुमै-च्छन्सुविग्रहमिति रामनामनिरुक्त्यंतरमाह ।

राक्षसान्मर्त्यरूपेणराहुर्मनसिजंयथा ।
प्रभाहीनांस्तथाकृत्वाराज्यार्हाणांमहीभृताम् ।३
धर्ममार्गंचरित्रेण ज्ञानमार्गंच नामतः ।
तथाध्यानेनवैराग्यमैश्वर्यंयस्यपूजनात् ।
तथारामस्यरामाख्याभुविस्यादथतत्वतः ॥४॥

राक्षसानिति राहुर्ग्रहणकालेमनसिजं चन्द्रंयथाप्रभा-हीनं करोति तथा राक्षसान्रावणादीन्मर्त्यरूपेण मर्त्यरूपमिव-रूपंयस्यतेन प्रभाहीनान्कृत्वाराज्यार्हाणांमहीभृतां सूर्यसोमवं-श्यानांराज्ञां ३ धर्मेति चरित्रेणधर्ममार्गनामतःज्ञानमार्गंध्या-नेनवैराग्यंपूजनादैश्वर्यं रातिददातिचिन्मयो भगवानितिकार-

णात् रामस्यग्रनादिसिद्धसच्चिदानंदार्थक रामख्यस्यचिन्मयस्य रामाख्या उक्तगुणनैमित्यकारामेतिसंज्ञाभुवि पृथिव्यांतदुपलक्षित लोकत्रयेपिवास्यादित्यन्वयः अत्रतथारामस्यरामाख्येति श्रुत्यानादिभूत सच्चिदानंदार्थक रामनामकस्यापि चिन्मयस्येदृश गुणक्रियानिमित्ता रामाख्याभुविस्यादित्यर्थकया नादि सच्चिदानंदपरब्रह्मवाचक रामपदवाच्यस्यावतारित्वं तस्यैव दशरथविषयेवतीर्णस्य तद्गुणकर्मार्थिकरामपदवाच्यत्वेनावतारत्वंच ज्ञापितंभवति अन्यथातथास्य विष्णोरतथास्यहरेर्वारामाख्याभुविस्यादित्येवं वक्तव्यात् रातेः कर्त्तरिमप्रत्यय औणादिकः अत्राराकारमकारयोश्चत्वारोऽर्थाः राक्षसान्मर्त्त्यरूपेणेत्येकः राहुर्मनसिजंयेथति द्वितीयः राप्रभातयाहीनानितितृतीयोर्थः कथंरादीप्ताः वितिधातु सूत्रानमकारस्तुलयः स्मृतः इत्यभिधानाच्च एषां त्रयाणामेक एव तात्पर्यः चतुर्थस्तु राज्ञाहीणांमहीभृता मितिचरित्रादि नाकथंराज्ञांधर्मादिसिद्धिरिति चेदुच्यते चरित्रंनामसदाचारः सचधर्महेतुः श्रीरामस्यसदाचारं दृष्ट्वा श्रुत्वाचराजानोपितथाचरंतितेनधर्म उत्पद्यते अर्थपंचक वोधनपूर्वकं परमात्मपरस्यंरामनाम्नोनवरतमर्थानुसंधान पूर्वकं जापेनतेषां राज्ञां स्वरूप परस्वरूपोपायस्वरूपोयेयस्वरूपस्वपरं संबंध स्वरूप तत्तद्विरोधिस्वरूपयाथात्म्यज्ञानमुत्पद्यते सर्ववेदकारणप्रणवकारणस्य रामनाम्नः सकलवेदमूलत्वात्वेदानांतुस्फुटमर्थपंचकवोधकत्वात्कारणविज्ञा

नेनकार्य विज्ञानस्य श्रुत्यंतरोक्तत्वाच्च रामनामार्थ विज्ञानेन तत्कार्यभूत सकल वेदार्थ विज्ञानंभवतीत्यवगंतव्यं रामनाम्नः स्वस्वरूपादिबोधकत्वं स्फुटीकरिष्यामि क्रियाकर्मेज्यकर्तृणामर्थं मंत्रोवदत्यथेत्यादि मंत्रार्थपरवाक्यार्थ वर्णनसमये वेदानां त्वर्थपंचकपरत्वमभियुक्त वाक्यादत्र गम्यते प्राप्यस्य ब्रह्मणो रूपंप्राप्तुश्चप्रत्यगात्मनः प्राप्त्युपायं फलंप्राप्तेस्तथा प्राप्ति विरोधिनः वदंतिसकलावेदाः सेतिहासपुराणकाः मुनयश्च महात्मानोवेदवेदांगवेदिनः इत्येतस्मात्तथा नामात्मकस्य मंत्र-स्याप्यर्थपंचक परत्वं तद्वचनादवगम्यते प्राप्यस्य ब्रह्मणोरूपं प्राप्तुश्चप्रत्यगात्मनः प्राप्त्युपायंफलं प्राप्तेस्तथा प्राप्तिविरो-धिनः ज्ञातव्यमतेदर्थानां पंचकं मंत्रवित्तमै रित्येतस्मात्त थाति सुन्दरश्रीरामविग्रहध्यानेन परमानंदानुभवात्तेषां विषयेभ्यो वैराग्यं तथा श्रीरामतापनीयाद्युक्तप्रकारेण श्रीरामपूजनात्तेषामै-श्वर्यमिति अत्रये श्रीरामचरित्रादिश्रवणानुष्ठानादिरतास्तएव राजानो धर्मादि संपन्ना नान्येतेषां तच्चरित्रादिरत्य भावेन-धर्माद्यनुपपत्तेः तदनुत्पत्तौराज्यार्हत्वासिद्धेः किंचश्रीरामता-पनीयश्रुत्याज्ञापनात् राज्यार्हाणां महीभृतां श्रीरामचरित्र-श्रवणात्चरणां तन्नामार्थानुसंधानपूर्वकं तज्जपरतद्ध्यानंतत्पू-जनं चावश्य मेवकर्त्तव्यं प्रजानांच तदगुणगामित्वात्ताभिर-पियथोचितं तत्सर्वं कर्त्तव्य मिति सर्वैरपि प्राणिभिस्तद्योग्य-तावद्भिः श्रीरामएवोपास्यः इतिश्रीरामतापनीयश्रुतीनामभि

प्राय: एतदभिप्रेत्योक्तं सुरोऽसुरोवाप्यथ वानरोनर: सर्वात्म-
नाय: सकृतज्ञमुत्तमं भजेतराममनुजाकृतिंहरिं यउत्तरानन-
यत्कोशलान्दिवमिति किञ्चराक्षसायेन मरणांयांत्युक्त्वापिपुन-
र्राक्षसानमर्त्य रूपेणोत्युक्त्वा श्रीरामस्य स्वभक्तद्रोहि विनाश
आग्रहातिशयोदर्शितोभवति एवंरघुकुले श्रीमहाराज दशरथ
विषये तदाविर्भावानंतरं स्वभक्ताभीष्ट प्रदत्व स्ववपुरभिराम
त्वराक्षसमारणात्वादितद्गुणकर्म निमित्ता रामस्यरामाख्यायथा
विद्वद्भिर्भुविप्रकटीकृतातथा तादृशीभिर्निरुक्ति भि:प्रकाश्य
अथानंनतरं तत्वमबाधितस्वरूपं यत्सच्चिदानंदात्मककं परंब्रह्म
तत: ब्रह्मात्मकत्वात् सच्चिदानंदैक वाचकत्वाच्च यथारामस्य
रामाख्यानादित: सिद्धांततथा तादृश्यानि सूत्राण्याप्रकाशयितु-
माहअथतत्वतइति अथगौणरामनाम निरूपणानंतरं तत्वत
इति तत्वं सच्चिदानन्दात्मकं ब्रह्म सत्यं ज्ञानमनन्तं ब्रह्म
आनन्दोब्रह्मेत्येवमादिश्रुतिभ्य: ॐ यो वै श्रीरामचन्द्र:
सभगवान् य: सच्चिदानन्दाद्वैतैक रसात्मेति चरममन्त्राच्च
तत्वस्वरूपं पुरुषं पुराणं स्वतेजसा पूरित विश्वमेकमिति
श्रीरामस्य तत्व स्वरूपत्व स्मृतेश्च तत्वत इति ल्यब्लोपे
कर्मणि पंचमी सच्चिदानन्दं तत्स्वरूपमधिकृत्येत्यर्थ: पूर्वं
तद्गुणकर्मनिमित्तीकृत्य रामस्यरामाख्या यथातथा प्रकटीकृता
अथानन्तर सच्चिदानन्दात्मकम् तत्स्वरूपमधिकृत्य तत्स्वरू
वाचकत्वेन तत्तादात्म्यभावेन तद्वाचकतया यथारामस्य

रामाख्यानोदि सिद्धा अन्वर्थादिसंज्ञकइत्यत्रादि संज्ञकत्वेन श्रुता तथा तादृश्यानिरुक्त्या प्रकाश्यते रमन्ते योगिनइत्यनया तत्र च सत्यं ज्ञानमनन्तं ब्रह्म यः सच्चिदानन्दात्म्ये त्याद्यासुपरतत्वस्यानन्तसच्चिदानन्दरूपत्वश्रवणात्तथात्रब्रह्मात्मकाः सच्चिदानन्दाख्या इत्युपासितव्यं चिद्वाचकोरकारः स्यात् सद्वाच्याकार उच्यते मकारानन्द वाचीस्यात्सच्चिदानन्दमव्ययमित्येवमादिश्रुति स्मृतिषु रामशव्दस्य सच्चिदानन्द ब्रह्मात्मकत्व तदाख्यातृत्व श्रवणात्समरणाच्चोभयत्र वाच्यवाचकयोः सर्वांशा साधर्म्यावगत्यापरतत्वो रामशव्दमुख्यवाच्यत्वानुरूपान्तां राम शव्देच्च सत्याद्यात्मकपरत्वमुख्यवाचकत्वा नुरूपता मवलोक्यश्रुतिः स्वकंठतः एवोभयोर्मुख्य वाच्यकत्वं स्फुटयामास रमंतेयोगिनोनंते सत्यानंदे चिदात्मनि इतिरामपदे नासौपरंब्रह्माभिधीते इतियत्रानंतेसत्यानंदे चिदात्मनियोगिनो रमंतेससत्यानंद चिदात्मारामइतिमुमुक्षुऽवस्थायांमुक्तावस्थायां चयोगिरतिस्थानत्वे नतदुपायोपयेभूतंसत्यानंदं चिदात्मकं बृहद्गुणायोगि परतत्वं रामशव्दमुख्यवाच्यं उक्तार्थकोरामशव्दस्तु तन्मुख्यवाचक इत्यर्थः यदितूपक्रमवाक्य श्रुतयोर्महाविष्णुहरिशव्दयोर्द्वयोस्तदन्यतरस्य वाचिन्मयतत्वमुख्य वाचकत्वं रामशव्दस्यत्ववतारमात्र वाचकत्वं श्रुतिभिप्रेतं स्यात्तदा अथतत्वत इतिद्विविध भगवन्नाम विभाजकवचनात्पूर्वं रघुकुलेखिलं रातीत्याद्याभिः गुणकर्म पररामशव्द

निरुक्त्या तद्वाच्यस्यावतारमात्रत्वंप्रकाश्य तदुत्तरत्रतदवतारि
नामनिरुक्तिपुरावेवेष्टि सकलंयस्माच्चिद चिदात्मकं जगत्तस्मा-
द्विष्णुपदेनासौपरंब्रह्माभिधीयते इतीदृशीयस्माद्दुःखमविद्या-
दिभक्तानां हरतिस्वयं तस्माद्धरिपदेनासौ परंब्रह्माभिधीयते
इतीदृशीवाश्रुतीः स्यान्ननतुरमंतेयोगिनोनंतेइतीदृशी तस्मादिदं
गुणनामसुख्यनामनिरुक्तिपरश्रुति मध्यगतंतद्विभाजकवचनं
अथतंत्वत.इतीदंतत्पूर्वतनं इतिरामस्यरामाख्याभूविस्यादिती-
यंश्रुतिः तदुत्तरतनाच रमंतेयोगिनइतीयंश्रुतिरन्यथानुपपद्यमा-
नासच्चिदानंदार्थकस्य रामशब्दस्याद्वितीयमूलकारणपरं ब्रह्म-
सर्वांगाभिधायकत्वेन तन्मुख्यवाच्यकत्व मुपपादयित्वोपक्रमश्रु-
तयोर्महाविष्णु हरिशब्दयोरतद्गुणार्थकत्वेन तद्गौणनामत्वं
तद्वत्तन्नामांतराणामपि तद्गुणकर्मार्थकत्वेन तद्गौणनामत्वंमुप-
पादयती त्यवगन्तव्यम् नचगौण रामनामभिस्तस्य दाशरथि-
त्वमात्रंवोच्यतेऽतस्तैस्तद्विषयिका प्रातीतिकमनुष्यत्व बुद्धिर्न-
निवर्त्ततेऽतोरमंतइतीयंश्रुतिः सच्चिदानंदार्थक रामनामनिरु-
क्त्यातद्वाच्यस्यपरब्रह्मावतारत्वं ज्ञापयतिदाशरथि विषयक
प्रातीतिकमनुष्यत्व बुद्धिनिवृत्तये इत्याशंकनीयं चिन्मयेस्मिं
महाविष्णौ जातेदशरथेहरा वित्यनया प्रथमयैवश्रुत्या दाशरथे-
श्चिन्मयमहाव्यापक परब्रह्मावतारत्ववोधनेन तद्विषयकप्रातीति
कमनुष्यत्वबुद्धिनिराकरणात् अतोरमंतेयोगिन इत्यस्यातन्नि-
ष्ठावतारित्व प्रकाशनेनैवसार्थक्योपपत्तेः अन्यथावेवेष्टि सकलं

यस्मात् यस्माद्दुःखमविद्यादि भक्तानांहरतीत्येवंवक्तव्यात् यद्युपनिषत्सु ब्रह्मादिशब्दानांप्रणवस्याकारस्य मकारस्यच ककारलकारादीनामपि बहुमाहात्म्यंश्रूयतेसत्यंज्ञानमनंतंब्रह्म-नारायणः परब्रह्मसकलं ब्रह्मैवतत्नृसिंहोब्रह्म ॐ मित्येतद-क्षरंसर्वं अकारोवैसर्वा वाक्मितेरपीतेर्वाकादापः लात्पृथिवी-त्येवं तेनतेषांशब्दानां परतत्वपरत्वमवगम्यते तथापि ब्रह्म-पर ब्रह्मादि शब्दानामनेकदेवता वाचैकविशेषणत्वदृष्टेः प्रण-वस्यानेकदेवतामंत्राणामादौ दृष्टेश्चपुण्ययोनित्वेन गायत्र्यादि संस्कृतत्वेनच पूर्वशुद्धानां ब्राह्मणादीनांशोधकत्वेपि तदन-धिकार्यात्यंतमलिन शुद्राद्यशोधकत्वेन तदंशेप्रणव माहात्म्य स्यवैयर्थ्याच्चब्रह्मादिशब्दानां प्रणवस्यचाकारमकाराद्यक्षरणा-चोच्चारणसमकालेकस्यापि विग्रहविशेषस्या पुरस्फूर्त्तेर्पांसामा-न्यशब्दत्वोपपत्तेः सामान्यशब्दानांतुपशुशब्दस्य छागशब्द-द्वाराविशेषवस्तुनिश्चाय कत्वचतुस्वसमानार्थक विशेषशब्दद्वा-रैवविशेषवस्तुनिश्चायकत्वोपपत्तेः कारणेपरविशेषशब्देषुतुराम-शब्दस्यैवसर्वोत्कृष्टत्व श्रुतेस्ततस्मृतेश्चतस्यस्वोच्चारणादि सम-काले धनुर्द्धर द्विभुजाद्यवयविविग्रह विशेषानुभावकत्वाच्च-

१. देवतायावाचकोदेवतावांचका ना॰ायणादिः तस्यविशेषणत्वं

२. पूर्वशुद्धेनहेतुद्वयस्य संबंधः।

३. कारण परसामान्यशब्दाः कारणप॰ विशेष शब्दाश्च तत्रका॰रण परविशेषशब्देषु।

तस्यैवप्रणवकारणत्व श्रुतेः जलादिकारणीभू ककारलकारा-
द्यक्षरकारणभूतयोरकारमकारयोस्तदवयवत्व दृष्टेश्चतदवयवत्वे
सत्यपितयोः रेफाश्रितत्वश्रुत्यारेफा पकृष्टत्वोपपत्तेश्चमंत्रार्थ
पराभिः श्रुतिस्मृतिभिः रेफस्यश्रीरामपरत्वावगमाच्च ब्रह्मादि
शब्दानांप्रणवादीनां चरामशब्दद्वारैवपरतत्व नित्यविग्रह
निश्चायकत्वोपपत्तेः रामशब्दस्यैव तन्मुख्य वाच्यकत्वंप्रणवा-
द्यकृतार्थी कृतशूद्रादिपापयोनि कृतार्थी कारणात्सर्वजीवाश्र-
यीहत्वंचोपपद्यते ननुभक्टितिस्ववाच्यविग्राहानुभावकत्वात्
तद्बहुमाहात्म्य श्रवणाच्चकृष्ण नारायणादयोपिविशेषशब्दः
पर्य्यायवाचित्वेन रामसदृशाभाव्याइति चैन्नपर्यायवाचिष्वप्ये-
कस्यैवमुख्यत्वं दृश्यतेयतः यथाकृष्णविग्रहंप्रतिकृष्ण शब्दस्य
नारायणविग्रहंप्रतिनारायणशब्दस्यसत्स्वपिकृष्णस्यनारायणस्य
च बहुषुनामसुतथा तन्मूलकारणस्यस्वकार्य विग्रहवाचकाशे-
षशब्द वाच्यत्वेसत्यपिसाक्षात्तद्वाचकत्वं तदविशेषनाम स्वक-
स्यरामशब्दस्योपपद्यते श्रूयतेचतथैव सर्ववाच्यस्यवाचकइति-
स्मर्यतेचतथैव विश्वरूपस्यतेराम निश्वेशब्दाहिवाचकाः
तथापिरामनामदेंसर्वेषावीजम व्ययमितिनन्वेकविग्रहवाचकेषु-
बहुषुस्यादेकस्यमुख्यत्वं कृष्णविग्रहं प्रतिकृष्णशब्दस्येवनतुस-
मस्तभगवद्विग्रह वाचकेषुतस्यमुख्यत्व मुपपद्यते नारायणवि-
ग्रहं प्रतिकृष्णशब्दस्य कृष्णविग्रहंप्रति नारायणशब्दस्य
मुख्यवाचकत्वा नुपपत्तिवदिति चेत्सत्यमेवसमस्तभगवद्विग्रह

कारण विग्रहंप्रतिरामशब्दस्यमुख्य वाचकत्वंब्रूमः नतुतत्कार्य-
विग्रहंप्रति तत्रैवंसतियथासर्वेषां भगवत्स्वरूपावताराणां
तत्वतऐक्यात्तत्तद्वाचकानां सर्वेषांपरस्परं समस्ततद्विग्रहवाच-
कत्वेपियस्यशब्दस्य येनतद्विग्रहणोभगवद्विग्रहेतादात्म्यसंबंध-
स्तस्यतद्विग्रहंप्रतिमुख्यवाचकत्वं तद्विग्रहांतरंप्रतितद्गुणमात्र-
कृतं तद्वाचकत्वं स्ववाच्यनिष्ठगुणकर्माधिक्यप्राकट्यकृतं
तन्माहात्म्याल्याधिक्यं च यथाकृष्ण शब्दस्य कृष्णविग्रहं-
प्रतिमुख्यवाचकत्वं तत्तादात्म्यकृतं विष्णुशब्दस्यतद्व्यापकत्व
गुणकृतं श्रीकृष्णवाचकत्वं श्रीरामवाचकत्वं चतथागौणस्या-
पिरामवाचकस्यविष्णवाचकेभ्यः सहस्रगुणाधिक्यं स्मर्यते
वैष्णवेष्वपि मंत्रेषु राममन्त्रफलाधिकाः लौकिकावैदिकाशब्दा-
येकेचित्संतिपार्वति नामानि रामचन्द्रस्य सहस्रंतेषु चाधिक
मितियत्त तत् श्रीरामनिष्ठ गुणकर्माधिक्य कृत मित्यवगम्यते
अनन्ताभगवन्मंत्रानानेनतुसमाः कृताः श्रियोरमणसामर्थ्यात्
सौंदर्यगुणसागरादि त्यत्रानंतभगवन्मंत्रेभ्यः श्रीराममंत्राधिक्ये
श्रीरमण सामर्थस्यतत्कर्मणः सौंदर्यगुणसागरत्वस्य गुणस्य-
चहेतुत्वस्मरणात्तथारामशब्दस्यापिकार्यविग्रहं प्रतिवाचकत्वं[१]
तदभिरामत्वादि गुणकर्मकृतं कारणविग्रहं प्रतितन्मुख्यवाच
कत्वं तुसत्यानन्द चिद्धनतत्स्वरूप वाचित्वकृतं तदभिराम-
त्वादि गुणकर्माधिक्य वाचिकत्वकृतं तद्गौणवाकत्वंचतस्यैक-

---

१ कारणविग्रहस्य पूर्वोक्तिस्यरामशब्दस्यतद्गौणवाचकत्वं

स्यैवगौणास्य राशब्दस्य कार्यविग्रहपरस्यमाहात्म्याधिक्यंच परशुरामदाशरथि रामनाम महात्म्यानुसधानादव गम्यते तथा कारणपररामशब्दस्य ब्रह्मस्वरूपाभेदत्व सच्चिदानदसंज्ञक त्वच ब्रह्मात्मकाः सच्चिदानंदाख्या इत्युयामि तद्यमित्यत्रश्रू- यते । अतएवतन्माहात्म्याधिक्यं श्रूयते स्मर्यतेचनन्वत्र वाच्याधिक्यस्य वाचकाधिक्ये हेतुकारणात् अन्यत्र वाचका- धिक्यस्यवाच्चकाधिक्ये हेतुत्वस्वीकारादन्योन्याश्रयापत्तिरिति चेन्नवाच्यनिष्ठाधिक्यस्यैववाचकाधिक्ये हेतुत्वात् वाचकमाहा- त्म्याधिक्यं त्वन्यथानुपपद्यमानं स्ववाच्यनिष्ठ वाचकांतर वाच्योत्कृष्टत्वंप्रकाशयतिकेवलंन तुसंपादयति वाचकस्यवाच्या श्रितत्वेन स्ववाच्यो त्कृष्टत्वानुपपत्तेः एकागसंगिनीगंगायाव- येदखिलं जगत् अंगप्रत्यंग संव्यापि नामकिंकर्त्तु मन्तममि- तियन्नाम ससर्गवशाद्विवर्णोनष्टम्इरौमृद्धिन्नगतौस्वराणां तद्रा मपादौहृदयेनिधायदेहीकथं नोर्ध्वगतिं लभेत इतिचवाच्यसंवं- धेनैव वाच्यकोत्कृष्टत्वस्मरणात् लोकेपिवाच्योत्कृष्टत्वापकृ- ष्टत्वनिमित्तमादरानादर पूर्वकं तद्वाचको च्चारणं श्रूयतेयतः यत्तुरामत्वत्तोधिकं नाम यदुक्त्वैव पुमांस्तरेत् विनापिसेतुनि- र्माणमपारं भवसागरमि तिवाच्याद्वाचकाधिक्यंस्मर्यतेतत्तस्य सर्वं जनसौलभ्यात् उच्चारणमात्रेणसंसारतारकत्वाच्चोपपद्यते तच्चतारकत्वंतस्यस्ववाच्संवंधकृतं अन्यथा परशुरामादिपरस्या पिरा मशब्दस्यभगवन्नामातरौत्कृष्टय श्रूयेतस्मर्यते नन्वे-

वंचेत्तदामूलकारणत्वस्यैकनिष्टत्वात्तत्तादात्म्यसंबंधिनएकस्यैव नाम्नोजगदुत्पत्यादिहेतुत्वोपपत्तेर्नृसिंहाद्युपनिषत् प्रकाशितस्य नृसिंहादिमंत्रनिष्ठ जगदुत्पत्यादिहेतुत्वस्य कागतिर्बहूनांतदनुपपत्तेरितिचेच्छृणुउपासकानांकार्यार्थे मूलकारणप्रकटिताबांतत्तद्विग्रहणां तादात्म्यगतस्य तस्यतस्यचनाम्नस्तत्तान्मुख्य वाच्यकत्वं तत्तद्विग्रहचरित्रपरायास्तस्याउपनिषदः नृसिंहोपनिषत् नारायणोपनिषत् गोपालोपनिषदित्येवं तत्तन्नाम्नाख्यातित्वंच पुनःकार्यकारणयोरभेदात्कार्यविग्रहस्यतन्नाम्नोपि विग्रहापेक्षयाऽपिशब्दप्रयोगाः जगदुत्यत्यादिहेतुत्वं चोपपद्यते प्रकाशयिष्यंतिह्युप संहारमंत्राः जगत्कारणत्वेनान्यत्रश्रुतानां विष्णुनारायण मत्स्यादीनामत्र श्रीरामरूपत्वेनतद्विग्रहविशेषतयातत्कार्यत्वं श्रीरामस्यतुसर्वरूपित्वेन सर्वावतारित्वमित्यत उपक्रमेप्यवतारिचिन्मयतत्व मुख्यनामव्युत्पादनावसरेव्यापकत्वादितद्गुणार्थक महाविष्णवादि परनिरुक्तिं विहायसच्चिदानंद तत्स्वरूपपर रामशब्द निरुक्त्या तादृशस्य रामशब्दस्यपरतत्व मुख्याभिधायकत्वंप्रकाशयति रमंतेयोगिनइति

**रमंतेयोगिनोनंतेसत्यानंदेचिदात्मनि ।**
**इतिरामपदेनासौ परंब्रह्माभिधीयते ॥६॥**

सत्यंज्ञानमनंतं ब्रह्मआनंदो ब्रह्मप्रज्ञानं ब्रह्मेत्यादि श्रुत्यंतर श्रुतेऽनंतसत्यानंदगुणकेअपरिछिन्न चित्स्वरूपयोत्र-

स्यरामशब्दस्य साक्षात् स्वरूप वाचकत्वेनएकस्यैव सच्चिदा-त्मकस्यपरतत्वस्याभिधायकत्वोपपत्तेः ब्रह्म परब्रह्मादिशब्दानां वाच्यविशेषाश्रवणेनसामान्यशब्दत्वोपपत्तेश्चसामान्यशब्दानां तुसतिसमानार्थकेविशेषोपस्थापकेविशेषपर्यवसानस्य युक्तत्वात् मूलकारणाद्वयाद्यनिष्पत्त्या सर्वशाखा प्रत्ययन्यायेन कारण वाक्यगतशब्दानामेकस्मिनूपर्यवसानस्य युक्तत्वाच्चतत्र तत्रो पनिषत्सुस्ववाच्यस्य मूलकारणत्वाभिधायकैर्ब्रह्मादि शब्दैः सच्चिदानंदात्मकस्य रामशब्दाभिहितस्यदाशरथेरेव सर्वोत्कृष्टत्वं बोध्यतइत्यवधेयं इष्टार्थसंयोगजाक्रीडारतिः अनयारम्यस्य रामस्य निरतिशयसौंदर्य वत्वेना त्यन्तरमनीयतयासगुणत्वं साकारत्वं निबोध्य रममा-णानांयोगिनां रुक्षत्वंचव्यावर्त्यते सत्यानन्दयोः स्वरूपसमा नाकारगुणत्वात् तदुक्त्या चिन्मयस्य राघवस्य सगुणत्वं अनंतइत्युक्त्या तत्सहस्तेर्विच्छेदाभावेनैकरसत्वं च ज्ञापितं तत्रसत्यत्वंनाम सर्वदानामरूप विभागार्हत्वंसर्वदा अबाधि तस्वरूपत्वं च आनंदत्वंतु सुखरूपत्वं तथाचब्रह्मण आनन्द रूपत्वात्तस्मिनूरमण मानन्दावाप्ति रूपतया पुरुषार्थ एवेत्य नेन स्त्रियांरमणवत् ब्रह्मणिरमणं नपुरुषार्थः सदैकरससुख-भावादित्यादिशंकानिरस्ता अनंतत्वं नामगुणतः स्वरूपतश्च-त्रिविधपरिच्छेदरहितत्वं एतेनतत्रसर्वव्यापकत्व सर्वज्ञत्वादि-गुणानांस्वतः सिद्धत्वं सूचितंचिदात्म नीत्यनेनचितः

स्वप्रकाश ज्योतिरूपस्य विकारित्वा नुपपत्त्या प्रकृतिकार्य्य शरीरसम्बन्धानुपपत्तेः तद्विग्रहस्यापिचिद्रूपत्वमवगम्यते श्रूयते च तथैवमुद्रांज्ञानमयींयामे वामेतंजः प्रकाशनं धृत्वाव्याख्यानिरतश्चिन्मयः परमेश्वरः इतिकिंच नहिविज्ञातुर्विज्ञातेर्विपरिलोपोविद्यते इत्यत्रविज्ञात्यायथा गुणांतराणां नित्यत्वंलक्ष्यते तथात्रसत्यानंद वचनंतदनं तवचनं चोपलक्षणं ज्ञानशक्ति बलादीनां सत्यकामत्वादिगुणानांच अन्यथा तत्तद्गुणप्रयोजन समये तेनतेन गुणेनविना तत्तत्कार्यासिद्धिकृतानंदभंगेन तदानंत्यबाधात् सुखस्वरूपे ब्रह्मणि दुःखित्वप्रसक्त्या तत्र संसारित्व मपिप्रसज्जेत किं चङ्क्रमणं क्रीडाविहार इतियावत्तस्य तत्कर्तृ विग्रहंतत्रापि तद्बाहुल्यं चविनाऽनुपपत्तेः परब्रह्मणः तत्सार्द्धंविहरतांच सविग्रहत्वमुपपद्यते ननु ब्रह्मणो मुक्तजीवानांच साकार तानोपपद्यते तत्रदृश्यत्वोपत्त्या विनाशानुमान प्रसक्ते रितिचेन्नआकाशवत् सर्वगतश्च नित्य इतिश्रुत्या विनाशानुमानस्यबाधात् किंच तस्माद्वाएतस्मादात्मनः आकाशः संभूत इति श्रुतेराकाशस्यापिजन्यत्वेन रूपवत्त्वोपपत्ते नीलं नभ इतिप्रतीतेश्च साकारत्वेसति व्यापकस्य तस्य दृष्टांतीकरणात् द्राष्टांतभूतस्य ब्रह्मणोपिसाकारत्वे सति व्यापकत्वमुपपन्ननतरं भावुकानां सविग्रहस्यैव युगपदाविर्भावाच्चतथा च सर्वगतत्व श्रुत्याविनाशकानां कालादीनामपिव्यापकस्यव्याप्यभूतैस्तैस्तद्विनाश्यत्वा नुपपत्त्या दृश्यत्वेसत्यपितस्यनित्यतो

पपद्यते किंचत्वयापिब्रह्मणोवृत्तिविषयत्वेन तस्यदृश्यत्व मुच्यते अपरञ्चदृश्यत्वमवलंब्यविनाश्यत्वं सादित्वंसाध्यते यैस्तन्मते दृश्यत्वमात्रंमिथ्यात्वेहेतुरुतअस्तितद्विशेषोवाकश्चिदिति नाद्यः एषसर्वेषुभूतेषु गूढोआत्मा न प्रकाशते दृश्यतेत्वग्र्ययाबुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः आत्मावा अरे दृष्टव्यश्रोतव्य इति-तन्नित्यत्वाभिमतस्य ब्रह्मणोपि दृश्यत्व श्रुतत्वप्रतिपत्त्यामि-थ्यात्व प्रसंगात् तस्माज्जन्यत्वे सतिदृश्यत्वं विनाश्यत्वे हेतु-र्वाच्यः तथाचब्रह्मणो जन्यत्वाभावान्न तत्रविनाश्यत्व प्रस-क्तिःनापिघटादि दृष्टांते नसावयवत्व मात्रंविनाश्यत्वेहेतुर्वाच्यः तत्रसाध्ये विनाश्यत्वे च जन्यत्वोस्योपाधित्व संभवात्साध्य व्यापकत्वे सतिसाधनाव्यापकत्व मुपाधित्वमितितल्लक्षणा त्तेनईश्वरः सावयवोपिन विनाशी जन्यत्वाभावादित्येवं त्व-दभीष्ठबाधका नुमाननिष्पत्तेः यदितुप्राकृतं सावयवत्वं विना-शित्वे हेतुरुच्यते तदापरमेश्वरस्य प्राकृतावयवत्वा भावान्नत-त्रविनाश्यत्व प्रसक्तिः न चक्षुषापश्यतिकश्चिदेनं यन्मनोनु-मनुते यतो वाचोनिवर्त्ततेऽप्राप्यमनसासहेत्याद्याः श्रुतयस्तुनतु मांशक्यसेद्रष्टुमनेनैव स्वचक्षुषादिव्यं ददामिते चक्षुःपश्यमेयो

---

१, यत्रा यत्र विनाश्यत्वं तत्र तत्र जन्यत्वम् तथाच ईश्वरेजन्य सावयवत्वाभान्नमिथ्यात्वप्रसक्तिः।

२, ईश्वरेस्य सावयत्वे जन्यत्वाभावः घटादि सावयवत्वे जन्यत्वं सातथा च जनयत्व रूपस्य हेतोर्विभिचारत्वात् वक्तानुमानभगोपत्तिः

गमैश्वरमित्युक्तरीत्याब्रह्मणःप्राकृतेद्रियाऽगोचरत्वात्तदीयरूप-
लावण्यादरपारतयेत्ताराहित्ये नानुपमेयत्वात रूपादेरपारतयै
वत्तणेक्षणेनवनवतया प्रतीयमानतया कात्स्र्न्येन वोद्धुमश-
क्यत्वा त्द्याथात्म्यदर्शनादेस्तत्कृपादृष्ट्यवलोकन पूर्वक-
महत्प्रयत्नसाध्यत्वमावेदयंति नतुसर्वथा तस्यादृश्यत्वंआवे-
दयंति अन्यथा दृश्यते त्वग्रयाबुद्धयासूक्ष्म यासूक्ष्मदर्शिभिः
हृदामनीषा मनसाभिक्लृप्तः यमेवैषवृणुते सतेनलभ्यइत्यादि-
श्रुतीनांव्याकोपःस्यात किंचात्रसत्यंज्ञानमंतं ब्रह्मआनन्दो
ब्रह्मेत्येवमादिश्रुतयोब्रह्मणः सच्चिदानंद रूपत्वमावेदयंति
रमंतेयोगिनोनंते ब्रह्मात्मका सच्चिदाख्याः इतिश्रुतिचि-
द्वाचकोरकारःस्यात् इतिस्मृतिश्च रामनाम्नः ब्रह्मात्मकत्वे-
नतत्तादात्म्यप्राप्तत्वं सच्चिदानंदपदार्थाख्यातृतया ब्रह्मस्व-
रूपस्यकात्स्र्न्येन साक्षाद्वाचकत्वं चावेदयंतीतिकृत्वाभग-
वन्नामांतरेभ्यस्तस्य मुख्यत्वमुपपद्यते तन्नामांतराणि तुतत्ता-
दृगुणादिसाक्षाद्वाचकत्वेन तद्वारास्वरूपवाचकानिनतुसाक्षा-
दितिगौणानि नतुतस्यापि श्रीरामनिष्ठरम्यत्वगुणमवलंब्य
प्रवृत्तेर्गौणत्वं आरम्यत्वप्रवृत्तेस्तत्प्रवृतित्वातसादित्वंच स्या-
दितिचेन्न रमंतेयत्रसत्यानंदे चिदात्मनिससत्यानंदचिदा-
त्माराम इतिरामनाम्नो रम्यगुणा श्रयत्वेनदर्शितस्यसच्चि-
दानंदात्मकस्यवस्तुनः वाचकत्वोपपत्त्यागौणत्वानुपपत्तेः
नित्योनित्यानां सदापश्यंतिसूरयः नित्यःसर्वगतः स्थाणुरच-

लोयंसनातनः इत्यादिश्रुतिस्मृतिषुजीवानां नित्यत्वश्रवणात् तन्निष्ठस्यरममाणत्वस्यापि नित्यत्वोपपत्तेः रम्यगुणाश्रयस्यरामस्यापिनित्यत्वेन तन्नित्यतोपपत्तेश्चरामनाम्नोऽनादित्वोपपत्तेः रम्यगुणविशिष्ट अनादिसच्चिदानंदपदार्थ वाचकत्वेन तु-रामनाम्नः सुतरामनादित्वोपपत्तेश्च भगवन्नामांतराणि तुगुण-क्रियाद्वारास्वरूप वाचकानितथाहि वेवेष्टीतिविष्णुः हरतीति-हरिरिति विष्णुशब्दस्य व्यापकत्वरूप गुणद्वारास्वरूपवाचकत्वं यद्यपिस्वरूपस्यैव व्यापकत्वं तथापिव्यापकत्वरूपः स्वरूपस्यधर्मः स्वरूपंतु सच्चिदानंदात्मकं सत्यंज्ञानमनंतं ब्रह्मेतिश्रुतेः तत्रा-पिचिद्रूपमेवस्वरूपं चिन्मयेस्मिन्महाविष्णौ चिन्मयस्याद्वितीय-स्य चिन्मयःपरमेश्वरः रामचन्द्रश्चिदात्मकइत्यादिश्रुतिभ्यः सत्यानंदादयस्तु स्वरूपसमानाकारास्तद्धर्माः आनंदंब्रह्मणो वि-द्वान्नबिभेतिकुतश्चनेति श्रुतिरानंदस्यब्रह्मसंबंधित्व बोधनेन-स्वरूपधर्मत्वमावेदयति सत्यंज्ञानमानंदंब्रह्म आनंदोब्रह्मेत्याद्याः श्रुतयस्तुआनंदादीनां ब्रह्मसमानाधिकरणपाठेनतेषां तद्धर्मत्वेपि तत्समानाकारत्वमावेदयंति एवंव्यापकत्वादयोपिस्वरूपस्य धर्माः अतोविष्णुशब्दः साक्षत्तद्व्यापकत्वंबोधयन्तद्द्वारास्वरूप-बोधकत्वेनगौणः ननुरमंते यत्रसरामइत्यत्राधारत्वेननिर्दिष्टस्य स्वरूपस्यसाक्षाद्वाचकत्वंयथा रामनाम्नोऽगीकृतं तथावेवेष्टियः सविष्णुरिति प्रवेशनकर्त्तुः स्वरूपस्यसाक्षाद्वाचकत्वमेव-विष्णुशब्दस्य स्वीकरणीय मितिचेत्सत्यं तथापि प्रदर्शितरीत्या-

व्यापकत्व रूपधर्माश्रय त्वेनैवझटितिवोधो जायते न तु सत्यं ज्ञानमनन्तं ब्रह्मेति ब्रह्मस्वरूपत्वेन श्रुतत्य सत्यादिष्वन्यतरस्य तत्रापि चित्पदार्थस्य वोधोपि तस्मात्तद्गौणमित्युच्यते एवं सच्चिदानन्द पदार्थ वाचकत्व रहितानां नामान्तराणामपि-गौणत्व मुख्यं श्रीरामनाम्नोपियद्यपि रमन्तेयोगिन इति श्रुत्या-रम्य गुणद्वारातदाश्रय पदार्थ वोधकत्वं मुपपद्यते तथापि रमंते योगिनोनन्ते सत्यानन्दे चिदात्मनि इतिरामपदेनासौ परब्रह्मा-भिधीयते इतिसत्यानन्द गुणकेचिदात्मनि ब्रह्मस्वरूपेयोगि-नां रमणत्व श्रवणात् यत्रानते सत्यानन्दे चिदात्मनि चित्स्व-रूपेयोगिनोरमन्ते मसत्यानंद चिदात्मा राम इति योगिनां रमणस्थानस्य रामस्य सत्यानंद चिदात्मत्वश्रवणात् तन्निरु-क्तेश्च इतिरामपदेन इतिनिरुक्त्या सत्यानंद चिदात्म स्वरूपा-भिधायक वाचकतया सिद्धेनरामपदेनेति रामपदस्य सत्यानंद गुणाकानंत चित् परब्रह्मेतिस्वरूप वाचकत्वस्य श्रौतत्व सिद्धेः तथा ब्रह्मात्मकासच्चिदानन्दाख्याः चिद्वाचकोरकाररस्या त्सद्वाच्याकारउच्यते मकारानंदवाचीस्यात सच्चिदानंद-मव्यय मित्यादि श्रुतिस्मृतिभ्यः सच्चिदानंद पदार्थस्य साक्षाद्वाचकत्वेन मुख्यत्वं तस्योपपद्यते यद्यपि कृषि भूर्वाचकः शव्दः णनश्च निर्वृति वाचकः इति श्री कृष्णनाम्नः सदानंदवाचकत्वं स्मृतत्वानामांतरेभ्यस्तस्योत्कृ-ष्टत्वंद्योतितं तथापिसदानंदयोर्गुणयोरेवस्फुटंबोधकं ततनतु-

चिद्रूपस्यब्राह्मणः इतितस्यापिगौणत्वमुपपन्नतरं यदितुचित्पदमध्याह्रीयते इतिब्रवीषि तदाकस्मात्तदध्याहारइत्युक्ते अन्यत्रसदानंदसहचारेणचित्पदस्यादर्शनात् सच्चिानंदाख्या इत्यस्मादेवतस्याध्याहारः कर्त्तव्य यदितु आदिरन्त्येनसहेताइत्यनेन सद्प्रत्यहारस्वीकरात् सदानंदपदोक्त्यैवात्रचिदपिलभ्यतइत्युच्यते तदैकत्रसर्वेषामुक्तानां वर्णानामन्यत्राद्यंताक्षरोच्चारणमात्रेणबोधवत् कुत्रोक्तस्यचित्पदस्यात्र सदप्रत्यहारेणबोधो जायते सच्चिदानंदरूपायकृष्णाये त्यत्रसत्यंज्ञानमनंतं ब्रह्मेत्यत्रचोक्तस्येतिचेन्न तयोःश्रुत्यो स्वरूपमात्र बोधकत्वात् प्रकृते तुनामाक्षराणां सच्चिदानंद पदार्थ वाचकत्वविचारात् अतः सच्चिदानन्दाख्याइत्यत्रोक्तस्यचित्पदस्येत्यवश्यंवक्तव्यंतथा च सच्चिदानंदपदार्थ वाचकस्यरामनाम्नः कृष्णनाम्नोपिन्यूनतापूरकत्वात् मुख्यत्वंनामांतराणांतु ततोन्यूनत्वमुपपन्नतरं सिद्धांतेतु सत्यानंदपदयोःसस्वरत्वेनहलत्वाभावात् प्रत्याहारएवनोपपद्यते कुतस्तरांचिद्ग्रहणंताभ्यामुपपद्यते रामनाम्नस्तु सर्वेषांकृष्णादि नाम्नां प्रकाशकत्वेनापिसर्वेषु मुख्यत्वमुपपद्यते स्पष्टीकृतंचैतत् श्रीशिवेन सर्व्ववसतिवैयस्मिंन्सर्वास्मिनवसतेयुयः तमाहुर्वासुदेवेतिमुनयः शास्त्रकोविदा इत्यारभ्यकृषिर्भूवाचकःशब्दोणनश्चनिर्वृतिवाचकः तयोरैक्यंमहाविद्ये कृष्णइत्यभिधीयते नारायणादीनिनामानि कीर्त्तितानिबहून्यपि आत्म.तेषांतु सर्वेषांसमनामप्रकाशकः अतंतिसर्वेषुनामसच्चि-

दानंदादिरूपेणव्याप्नोतीत्यात्मा प्रकाशितवांश्चमेमर्थंसतत्रैव सच्चिदानंदरूपैस्तुत्रिभिरेभिः पृथक् पृथक् वर्त्ततेरामनामेदं शृणुकथदृष्टंमहेश्वरी त्यंतेनतथाचरामनाम्नः सच्चिदानंदरूपैस्सर्वे ष्वपुनामसुवर्त्तमानात् तत्तन्नामवाच्यवाचकत्वमप्युपपन्नतरमिति श्रुतिरपि तस्यासर्वार्थवाचकत्वंत दुपासनयाचतदज्ञानेनचसर्वे उपास्याःज्ञेयाश्चस्युरि ति चवक्ष्यति ब्रह्मादीनांवाचकोयमिति एतद्देवोपास्यमितिज्ञेयमिति चएतदभिप्रेत्यापिवेदार्थज्ञाः शिवा-गस्त्यादय श्रीरामनाम्नोभगवन्नामांतरेभ्यः सहस्रगुणाधिक्यप्रति नामतातुल्यंरामनामवरानने लौकिकावैदिका.शब्दाये केचित्स तिपार्वति नामानिरामचन्द्रस्यसहस्रं तेषुचाधिकं तादृङ्नामसहस्रैस्तु रामनामसमंमतं विष्णोरेककै नामैवसर्ववेदाधिकंमतं तादृङ्नामसहस्रैस्तुरामनामसमंमतं जपतः सर्ववेदांश्चसर्वमंत्रा श्चपार्वति तस्मात्कोटिगुणं पुण्यं राम नाम नाम्नैवलभ्यते इति तथैवागस्त्योप्याह वहुधा राममंत्रो यं संस्काराद्येव वां-छति रसनास्पृक फवत्येव वह्नि रसंस्कृतोयथा सर्वेषुमंत्रवर्गेषु श्रेष्ठंवैष्णवमुच्यते गाणपत्येषुशैवेषुशाक्तसौरेष्वभीष्टदंवैष्णवेष्व-पि मंत्रेषु राममंत्राः फलाधिकाः विनैवदीक्षां राजेन्द्रपुरश्चर्यां विनैवहि विनैवन्यास विधिना जप मात्रेण सिद्धिदा मंत्ररते ष्वप्यवनासफलदोषं षडक्षरः षडक्षरोयं मंत्रस्तु सर्वाघौघ विनाशकः दैवं दिनं च दुःकृत्यं पक्षमासर्त्तुवर्षजं सर्वं हरति निःशेषं तूला चलमिवानलः ब्रह्महत्यासहस्राणि ज्ञानाज्ञान

कृतानि च स्वर्णस्तेयसुरापानगुरुतल्पायुतानि च कोटिकोटि सहस्राणि ह्युपपातकयान्यपि सर्वाण्यपिप्रणश्यंति राममंत्रानुकीर्तिनात् इतितथैवहारीतस्मृतिः श्रीरामायनमोह्येस्तत्तारकं ब्रह्मसंज्ञकं विष्णोर्नाम्नां सहस्राणां तुल्यएष महामनुः अनंताभगवन्मंत्रानेन तु समाकृताः श्रियोरमण सामर्थ्यात्सौंदर्य गुणसागरादित्याद्या रदेवंभगवन्नामांतरेभ्यस्तस्य सहस्रगुणाधिक्यं यदुक्तं तत्रवहवोहेतव उपलंभते तत्र हारीतेनतेभ्यस्तदाधिक्योक्तौ श्रीरमणसामर्थ्यं सौंदर्य गुणसागरत्वं हेतु द्वयं निर्दिष्टं तच्चतद्वाच्य निष्ठं अन्यैस्तु सच्चिदानंदादीनां त्रिकस्य सर्वस्य साक्षाद्वाचकत्वं नामांतरेभ्यः तदाधिक्ये कारणत्वं निर्दिष्टं सच्चिदानंदाख्या चिद्वाचको रकारः स्यात् सच्चिदानंदरूपै स्त्वीत्यादिना अन्यैस्तु तत्रहेत्वंतराणि सूचितानीतियैर्यत् श्रीरामनामानिष्ठसच्चिदानन्दसाक्षाद्वाचकत्वं तद्वाच्य श्रीरामचंद्रनिष्टं गुणक्रियाद्याधिक्यं चावत्वभ्य भ्यस्तचाधिक्यमुपपादितं तुदाश्रयात्तद्वाच्यस्यापि नामान्तर वाच्येभ्यः सहस्र गुणाधिक्य मुपपद्यते उक्तानां हेतूनां तद्वाच्यसम्बधित्वोपपत्तेः अपरञ्चोक्त हेतूनां सर्वथा स्वरूपपर्यवसापित्वेनवाच्यसंबंधादेव वाचकस्याधिक्योपपत्तेः कैमुतन्नायेनापि श्रीरामचन्द्रस्यभगवद्विग्रहांमरेभ्यः उत्कृष्टत्वमुपन्या

---

१—रामनाम्नः तस्याश्रयस्तदाश्रयः तस्यात्तदाश्रयाद्धेतो राम नाम दस्तद्वाच्यस्य नामराम स्वरूपस्येत्यर्थः

पद्यते किंचात्रैवोपनिषदि भगवन्नाम स्वरूपयोस्तादात्म्यभावो ऽवगम्यते सीतारामौतन्मयावत्रेतिवाच्यस्य वाचकरूपत्व श्रवणात् ब्रह्मात्मकाइतितुवाचकस्य वाच्यात्मकत्व श्रवणाच्च तथाचवाच्यवाचक योरन्यतरस्योत्कृष्टतोक्त्यैवान्य तरस्योत्कृष्टतोपपत्तेःवाचकस्याधिक्येमन्यथाऽनुपपद्यमानं स्ववाच्यस्यतादृशमाधिक्यं प्रकाशयतीति रामचन्द्रस्य भगवद्भिर्महान्तरेभ्यः सहस्र गुणाधिक्यं यत्प्रकाशितं तदन्यथानुपपद्यमानं तस्य मूलकारणत्वेन सर्वावतारित्वं प्रकाशयतीत्यतः श्रुतिरपि तथैवब्रह्मादिशब्दाभि हितस्य रामस्यसर्वाव तारित्वमाह चिन्मयस्येति।

**चिन्मयस्याद्वितीयस्य।निष्कलस्याऽशरीरिणः उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना ॥**

अत्रयच्चिदात्मकं परंब्रह्मरामपदेनाभिधीयते तस्यराम पदाभिहितस्य चिन्मयस्य ब्रह्मणोरूपकल्पने त्यन्वयोज्ञातव्यः प्रकृति जीवव्यावर्त्त कस्यपरमित्यस्य विशेषणस्य स्थानेउत्तरवाक्येऽद्वितीयस्येत्यादि ब्रह्मपदविशेषणोपदानादत्र परशब्दा विशेषितस्याप्य द्वितीय ब्रह्मशब्दस्यपरतत्व पर्यवसायित्वेन परब्रह्म अद्वितीय ब्रह्मशब्दयोरभिन्नार्थ कत्वोपपत्त्या द्वितीयस्य ब्रह्मणोपिरामशब्दाभिहितत्वनि पत्ते रामपदाभिहितस्य चिन्मयस्याद्वितीयस्य ब्रह्मणोरूपकल्पनेत्यन्वयोपपत्तेः चिन्मयस्य

चिद्रूपस्येतितद्विग्रहस्यापि चिद्रूपत्वमुक्तंभवति व्याख्यान
निरतश्चिन्मयः ब्रह्मानंदैक विग्रहः्यः सच्चिदानंदात्मेत्युत्तरत्र-
तद्विग्रहस्यापि चिन्मयत्वश्रवणात् सत्यंचिदानंद मयस्वरूपं
तथा सत्यानंदं चिदात्मकं तथा श्रीसारङ्गधारिणं रामं चिन्म-
यानंदविग्रहं विरराममहातेजाः सच्चिदानंद विग्रहः इतितत्व-
तो स्वरूपतो विग्रहतश्च सच्चिदानंदमयत्व स्मरणाच्च अन्यथा
जीवानामपिस्वरूपतश्चिद्रूपतया तत्रापि प्रसंगेनचिन्मयत्वोक्ते
वैयर्थ्यं स्यातन्न चात्राशरीरिणा इतिश्रुतेरविग्रहस्यैव चिन्मय-
त्वोक्ति रितिवाच्यं धृत्वाव्याख्यान निरतश्चिन्मयः परमे
श्वरः इत्युत्तरत्र मुखाद्यवयव तश्चिन्मयत्व श्रवणात्
अर्धमात्रात्मकोरामो ब्रह्मानंदैकविग्रह इतितस्यदिव्यविग्रहत्व
श्रवणेनाशरीरिणा इतिपदस्यहेयशरीर विषयत्वेननेतव्यत्वाच्च
अद्वितीयस्य कार्यनिर्माणसहायांतर रहितस्यघटादिनिर्माणे
कुलालादेर्दण्डचक्रादिसहायकवत्तस्यतदासहायकंनास्तीत्यर्थः[1]
अथवाद्वितीयस्यस्वसमाभ्यधिकरहितस्यनतत्समश्चाभ्यधिकश्चदृ-
श्यतेइतिश्रुत्यंतरातनैतद्यशोरघुपतेःसुरयञ्चयात्तलीलातनोर्ह्य-[2]
धिकसाम्यविमुक्तधाम्न इतितथैव स्मरणाच्चनिष्कलस्य नि-
र्गताकलाः प्राकृतावयवायस्मात यद्वानिर्गतानिःसृताकला-
मूर्त्तयोयस्मात्सतथातस्य सर्वावतारनिदानस्येत्यर्थः कलावती-

१—तत्वापेक्षयापि शब्दार्थयोगः ।

२—किंनुइच्छामत्रम् ।

णौंवभौभूः पक्शस्याढ्याकलाभ्यांनितरांहरेः इत्यत्रकलाशब्द-
स्य मूर्त्यर्थकत्वावगमात् अथवानिष्कलस्य मायासंश्लेष रहित-
स्यातएवअशरीरिणइतिकर्मनिमित्तहेयशरीरंनिषिध्यतेनचश्रुति
विरुद्धंकथमुच्यतेइति वाच्यंयस्यपृथिवीशरीरंयस्य आत्माशरीरं
जगत्सर्वंशरीरंते इत्यादिश्रुतिस्मृतिषुतस्य पृथिव्यादिशरीरवत्व
श्रुत्याकैमुत्यन्यायतो दिव्यशरीरत्वोपपत्तेः नह्युपत्तिमात्रेणतस्य-
दिव्य शरीरत्वमुपपद्यते किंतु अर्द्धमात्रात्मकोरामो ब्रह्मानंदै
कविग्रहः तथापूर्णानंदैकविग्रहमित्येवमादि श्रुतिभिश्चनाप्यु
भेयविधश्रुतीनांपरस्परं विसंवादित्वे नाप्रामाण्यंनहिंस्यात्सर्वा-
भूतानि अग्निषोमीयं पशुमालभेत्तेत्यत्रैवनहिंस्यात् सर्वभूता-
नीत्यस्याः श्रुतेरेकदेशसंकोचेनाग्निषोमीय पशुव्यतिरिक्तहिं-
सानिषेधपरश्रुतीनांदिव्यशरीरव्यतिरिक्त तच्छरीरनिषेध परत्वो-
पपत्तेः प्रकृतेतुरघुकुलावतीर्णतयामनुष्यांतर तत्कर्मनिमित्त-
देहप्राप्तिं श्रीरामस्यवारयतिश्रुतिः अशरीरिण इत्यवधेयंकिंच
कल्पितस्यशरीरस्येतिवक्ष्यमाणवचन मप्यस्यनिराकारत्वंन-
सहतेयथातथा स्फुटीकरिष्यामि तद्वचनस्यव्याख्यावसरेकिंच-
निराकारंब्रह्मोपाधिवशात् पंचधाभातीतीमंपक्षंपंचधाकल्पनापृ-
थकृतं कल्पितस्यशरीरस्येतीदं वाक्यंनसहते इत्यादिना किंच
सर्वेनित्याशाश्वताश्चदेहास्तस्यपरात्मनः हानोपादानरहिताः
नैवप्रकृतिजाःक्वचित्परमानंदसंदोहाः ज्ञानमात्राश्चसर्वतः सर्वे-

१— दिव्यशरीराऽशरीरवादिनीनां

सर्वगुणैः पूर्णाः सर्वदोषविवर्जिताः" इतिवाराहपुराणवचन-मपि तस्यप्राकृतशरीरसंबंधनसहते अपरंचनिष्कलंनि क्रियं-शांतं निरवद्यंनिरञ्जनं आदित्यवर्णंतमसः परस्तादित्यादि श्रुतिविरोधाच्चाविद्याप्रत्यनीकस्यब्रह्मणः कथमपिप्राकृतशरी-रसंबंधकल्पनंनोपपद्यतेसचपरस्यब्रह्मणःविग्रहोद्विभुजादिमानव गम्यते" द्विभुजः कुंडलीरत्नमालीधीरोधनुर्द्धरः" इत्युत्तर-तनश्रुतेः ब्राह्मणोस्यमुखमासीद्बाहूराजन्यःकृतइतिकारणवादि निश्रुत्यंतरेपिबाहूइतिद्विभुजत्वश्रवणात्एवमुक्तविशेषस्यब्रह्म-णः ब्रह्मशब्दाभिहितत्वेनवृहद्गुणयोगिनः रमंतेयोगिनइत्यि-स्यामपूर्वश्रुतौ रामशब्दाभिहितस्यरूपकल्पना चतुर्भुजादिरूपा-विष्करणमुपासकानांकार्यार्थंभुक्तिमुक्ति प्रदानार्थमित्यन्वयः-रमंतेयोगिनइत्यस्यांपूर्वस्यामृचिपरब्रह्मणोरामपदाभिधेयत्वश्रुतेरेव यत्सच्चिदानंदात्मकंपरं ब्रह्म रामपदेनाभिधीयते तस्यरामपदा भिहितत्वेन रामाख्यस्य चिन्मयस्य ब्रह्मणोरूपकल्पनोपासका नांकार्यार्थं मित्येव मन्वयोद्रष्टव्यः पूर्वऋग्दृष्टस्य प्रकृतिजीव-व्यावर्त्तकस्यपर मित्यस्य विशेषणस्यस्थाने अस्यामृचि अद्वि-तीयस्येत्यादि ब्रह्मपदविशेषणो पादानादत्र परशब्दाविशेषित स्यापि ब्रह्मशब्दस्याद्वितीयादिनद्व विशेषित्वेन परतत्वपर्यव-सायि त्वादद्वितीय ब्रह्मपर ब्रह्मशब्द योरभिन्नार्थकत्वोपपत्त्या द्वितीयस्य ब्रह्मणोपि रामपदाभिहितत्व निष्पत्तेः रामाख्यस्य चिन्मयस्याद्वितीयस्य ब्रह्मणोरूपकल्पनेत्यन्वयोपपत्तेः तत्रब्रह्मण

इतिकेचिद्विशेषेण विभाषामिच्छंती त्यनेन शब्दानामनुशासन
माचार्येणाचार्यस्य वेत्यत्रैव ब्रह्मणइत्यत्रकर्तरिरूपाणामित्यत्र
कर्मणिषष्ठीपुनः कृद्योगात् षष्टीसमस्यते इत्यनेनरूपाणां कल्प
ना रूपकल्पनेनेतिसमासः एवंभूतेन ब्रह्मणारूपकल्पनाकृता
रूपाणि कल्प्यंते उपासकानां कार्यार्थे तत्ररूपपदं शरीरार्थकं
कल्पितस्य शरीरस्येत्युत्तरत्र रूपपदस्थाने शरीरपद श्रवणात्तथा
मत्स्यकूर्म बराहादिरूपधारिण मव्ययमित्यत्र रूपपदस्य
मत्स्यादिशरीर परत्वावगमाच्च तथाचतत्तदुपासकाभीष्टसिद्धार्थं
श्रीरामाख्येन ब्रह्मणास्व नित्यरूपेरूपाणि चतुर्भुजादि
शरीराणि कल्प्यंतेश्व नित्य विग्रहः रूपांतरेणाचतुर्भुजादि
नावाकल्प्यन्ते समर्थ्यंते आविष्कृयतेदर्शयते इतियावत
मणिवत यथावैदूर्यमणिः स्वभावतः शुक्लवर्णो-
पिनीलपीतादि पुष्पादि सानिध्यात स्वनित्यरूपं शुक्लं नील
पीतादिरूपेण दर्शयति तद्वत्तथा च पञ्चरात्र स्मृतिः मणि-
र्यथाविभागेन नीलपीतादिभिर्युतः रूपभेदमवाप्नोति ध्यान
भेदात्तथाच्युतः इतिकैश्चित्तुब्रह्मणो रूपकल्पना ऋषिभिःकृता
इत्येवं व्याख्यातं तन्नोपपद्यते ऋषीणां ब्रह्माविष्कृतमत्स्यादि-
रूपकल्पकाविष्करणत्वानुपपत्तेःब्रह्मणस्तुमत्स्यादिरूपाविष्कर-
णत्वोपपत्त्यातस्यैवरूपकल्पनाकर्तृत्व निष्पत्तेः नन्वत्ररूपपदेन
सामान्य वचनेन वाहनशक्ति सेनादयोऽन्ये जीवा अपि
संगृहीताः संत्युत हि भुजादिसहस्र भुजान्ताः सर्वेंदतारास्त

त्पत्न्यस्तदंगानितदस्त्रादीनि संगृहीतानिसंति रूपस्थानांदेव-
तानां पुंस्त्र्यंगा स्त्रादिकल्पने त्यादौतद्विभाजकवाक्येतेषां
सर्वेषांकल्पना श्रवणादतोत्रकिंसर्वेषां मविशेषेणैकत्रैव
ब्रह्मणि कल्पनमभिमत मस्तिवाकश्चिद्विशेषः ब्रह्मणोरू-
पकल्पना ब्रह्मण्यैवहिपंचधे त्येकस्यैवब्रह्मशब्दस्य श्रवणा-
देकत्रैव तदुपपद्यतेइतिचेन्न उपासकानां कार्यार्थमि-
त्युपासकपदेन ब्रह्मादिजीवानांतत्कल्पित रूपेभ्योभिन्नत्वत-
च्छेषत्वावगमात्त त्कार्यार्थमित्यनेनतुतत्त त्कार्यज्ञानस्यतन्नि
ष्पादनस्य च सर्वज्ञत्वसर्वशक्तिमत्त्वाधीनत्वेनब्रह्मकल्पितानां
रूपाणां सर्वज्ञत्वसर्वशक्तिमत्वोपपत्त्या सर्वेश्वरत्वमुपासकप्रति-
योगित्वेनोपास्यत्वं चावगम्यतेयस्मात्पुनः रूपस्थानादेवतानां
हस्ताशंखादिभिर्युता इत्यत्रवाक्येदेवताशब्दश्रवणात्शंखा-
दिलिंगेन चद्यादिसहस्रांतहस्तवत्वश्रुत्याच तासांब्रह्मावतार-
त्वावगमात् द्व्यादि सहस्रांतहस्त वद्भ्योभगवद्विग्रहेभ्यः
कस्यापिभगवदवतारस्यपृथक्त्वानुपपत्तेरवतारणामेवब्रह्मणिक-
ल्पितत्वोपपत्तेः एवंचेत्तर्ह्य स्तुवाहनशक्तिसेनानामपि तत्र
कल्पना रूपस्थदेवता साहचर्येण तत्पाठादितिचेन्न तथाता-
सावर्णावाहन कल्पनाशक्ति सेनाकल्पनाचेतितासांदेवताना-
मितिषष्ठ्यावाहनादीनांदेवतासंबंधित्व निर्देशेनतदीयत्वसूच
नात्तथा त्वेपिकल्पनाया ब्रह्मकर्तृत्व श्रवणात्तत्सहकार्यंतरा
श्रवणाच्च ब्रह्मण्येवंहि पञ्चधेत्युपसंहारवचनेब्रह्मणितत्कल्प-

नाश्रवणाच्च तेषामपिब्रह्मणिकल्पना स्वीकार्येतिचेन्न ब्रह्मणो-रूपकल्पनेत्युपक्रमे रूपकल्पना श्रवणात्पुनः रूपस्थानां देव-तानांनित्यादौतद्विवरण वाक्येशंखादियुतहस्तवद्देवतानामेव-रूपस्थत्वश्रवणात् वाहनादीनां तत्संबंधित्वनिर्देशेन तत्पृथ-क्त्वोपपत्तेः ब्रह्मण्येव हि पंचधेत्युपसंहार वचनस्य तुन्याय वि-शेषेनमुख्यार्थ परत्वानुपपत्ते रजहल्लक्षणाया ब्रह्मणिएवं श्रुत ब्रह्मणेइतिपदं ब्रह्मणितत्प्रधानेषु मुख्यब्रह्मशब्दस्तः तद्वाहनादिषु चैवंपंचधाकल्पनेत्यर्थकत्वोपपत्तेश्च कथमितिचेदु-च्यते वाहनसेनादिस्वरूपस्थितिप्रवृत्यो स्तदंतर्यामिब्रह्माधीन त्वेनतेषुब्रह्मणः प्रधानाद्ब्रह्मशब्देनतेषामपि निर्देशउपपद्यते यथावागादिंद्रियस्वरूपस्थितिप्रवृत्योः प्राणाधीनतयाप्राणश-ब्देनतानींद्रियाण्युच्यंतेछांदोग्ये" अथहप्राणउच्चिक्रमिषन्स-यथासुहयः यद्वीशशंकून संखिदेदेवमितरान्प्राणागौणान् समखिदत्तंहाभिसमेत्योचुर्भगवन्नेधित्वन्नः श्रेष्ठोसिमोत्क्रामीः अथहैनं वागुवाचयदहं वशिष्ठोस्मित्वंतद्वसिष्ठोसीत्यथहैनं चक्षुरुवाचयदहं प्रतिष्ठास्मित्वंतत्प्रतिष्ठोसीत्य थहैनंश्रोत्रमुवाच यदहंसंपदस्मित्वंतत्संपदसी थहैनंमनउवाच यदहमायतनम-

---

१. ब्रह्मणि इति पदन्ति ।

२. मुख्य प्राणकर्तृ पदेमिति शेषः ।

२. सर्वाणीन्द्रियाणि चक्षुरादीनि अभिसमेत्यमिलित्वा तंमुख्य प्राणनुचुः ।

स्मिंस्त्वंतदाय तेनमसीति नवैवाचोनचक्षूंषि न श्रोत्राणि नमनांसीत्याचक्षते प्राण इत्येवाचक्षते प्राणोह्येवतानिसर्वाणिभव-न्तीति” इत्यत्रत्वन्नः श्रेष्ठइत्यनेनप्राणस्यवागादींद्रियप्राधान्यं विज्ञाप्यतत्स्थिति प्रवृत्योः मुख्यप्राणाधीनत्वेनतुत्तद्रिंद्रियकर्म णांप्राणाधीनत्वनिर्देश पूर्वकत्वेनेन्द्रियणां तदपृथक्त्वसिद्धेः प्राणशब्दव्यपदेश्यत्वम्थहैनं वागुवाचेत्यादिना प्रदर्श्य यत्स्वरूपस्थितिप्रवृत्ती यदधीनेतस्यतदपृथक् सिद्धेस्तद्रूप-त्वात्तन्नाम्ना व्यपदेश उपपद्यते इति ज्ञापयामास श्रुतिः न चात्रवृत्ति विशेषा एव वागादींद्रियाणि नस्वरू-पस्तदभिन्नानीत्या शंकनीयं ब्रह्मसूत्रकारेणाति इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्विभेद श्रुतेरित्यादि सूत्रैर्मुख्यप्राणा द्वागादींद्रियाणां स्वरूपतो भिन्नत्वप्रतिपादनात् अथवापृथि-व्यादीनां पंचीकृतत्वेन पंचभूतात्मकत्वेपि यत्रपृथीवी प्राधा-न्यं तत्रेयं पृथीवी यत्रजल प्राधान्यं तत्रेदंजलमिति पृथिव्या-दिना एकेन शब्देन पंचापिभूतानि व्ययदिश्यंते यथा तथैव ब्रह्मणश्चैतान्याधिक्यात्स्ववाहन सेदीनां कार्यभूतबाहन सेनादिरूपेणाविर्भाववे तस्य प्रेरकत्वाच्च प्राधान्येन ब्रह्मणो रूपकल्पना ब्रह्मणयेवंहिधंचधेति एकब्रह्मशब्देन वाहनादि व्ययदेशोप्युपपद्यते तथाचपारमार्षसूत्रं वैशेष्यात्तद्वादस्तद्वाद इतियद्वायथा बाहनसेनादिसहितेपिगच्छति राज्ञितत्र राज्ञः प्राधान्यादसौराजा गच्छती राजशब्देन समस्तसेना व्यय-

दिश्यते तथातत्रब्रह्मणः प्राधान्यात्स्वरूपतो भिन्नानामपि वाहनसेनादीनां ब्रह्मशब्देन व्यपदेश उपपद्यते तथाच ब्रह्मणोरूपकल्पनेति वचनस्य वाहन शक्तिसेना सहितस्यापि ब्रह्मणः स्तत्तद्रूपाविष्करणार्थ कत्वोपपत्ते स्तत्तदुपासककार्यार्थं श्रीरामाख्येनब्रह्मणास्व नित्यरूपेविष्णवादिचतुर्भुजादिरूपकल्पनाकृता स्वनित्यवाहन शक्तिसेनादिरूपेषु विष्णवादिस्वाव तारानुरूपवाहन शक्तिसेना कल्पनाकृते तितत्तद्रूपकल्पकत्वात् स्ववाहनादीनां तत्तद्रूपकल्पनाशक्तिप्रदत्वाच्च तस्यप्राधान्यात्तद्वाचकशब्देनसर्व निर्देश उपपद्यते तथाच श्रीरामाख्येन ब्रह्मणास्वनित्यरूपे विष्णवादि रूपाणिकल्प्यंतेस्वनित्यरूपं विष्णवादिरूपेण वाकल्प्यते आविष्क्रियते तदाज्ञया तद्वाहन शक्त्यादिभिः स्वनित्यरूपे विष्णवाद्यनुरूपवाहन शक्त्यादिभिः स्वनित्यरूपे विष्णवाद्यनुरूपवाहन शक्त्यादिरूपाणि स्व नित्यरूपं तदनुरूपतद्रूपेणवाकल्प्यंते आविष्क्रियंते इत्येतदुपपद्यतेकिंचात्रावताराणां मूलकारणात्पृथक्तयानित्यत्वस्वीकारे मूलकारणत्व वचन व्याघातः मूलकारणत्वस्यद्वित्त्यादि निष्ठत्वानुपपत्तेः तस्य तत्तदुपासककार्य कालेतत्तद्रूपधारित्व स्वीकारेधृतरूपेषुजन्यत्वेन घटादिवदनित्यत्वप्रसक्तिः अतोब्रह्मणोरूपकल्पनेतिप्रत्यक्त श्रुतिमूलकस्यमणिर्यथा विभागेनेत्यादि वचनस्यकल्पित श्रुतिमूलकात्सर्वेनित्याः शाश्वताश्चैवदेहास्तस्य परात्मन इत्यादि वचनाद्वलीयस्त्वेन प्रबला-

नुसारेणादुर्बलस्य नेतव्यात् ब्रह्मनित्यविग्रहे विग्रहान्तराणां भानंभानत्वस्यचनित्यत्व मुपपद्यते तत्रब्रह्मणो रूपकल्पना मणिर्यथा विभागेनेति श्रुतिस्मृत्यनुसारेण तत्रतेषांभानं सर्वे-नित्याः शाश्वताचेति स्मृत्यनुरोधेन तुतद्भानत्वस्यनित्यत्व मितिविवेकः नह्यस्मिन्पक्षे पक्षांतरदर्शितदोषप्रसक्तिः तदनादि विग्रहस्यैव युगपत्क्रमेण वातद्रूपेणभानत्वस्वीकारात्तेषां तद पृथक्त्वस्वीकारेणातत्रानित्यत्ववचना नवकाशाच्च अत्रांशेश्री जनकपुरे श्रीरघुनाथस्यमथुरायां श्रीकृष्णस्य बालवृद्धस्त्री मित्रशत्रूणां स्वस्वाभिप्रेत रूपेणभास्यमानत्वस्यप्रमाणत्वा त्पक्षांतर स्यतुवद्दयमाणे[1]लक्षणः एकेनैवशरीरेण सौभरिशरीर वत् युगपत्क्रमेणवादि विग्रहात्पृथक्त्वे नानेक विग्रहधारित्व स्वीकारे आद्येतत्रसादित्वेन घटादिवद् नित्यत्वप्रसक्तिः द्विती-येएकस्य सत्वकाले तदन्यस्यासत्वप्रसक्तिः तत्तद्रूपपासकानां स्वनित्यस्मृतविग्रहप्राप्तियोग्यानां मोक्ष्यावस्थायां तद्विग्रहस्या नित्यत्वेन प्राप्त्यभावात् यंयंवापिस्मरन्भावंत्यजत्यंतकलेवर मित्यादिवचन बाधप्रसक्तिश्चेत्यादि बहुदोषैर्ग्रस्तत्वाच्च तस्मादेकस्यैव बहुरूपिणस्तत्तत्कार्यार्थी तत्तात्कालेरूपांतरति-रोधानपूर्वक मेकस्यैवरूपस्यविशेषतः प्राकट्येन तत्तदवसरोक्ते-र्निबाधात्म्यविलक्षणशक्तिमतोऽपरिछिन्न विग्रहस्य युगपद-नेक रूपणैकरूपेण वानेकस्थान दृश्यत्वोपपत्तेश्चश्रुत्यनुकूल एवपक्षोनिरवद्यः ब्रह्मणोरूपकल्पनेति संग्रह वचनं विभजन

---

१. लक्षणे ।

सामान्येनोक्तं विशेषतोदर्शयति रूपस्थानामिति ।

**रूपस्थानां देवतानां पुंस्त्र्यंगास्त्रादिकल्पना।**
**द्विचत्वारि षडष्टासांदशद्वादशषोडश ॥८॥**
**अष्टादशामी कथिताहस्ताः शंखादिभियुताः ।**
**सहस्रांतास्तथा तासांवर्णवाहनकल्पना ॥९॥**

रूपस्थानामिति स्वनित्यरूपे आविष्कृतानि यानिरूपाणि तत्रस्थितानां तत्तद्रूपेणस्थितानां वा तत्तद्रूपवतामित्यर्थः अत्ररूप शव्देन स्वनित्यरूपेदर्शितास्तेतेऽवतार विग्रहा उच्यंते तेप्यनभिव्यक्त पुंस्त्वस्त्रीत्वा दिव्यंजकलक्षण विशेषा स्तथा नभिव्यक्त मत्स्यादि विग्रहभेदकां गविशेषाइतीदृशा अवगम्यंते पुंस्त्वादि कल्पना यास्त दुक्तरत्र श्रवणात् पुंस्त्र्यंगास्त्रादि कल्पनेतिदेवताना मित्ययमपिभाविनो भूतवन्निर्देशः प्रकाशमात्रार्थ कोवाप्रकाशमाना नामित्यर्थः तथाचरूपस्थानां स्वनित्यरूपेस्थिता नामुक्तरीत्या पिंडविशेषत्वेन दृश्यमानानां देवतानां देदीप्यमानानां पुंस्त्वादि कल्पना उपासकानां कार्यार्थे ब्रह्मणाकृतेति संबन्धः एवंतासां वर्णवाहनादि कल्पनाप्युपासकानां कार्यार्थे ब्रह्मणा कृतेतिदृष्टव्यं यद्वा रामाख्यस्य ब्रह्मणोयद्रूपं द्विभुजादिमत् तस्मिन् तिष्ठंतीति रूपस्थाः सदा रामरूपे तिष्ठन्ति तत्तदवसरे तत्तत्कार्य्यार्थंतस्मादेव रूपादीन्याविर्भवन्ति सर्वरूपी रामस्तस्मिंस्तस्मिन्काले विष्वादि रूपे

णाविर्भवति ब्रह्मादिस्वोपासककार्यार्थं मित्यर्थः तथैवोक्तं वा-
ल्मीकीये ब्रह्मणा पद्मे दिव्यार्कसंकाशेनाभ्यामुत्पाद्यमामपि
प्राजापत्त्यंत्वया कर्ममयिसर्वं निवेशितं सोहं सन्यस्तभारोहि
त्वामुपासे जगद्गुरुं रक्षां विधत्स्वभूतेषु मम तेजस्करो भवान्
ततस्त्वमसि दुर्द्धषस्तस्माद्भावात् सनातनात् रक्षां विधास्यन्भू-
तानां विष्णुत्वमुपजग्मिवानिति तेजस्करः रूपस्थानां देवताना
मिति सम्बन्धसामान्येषष्टी विशेषसम्बन्धानां तदन्तर्गत्वात्
छांदसत्वाच्च सर्वमुपपद्यते तथाच तत्र कश्चित्पिण्डविशेषः
पुंस्त्वेन कल्प्यते कश्चित्स्त्रीत्वेन तत्र तत्रतत्तद्व्यंजक लक्षण
विशेषाः कल्प्यन्ते प्रकटीक्रियन्ते इत्येतत्तथातेषां मंगानि
कल्प्यन्ते तत्तदवताराणां तत्पत्नीनांच परस्परं विभेदकार्ये
ऽगविशेषास्ते प्रकटीक्रियन्तेत्यर्थः तथातेषामभिव्यक्तलक्षणां
णविग्रहविशेषाणां येऽस्त्रविशेषाः शास्त्रान्तर प्रसिद्धास्तेकल्प्य-
न्तेतत्राप्ययंविशेषः स्वनित्यविग्रहस्थानांपुंस्त्वादिकल्पनाकृता पुं
शब्दोत्रोपास्यभूतविष्णुनारायणादिपरः तत्कल्पनायाउपासक-
कार्यार्थित्वश्रुतेः हस्ताशंखादिभिर्युता इत्याविष्कृतरूपहस्तगृ-
हीतशंखादीनां विष्णवाद्यायुधत्वप्रसिद्धेश्च चरममंत्रेषुवि-
ष्णवादीनां श्रीरामरूपत्वश्रवणाच्चवाल्मीकीयेपि तथैवस्मर-
णाच्च महार्णवेशयानोऽप्सुमांत्वं पूर्वमजीजनः रक्षांविधास्य-
न्भूतानां विष्णुत्वमुपजग्मिवा नित्यादिनास्वाविनाभूतसीता-
रूपस्थानां स्त्रीत्वादिकल्पना श्रीरामभार्यायाः विष्णवादिभा-

योकारणत्वोपपत्तेः श्रियःश्रीश्चभवेदग्र्याकीर्त्तेः कीर्त्तिःक्षितेः-
क्षमेति महर्षिणापि तथैवस्मरणाच्च स्वनित्यांगेष्वंगांतरा-
णांकल्पनायथा मनुष्यांगविशेषेषु मत्स्यकूर्मवराहाद्यंगविशे-
षाविष्करणं ॐ योवैश्रीरामचन्द्रः सभगवानयेमत्स्यकूर्माद्या
इतिश्रुतेः मत्स्यकूर्मवराहादि रूपधारिणमितिस्मृतेश्चस्वा-
स्त्रेष्वस्त्रांतरत्वकल्पनाच्च तथाच प्रकृतेन श्रीरामाख्येन ब्रह्म-
णोपासकानां कार्यार्थंतत्तकाजेस्वनित्यरूपं विष्ण्वादिरूपेण
कल्प्यतेस्वनित्यरूपे विष्ण्वादिरूपाणिकल्प्यंते वा एवंस्वप-
त्नीरूपे विष्ण्वादिपत्नीरूपाणिस्वांगानि स्वपत्न्यंगानिचतदंगा
कारेणस्वास्त्राणितत्तदस्त्राकारेण कल्प्यंतेदर्श्यते इतियावत्-
ब्रह्मणस्तत्तत्कल्पकत्वेनापिप्राधान्यात् ब्रह्मणोब्रह्मणीत्येकत्व-
निर्देशउपपद्यते नचात्रपिंडविशेषाणां तत्रपुंस्त्वादिलक्षणानां
तत्तदंगविशेषाणांच कालभेदेन कल्पनातः तथैवक्रमेणतद्द-
र्शनमपिभविष्यतीत्याशंकनीयं तत्रकालभेदेपिसूचीशतपत्रभेद
न्यायेनसिद्धा कारणमेवदर्शनोपपत्तेः आदिपदमावरणदेव-
तासंग्रहार्थं इदानींसामान्येनोक्तान्यं गान्यस्त्राणिचविशेषतो-
दर्शयन्तेषांशास्त्रांतरप्रसिद्धिंद्योतयतिद्विचत्वारीति आसांदे-
वतानांद्विचत्वारिषडष्ट तथादशद्वादशषोडशाष्टादशरग्यसह-
स्रांतः अमीहस्ताः शंखादिभिर्युताः शास्त्रविद्भिः कथिताइत्य-
न्वयः एवंचायुधोपेतहस्तकल्पनेयमेका अत्रहस्तशब्दःशिर-
आद्यंगांतरोपलक्षकः सहस्रशीर्षःपुरुषः सहस्राक्षःसहस्रपादिति

श्रुत्यंतरे तस्य सहस्रशीर्षेत्यादिश्रवणात् सहस्रशीर्ष आदित्वतः सहस्रहस्तवत्वस्यार्थसिद्धेः सहस्रबाहूरुभुजाननाद्भुतपितिसहस्रबाहुवतः सहस्रोर्वाननत्वस्मरणाच्च शंखादि भिरित्यादिशब्देन चक्र गदादयो भगवदावतारायुधविशेषाः संगृहीताःस्युःअत्रतत्तद्विग्रहविशेषकथनंविनातद्धस्तादिकथनमन्यथा नुपपद्यमानं ते ते तद्विग्रहविशेषाअपितै.शास्त्रविद्भिः कथिता-इतिद्योतयति येऽत्रतासां देवतानां पुंस्त्र्यंगादयो-भेदाः सामान्येनोक्तास्तेशास्त्र विद्भिरन्यत्रविशेषतः कथिता अतस्तत्तद्भगवद्विग्रहोपासकैस्तत्तदायुधादि विशेषं तत्तच्छास्त्रतोविज्ञायते तेभगवद्विग्रहा उपासनीयास्तानिच शास्त्राण्यवलोक नीयानिस्वोपास्य साक्षात्कार पर्यंतमिति यतएेतरे ये स्वाध्याय प्रवचनयोरत्यादर श्रवणमप्यन्यथा नुपपद्यमानमत्यभ्यसित ग्रंथस्य स्वप्रतिपाद्य विषयसाक्षात्कार हेतुत्वं सूचयति नित्यंतद्विषयक शास्त्रार्थ विचारजात तद्रुचिविशेषकारिति निरंतर तद्ध्यानेन तत्साक्षात्कारतोपपत्ते रिति कथिता इति श्रुतिर्मातृवत्करुणाया सूचयतीत्यवधेयं न चात्रशास्त्रांतर कथितानां सूचकत्वेन तदनुवादित्वादस्यां श्रुतावप्रामाण्यापत्तिरित्याशंकनीयं एकंपृच्छकंतदन्यं वक्तारंचकृत्वातत्संवाद द्वारा समस्त श्रुतिप्रवृत्ति दर्शनात् एकोपनिषत् श्रुतस्योपनिषदंतरेपि श्रवणात् तस्यात स्याश्चोपनिषदोयाज्ञ्यवल्क्यादि वचनात्मकत्वेन तत्र तत्र पौरुषेयत्वापत्तेः तत्तद्वचनानुवादरूपत्वेन परस्परानुवा-

दकत्वेनवातत्र अप्रमाण्यापत्तेश्च वस्तुतस्तुसुखेन सूक्ष्मवस्तुबोध-
यितुंयाज्ञवल्क्यादिसंवादावतारः उपपद्यते सर्वासांश्रुतीना-
मेकरूपत्वात्सूक्ष्मस्य प्रमाणांतरा विषयस्य दुर्ज्ञेयस्यपदार्थस्य
पुनः पुनः कथनादपिकथं चित्कस्यचिद्बुद्ध्यारूढात् सूक्ष्म
वस्तु विषयक पुनरुक्तौ दोषाभावात प्रत्युतश्रवणादिया
थात्म्य बोधप्रयुक्त्या सकृद्दृष्टेः ६र्ज.दि रूचर याथात्म्य
बोधायपुनः पुनः तच्छ्रवणस्य च गुणावहत्वात् न तत्रपरस्प-
रानुवादकत्वेननच पुनरुक्त्या वापिदोषा[illegible]त्तिराशंकनीया
अथवा कथिताइत्यत्रछांदसत्वाद्भविष्यदर्थोक्तः कथिताः कथ-
यिष्यंतेवेदोर्थोपवृंहणकैः इदंसंक्षेपेणोक्तं श्रुत्यर्थं विस्तरेण
कथयिस्यंतीति तद्वाक्यसंदर्भावलोकनेन तत्तदुपास्यदेवस्व[illegible]पं
तदायुधपषिदवाहनादि सहितंयथा वद्विज्ञाय तदुपासनयासा-
ज्ञात् कर्तव्यमिति वेदगूढार्थस्य तदुपवृंहणभूतपुराणादिवा-
क्यप्रकाश्यत्वेतुपुराणवचनं वेदार्थादधिकंमन्ये पुराणार्थंचपार्व-
तिवेदेयन्निहितंदेविपुराणेतत्प्रतिष्ठितं पुराणमन्यथाकृत्वातिर्य-
ग्योनिमवाप्नुयात् सुशांतोपिसुदांतोपि नगतिंप्राप्नुयात्क्वचित्
इत्यादिकमनुसंधेयं अत्रान्यथाकृत्वेत्यन्यथाशब्दोमित्यार्थकः
नत्वार्थांतरार्थकः शिष्टैर्वेदविरुद्धार्थकत्वेनभायस्यामानस्यपुरा-
णादिवचनस्यार्थांतर परत्वेननीतत्वात्तस्यार्थांतरपरत्वेनी[illegible]
तिर्यग्योनिप्राप्तिकारणत्वानुपपत्तेःएवमायुधोपेतहरतकल्प[illegible]
अथद्वितीयतृतीयकल्पनामाह तथातासामितितथातेनप्रकारेण

तासांदेवतानांवर्णवाहन कल्पनाद्वितीयातृतीयेत्यर्थः एवंशुक्ला दिवर्णकल्पना द्वितीयागरुडादिवाहनकल्पनातृतीयेत्यर्थः। ९।
चतुर्थपंचमकल्पनामाह शक्तिसेनाकल्पनेति

**शक्तिसेनाकल्पनाच ब्रह्मण्येवंहि पंचधा कल्पितस्य शरीरस्यतस्यसेनादिकल्पना १०**

तासांशक्तिसेनाकल्पनाच शास्त्रविद्भिः कथितेतिपूर्वेण सम्बन्धः ब्रह्मणाकृतेति वाद्रष्टव्यं एवं विमलादिशक्ति कल्पना चतुर्थी विश्वक्सेनप्रमुखसेना कल्पनापञ्चमीत्यर्थः इमां पंचविधकल्पनामुपसंहरति ब्रह्मणीति यथास्त्रीसेनादिसहितेपि गच्छति राज्ञियथाप्राधान्यादमुकोराजागच्छतीत्येकत्वव्यपदेशः तथा स्वयत्न्यस्त्रवाहनशक्ति सेनादिसहितेपि श्रीरामाख्ये प्रकृतेब्रह्मणि यथायोग्यं विघ्नादि देवता तत्पत्नी तदस्त्र तद्वाहनादिकल्पनायां सत्यामपितस्य मुख्त्वात् ब्रह्मणीत्येक वचन निर्देशः उपपद्यतेनत्वत्र रज्जौ सर्पादिकल्पनावत् निर्गुणेनिराकारेब्रह्मण्येतद्देवतादिसर्वकल्पितमात्रमित्ये तद्वचनमुपपद्यते कल्पनाधिष्ठानस्यनिराकारत्वपक्षे तत्रसाकारत्वावतारत्वयोः सामान्याच्छ्रीरामस्यापि रूपस्थानां देवतानामित्यारभ्यब्रह्मण्येवं पंचधेत्यनेन वाक्येनोक्तपुष्यादि सहस्रांतहरत वत्सुसमस्तभगवद्वतारेष्वंतर्गतत्वोपपत्तेः ब्रह्मण्येवंहिपंचधेति पंचधाकल्पनोपसंहार परवचनानन्तरं तत्पृथककृत्यपठितस्य कल्पितस्य

शरीरस्य शक्तिसेनादि कल्पनेति पूर्ववाक्योक्तावतारविल-
क्षणावतारद्योतकवाक्यस्यवैयर्थापत्तेः कल्पनाधिष्ठानस्यसाका-
रत्वेतुसर्ववैरूपेभ्यो द्वादिसहस्रांतहस्तवतृभ्यः श्रीकृष्णादिभ्यः
स्वसारूप्यावतारस्यदाशरथेर्वैलक्षण्यद्योतनार्थकत्वेन तत्पृथक्
पठितवाक्यस्यसार्थक्यमुपपद्यते इतिसुधीभिश्चिंतनीयं एवंसत्य
पियेहठात्ब्रह्मण्येतत्सर्वंकल्पितमात्रं नवस्तुतः किंचदन्यद-
स्तीतिमन्यंते तेमृत्परिणामघटशरावादिवत् ब्रह्मपरिणामभूतं
जगदित्यस्मिन्वादे ब्रह्मणिविकारत्वापत्तिभयात् ब्रह्माश्रित्य-
मायैव जगदाकारेणपरिणमते इत्यस्मिन्वादेपिद्वैतापत्तिभया-
दाग्रहंहित्वामायांनिमित्ती कृत्यस्वयमेव ब्रह्माज्ञानपरंपरयातदु
पादानकांतः करणोपहितस्वाभासद्वारासंसरतीवास्मज्ञानेनत-
त्कार्यतदुपहितस्वाभासध्वस्त्याविमुच्यते इवेत्यस्मिन्वादेपिनि-
र्गुणेनिर्विकारेब्रह्मण्य घटिताज्ञानसम्बंधतत्कृतसंसरणादिदोष-
दृष्टेः चरमकोटौरज्वाद्यधिष्ठानेसर्पादिभानवत् सर्वाधिष्ठाने
ब्रह्मणिजगद्भानमात्रंनतुब्रह्मव्यतिरिक्तंकिंचिदन्यदस्तियेनतत्रा-
ज्ञानसंबंधः तत्कृतसंसरणादिदोषःप्रसज्जेते तीमंविवर्त्तवादमा-
श्रयंते तेषांमते श्रुतिस्मृतीतिहासपुराणादिप्रबंधोनिः प्रयोजन-

---

१. ब्रह्मस्वशब्दार्थः।

२. अज्ञानंतच्छब्दार्थः।

३. अज्ञानंतच्छब्दार्थः। तत्कार्यमन्तःकरणम्।

४—अज्ञानंतच्छब्दार्थः

अज्ञाश्चतत्प्रबंधकर्त्तारःवर्णाश्रमाचारोपदेशोपिव्यर्थः तथा गुरुशिष्यपरंपरा आत्मशास्त्रविचारश्चनिरर्थकःसुतरांनिरर्थश्च संन्यासाश्रमपरिग्रहस्तैः कालत्रयेपिब्रह्मातिरिक्तंकिंचिन्नास्तीति सिद्धांतित्वात् स्वभावतोनिर्गुणेनिर्विकारेब्रह्मणिअज्ञानसंबंध-तदुपादानकांतः करणोपहितचिदाभासद्वारातत्संसरणादेरसंभवपराहतत्वात् उत्पन्नायांविद्यायांतेषांवैयर्थेपिअविद्यावदाश्रयव्यवहारकालेतेषांसार्थक्यंब्रूमइति चेन्नैतदप्युपपद्यते परिणामादिवादानविकारित्वादिदोषग्रस्ततया क्रमेणपरित्यज्यस्वमतविशुद्ध्यर्थे चरमकोट्यवलंबितविवर्त्तवादानांतेषामभिमतस्य-रज्जुसर्पादिदृष्टांतस्यापिदोषग्रस्तत्वात्दृष्टांतदार्ष्टांतिकयोर्वैरूप्यात् दृष्टांतेरज्ज्वधिष्ठानारोप्यसर्पादिदेष्टुपदृष्ट्रपेक्षितत्वात्दार्ष्टांतेब्रह्मव्यतिरिक्तस्याभावस्वीकारात्किंचखेपुष्पादि वत्प्रकाशेतमोवच्च-वस्तुतोनिर्गुणेनिर्विकारेब्रह्मणिकालत्रयेप्यज्ञानसंबंध एवनोपपद्यतेकुतस्तरांपरंपरयातदुपादानकांतःकरणोपहितजीकल्पनाविषयिकव्यवहारकल्पनानैमित्तिकतेषांसार्थक्यमुपपद्येतनचतन्मतेनैवस्तुतोब्रह्मव्यतिरिक्ताजीवाः संतियदाश्रयाविद्याजन्यव्यवहारमित्तिकं तेषांसार्थक्यमुपपद्येत् किंचविरुद्धस्वाभावतयाऽसं-

१—स्मृतीतिहासपुराणादिस्त मनबुद्धिचित्ताहंकारमंतःकरणं अज्ञानमुपादान कारणंयस्मिन्तदज्ञानमुपाद नकभू तच्चतदंतः करणं तस्मिन्नु[illegible]तंधारित्वंस्वभासंतद्वारा ।

२—असंभवे न पराहतत्वात्

३—उपदेशानां

भवति संबंधयोस्तमःप्रकाशयोः प्रकृतिकार्यत्वेनसजातीयत्वा-
त्कथंचिद्यदिसंबंधउपपद्यते तदापिनब्रह्मज्ञानयोश्चितूजडत्वेन-
सर्वथाविरुद्धस्वभावयोः कथमपिसंबंध उपपद्यते तादृशदृष्टां-
ताभावात् यंसंबंधमाश्रित्यतैः[1] सृष्टिसंहारादिसार्थक्यं श्रुति-
स्मृत्युपदेशसाफल्यंचोपपाद्यते इत्यतोज्ञानस्वरूपंब्रह्मतद्विपरी
तञ्चाज्ञानाऽज्ञानयोस्तमः प्रकाशवत्परस्परंविरोध इतिचपुन-
स्तादृशेऽद्वितीयेब्रह्मणि अज्ञानोपादानकांतः करणोपहितत्वे-
नजीवत्वसंभावना. तदाश्रयव्यवहारहेतुकश्रुत्यादिसार्थक्यंचेति
परस्परंविरुद्धोक्तीनांतेषां[2] वचनेषुकोविद्वान् विश्वसेद्दतेस्वपरं-
पराग्रहतत्परात्तस्मात्तदुक्तिमना[3] इत्यश्रुतिस्मृतिप्रबंधोऽन्यथा
नुपपद्यमानोब्रह्मातिरिक्तान्संसरतोजीवान्कल्पयति वदंति च
श्रुत्याद्यातेषांजीवानां निःश्रेयसेप्राप्यस्यब्रह्मणोरूपं प्राप्तुश्च-
प्रत्यगात्मनः प्राप्त्युपायंफलं प्राप्तेस्तथाप्राप्तिविरोधिनः तथा-
जीवेश्वरसंबंधं चेत्यवगम्य[4] चयेनब्रह्मणाश्रीरामेणस्वोपासका-
नांकार्यार्थमनेकधास्वविग्रहः आविष्कृतः सयस्मिन्कस्मिन्
विग्रहेउपासितव्य इतिब्रह्मणोबहुरूपकल्पनोक्तेस्तात्पर्यः श्रुत्या-
आविर्भावाविष्करणादिपदानिविहाय यद्वारंवारंकल्पनेति
पदमुच्यते तस्यायमाशयः यथावैदूर्यमणियुगपत्क्रमेणवानील

१—श्रुतिवंचकैः
२—श्रुतिवंचकानां
३—श्रुतिवंचकस्तच्छब्दार्थः
४—उपासितव्येत्यग्रेनाऽन्वयः

पीतादिपुष्पादिसंनिधानेन युगपत्क्रमेणवातत्तदवच्छिन्नेदेशेकृत्स्नें वानीलपीतादिरूपेणभासतेस्वभावतरतुसमणिः शुक्लएवतथा प्रकृतंब्रह्मश्रीरामाख्यमुपासकानां कार्यार्थे विष्णुनारायणादि-रूपेणभासते भासयति च स्वास्त्रशक्तिसेनादीस्त्वभासित रूपा-न्तरानुरूपास्त्रशक्तिसेनादिरूपेणवस्तुततरतु स्वयमींद्रनीलमणि प्रभः द्विभुजाद्याकृतिमान्स्वनित्यधनुर्बाणाद्यस्त्रशक्तिसेनादि विशिष्ट एवेत्येतदभिप्रायको ब्रह्मणोरूपकल्पनेत्यादि वाक्य समुदायः स्मृतंचेत्थमेवपंचरात्रकारेण मणिर्यथाविभागेन नीलपीतादिभिर्युतः रूपभेदमवाप्नोतिध्यानभेदात्तथाच्युत इति तत्तद्रूपाविस्करणकालेपिनच्यवतेस्वनित्याकृत्यादितोय.सोच्युत इत्यर्थमत्राच्युतपदोपादातुरभिप्रायःसनत्कुमारेणापितथैवस्मृतं मत्स्य कूर्मवराहादि रूपधारिणमव्ययमिति अत्राप्य व्यय-मिति न विविधं विकारमेतीत्यव्ययंपदं स्वनित्यविग्रहे रूपां तराणांभासमानत्वं सूचयतिवस्तुतस्तुतस्यविग्रहांतरस्वीकारत्व-स्वीकारे तन्नित्यत्वबाधःमूलशरीराबाधेन द्वितीयशरीरधादित्व-स्वीकारे तत्रविकारित्वप्रसक्तिर्धृतरूपांतरस्याधिकत्वात् धृतश-रीरेजन्यत्वेनानित्यत्वप्रसक्तिःपरमात्मसर्वदेहानांनित्यत्वस्वीकारे-मोक्षावस्थायांजीवानां स्वोपास्याकृतिप्राप्त्यावश्यकत्वेन मुक्त-जीवेष्वाकृत्यावैषम्यप्रसक्तिः तत्तदुपासकानामवश्यंस्वस्वोपास्य रूपतोपपत्तेः सर्वेषांभगवद्विग्रहाणांस्वातंत्र्येणनित्यत्व स्वीकारे विनिगमनाविरहेणान्यतरस्यापिसर्वकारणत्वानुपपत्तेर्मूल कार-

णः नवचनस्याहेतिः सदेवसौम्यएकमेवाद्वितीयमि.याद्येकत्ववा-
दिश्रुत्यनुकूलात्तुचिन्मयस्याद्वितीयस्यब्रह्मणः इत्येकनिष्ठावता-
रित्वबोधकान्यश्रुत्यनुकूलाच्चमूलकारणत्वस्यैकनिष्ठत्वनिष्प -
त्तेःतस्मादुभयोःपक्षयोरुक्तानुक्तदोषग्रस्तत्वात्पक्षांतरस्य.पि ऽ्गा
क्रांतत्वात् एकस्यैवनित्याकृतिविशिष्ठस्यबहुरूपेण दृश्यमानत्वं
स्वीकार्यंस्फुटयिष्यंतीममर्थमुत्तरतापिनीयमंत्राः ॐ योवैश्रीराम-
चन्द्रःसभगवानद्वैतपरमानंदात्मायाः परंब्रह्मभूर्भुवःस्वस्तस्मैवै-
नमोनम इत्यादयः इममेवार्थंहृदिनिधायभगवान्वाल्मीकिराह
संक्षिप्यहिपुरालोन्मायययास्वयमेवहि महार्णवेशयानेप्सुमांत्वं
पूर्वमजीजनः इतिमहार्णवशयानः नारायणरूपेणाभासमान
इत्यर्थः ततस्त्वमसिदुर्धर्षस्तस्माद्भावात्सनातनात् रक्षांविधास्य-
न्भूतानांविष्णुत्वमुपजग्मिवानितिचअत्रतस्माद्भावात्सनातनाद्धि
तिकारणेपंचमीनिर्देशात् विष्णुत्वमितिकार्यवाचकस्यत्वप्रत्य-
यांतनिर्देशाच्च जग्मिवानिति प्राप्त्यर्थकक्रियापदाच्चविभावा-
दिरूपाविष्करणेरूपांतरेणाभासत इत्यवगम्यतेनचवस्तुतोरूपां-
तरोभवति इतिवाच्यंसनातनादित्युक्तस्य सनातनत्वस्य
विरोधात राघवत्वेतुस्वनित्या कृत्यैवतस्याविर्भावइति तस्यैव
वचनादवगम्यतेसत्वंवित्रा समानासुप्रजासु जगतांवररावणस्य
वधाकांक्षीमानुषेषु मनोदधाःइत्यत्रमनोधारणमात्रोक्तेः रामत्व
मुपजग्मिवान्मानुषत्वंगतोह्यजइतिचानुक्तेःकिंचकौशिल्याजनय-

१—कृदन्तं बोध्यम्

द्रामं दिव्यलक्षणसंयुतमित्यत्रोक्तोदिव्यशब्दः श्रीरामस्यआकृ-
त्यालक्षणांतरेणचदेवतांतरसा दृश्याभावात् ब्रह्मरुद्रादिलोका
वाचकः सनवृक्ष इवस्तब्धोदिवितिष्ठत्येक स्तेनपूर्णमिदमितिश्रु-
त्युक्तेपरनपदपर्यायेपरमाकाशेयस्यविस्यति तत्रत्यानियानिलक्ष-
णानितैः संयुतं लक्षणानितुद्विभुजादीनियानितद्विग्रहेदृश्यंते
तान्येवात्र गम्यंते प्रथममाकृत्यंतरेणाविर्भूयपश्चादा कृत्यंतरं-
धृतवानिति तत्रानुक्तः तत्रैव चाजनयद्राम मितिनामकरणा-
त्पूर्वमुच्चार्यमाणांरामेति पदंस्वस्यतदनादि नामत्वं सूचयति
अत्रापि इतिरामस्य रामाख्याभुविस्यादिति श्रुतिरपि राम-
नाम्नोऽनादित्वं सूचयति मंत्रोऽन्वर्थादिसंज्ञकइतिरामनाम्नः
आदि संज्ञत्वंश्रूयते पुराणेपिविश्व रूपस्यते राम विश्वेशब्दा
हिवाचकाः तथापि रामनामेदं विश्वेषां वीजमक्षयमिति तस्य
शब्दांतर कारणत्वं तत्राप्यविनाशित्वमुक्तंतथा सहस्रनामता-
तुल्यं रामनामवरानने विष्णोनाम्नां सहस्राणांतुल्यः विष्णोरे-
कैकनामैव सर्ववेदाधिकंमतं तादृङ्नामसहस्रैस्तुरामनाम्न समं-
मतमितीदृशंवहुधा श्रुतंभगवन्नामांतरेभ्योरामनाम्न उत्कृष्टत्व
मन्यथा ऽनुपपद्यमानं श्रीरामनाम्नः सर्वनामकारणत्वं कल्पय-
तीति सिद्धं तस्यानादित्व मित्यतस्तद्वाच्य स्यापिशब्दांतर
वाच्यानां कारणत्व मुपपन्नतरं किंच नामकरणसमयेपि गुरु-
तस्य रामेतिनामकृतवान् तस्मादिदमवगम्यते यत्तापिनीयोप-
क्रमे रमंतेयोगिन इत्यनया श्रीरामनाम्नस्तद्वाच्यस्यचपरब्रह्मणः

सर्वोत्कृष्टत्वे नावतारित्वं सूचितं यच्चरघुकुलेखिलंरातीत्या-
द्याभिः तस्यगौणत्वं तेनतद्वाच्यस्यावतारत्वं सूचितं तदेवभग-
वान्वाल्मीकिरपि नामकरणात्पूर्वं राममित्युच्चार्य तस्यानादि-
त्वेन मुख्यत्वात् तद्वाच्यस्यावतारित्वं नामकरण समयेपित
देवोच्चार्य्य तस्य सादित्वेन तद्वाच्यस्यावतारत्वं चसूचित
वान् नामनामिनोस्तादात्म्य स्वीकारादिति यच्चेदं सूचितं
बालकांडे तस्यद्वैविध्यं तदेवोत्तरकांडे स्फुटीकृतं ततस्त्वमसि-
दुर्धर्षस्तस्माद्भावात्सनातनादित्यादिना तत्रापि चिन्मयस्याद्वि-
तीयस्येत्यस्यां श्रुतस्य ततस्त्वमसि दुर्धर्षस्तस्माद्भावा-
त्सनातनादित्ये तदुपबृंहणभूतं रूपस्थानां देवतानामि-
त्यादेः महार्णवेशयानोऽप्सुत्वित्यादिक मुपबृंहणं कल्पितस्य
शरीरस्येत्यस्यास्तु रावणस्य वधाकांक्षीमानुषेषु मनोदधाः
इतीदमुपबृंहणमितिविवेकः तस्मात्स्वयमवतारिणः स तएव
श्रीरामस्याजहत्स्वा कृत्यादेरवतारःतेनयत्रतत्रतदवतारत्वोक्तावा
पिनकाचिद्धानिःविग्रहांतरनिष्ठतत्कारणत्वस्यात्रोपनिषद्यश्रवणा
दनुपपत्तेश्चतदेवंयत्तरमंतेयोगिनइत्यनयासूचितंश्रीरामस्यसर्वाव
तारित्वंतच्चिन्मयस्याद्वितीयस्यब्रह्मणोरूपकल्पनेत्याद्याभिःस्फुटी
कृतं अथरघुकुलेअखिलंरातीत्याद्याभिः सूचितंयत्तस्यावतारत्वं
तदजहत्स्वाकृत्यैवश्रीदशरथगृहाविर्भावत्वं संभावयितुं तस्यो-
पासनोपयोगिनींसेनादिकल्पना मुत्तरार्द्धेनाहकल्पितस्येति
किंचनिराकारंब्रह्मोपाधिवशात्पंचधाभाती तीमंपक्षंपंचधाक-

ल्पनापृथक्कृतं कल्पितस्यशरीरस्येदंवाक्यं नसहते यदिनिरा-
कारमेवब्रह्मपंचधाभासते रज्जुरिवसर्पादिरूपेणेतीदमेवश्रुते
रभिप्रेतंस्यात्तदा राघवशरीरस्यप्यौपाधिकत्वेन कल्पनात्वसा-
मान्यात्ब्रह्मादि सहस्रांतहस्तवद्विग्रहांतर्गतत्वोपपत्तेःततःपृथक्के
नश्रुतंतत्परंवाक्यंव्यर्थंस्यात् तस्मात्पंचधाकल्पनातः पृथग्भूतं-
राघवपरं वाक्यमवतारिणोब्रह्मणः साकारत्वंतस्यैवतत्तदव-
सरेतत्तदाकारेणाविर्भावत्वंश्रीदशरथविषये स्वेनरूपेणाविर्भा-
वत्वं चोपपादयति तथाचोक्तकल्पनांतर्गतद्विचतुरादिहस्त
धारित्वस्ययुगपदेकविग्रहनिष्ठत्वानुपपत्तेः पंचधाकल्पनांतर्गत-
द्व्यादि सहस्रांतहस्तवद्विग्रहाणामेकस्यापि विनिर्गमनाविरहा-
त् मूलकारणाकृत्य निश्चायकत्वात्ब्रह्मणोरूपकल्पना इत्यस्य-
संग्रहवाक्यस्यरमंतेयोगिनोनंतेसत्यानंदेचिदात्मनि इतिरामपदे
नासौपरंब्रह्माभिधीयते इतितत्पूर्वतनश्रुत्यायत्परंब्रह्मरामपदे-
नाभिधीयते तस्यैवरामाख्यस्य चिन्मयस्याद्वितीयस्य ब्रह्मणो-
रूपकल्पने त्येवमेकवाक्यत्वात् रामाख्यब्रह्मणोमूलकारण-
त्वसर्वावतारित्व निश्चायकत्वात् तत्सारूप्यावतारपरत्वेनैवो-
क्तस्य पृथक्वाक्यस्यसार्थक्यमुपपद्यते तस्मात्पंचधाकल्पनातः
पृथग्भूत्वा कल्पितस्येतीदंवाक्यं राघविग्रहस्यावतारिब्रह्म
नित्यविग्रहत्वं सूचयित्वा परस्यब्रह्मणो द्विभुजादिमत्वंज्ञा-
पयतीतिबोध्यं तस्यवाक्यस्यार्थस्त्वीदृशः तस्यचिन्मयेस्मिन्रमं-
तेयोगिनचिन्मयस्याद्वितीयस्येतिप्रकृतस्यब्रह्मणः श्रीरामस्य-

यत्कल्पितंलीलयाविष्कृतं अत्ररूपांतरस्याविष्करणात्वानुपपत्तेः प्राकृतनयनागोचरंयत्स्वात्यंतकृपयातद्गोचरीकृतंशरीरंनराकारंत-स्यसेनादिकल्पनाशास्त्रविद्भिःकथिता ब्रह्मणाकृतावेत्यन्वयः कस्यनापदमाविष्करणार्थिक अत्र परस्वरूपस्यस्वाकृत्यैवाविर्भावत्वे कल्पितस्यशरीरस्येतिशरीराविष्करणा वचनंहस्तास्त्रकल्पनानुक्तिश्चलिंगंअन्यत्राकृत्यंतरेण तदाविर्भावत्वेतुद्विचत्वारी-त्यादिकंलिगं नचतत्रापि रूपस्थानामितीदंस्वाकृत्यैवतस्थादि-र्भावत्वंसूचयतीतिवाच्यंद्विचत्वारित्यादि वचनविरोधातूद्विच-तुष्षडष्टादीनांहस्तानां एकस्मिन्नित्यविग्रहेयुगपदाविष्करणात्वा संभवात् क्रमेणतत्तदाविष्करणेतु एकस्यसत्वकालेतदन्यस्या सत्वप्रसंगात्तत्कुतः एकविग्रहस्ययुगपदनेकरूपत्वासंभवात् विलक्षणशक्तिमतोयुगपत्पृथक्पृथगनेकरूपधारित्व संभवेपिते-ष्वादिविग्रहव्यतिरिक्तानामन्येषांसादिमत्वेनघटादि वदनित्यत्व प्रसंगादतोरूपस्थानामित्यस्यभामानत्रार्थकत्वोपपत्तेः किन्दरूप-स्थानामितिसमस्तावतार परकल्पना वाक्यमुपक्रम्यब्रह्मणयेवं-हिपंचधेत्युपसंहृत्यचपश्चात्तत्पृथकत्त्वेन कल्पितस्यशरीरस्येत्यव-तारांतरपरंयद्वचनंश्रूयते तदप्यवतारांतरेभ्योऽस्यावतारस्यैव लक्षण्यंसूचयित्वास्वावतारिसारूप्यमुपपादयति स्फुटयतिहि-द्विचत्वारिषडष्टादशद्वादशे त्यादिवाक्यं कारणविग्रहादवता-रांतराणामाकृत्यंतरत्वंद्विचतुर्भुजादिमतांपरस्पर विरुद्धरूपा-णामेकस्मिन्नित्यविग्रहे युगपत्स्थितेरसंभवात् क्रमशेतत्तद्रूप

धारणेएकस्यसत्वकाले तदन्येषामसत्वप्रसक्तेः सर्वेषामनादित्व स्वीकारेमूलकारण व अनव्याघातात् बहूनांद्वयोर्वामूलकारणत्वा-नुपपत्तेः सिद्धान्तेतुरूपस्थानामितिपदंरूपेतिष्ठंतीति निरुक्त्या भानमात्रार्थकं मत्कारण विग्रहे सर्वेषां द्विचतुर्भुजादि मद्वि-ग्रहाणांभानमात्रत्वं भानस्यचसार्वदिकत्वं सूचयति स्मर्यते चतथैव मणिर्यथाविभागेननीलपीतादिभिर्युतः रूपभेदमवा-प्नोतिध्यानभेदात्तथाच्युत इतिरामस्यैवकलांशाद्देअवताराभ-वंतिहि कोटिकोटिश्चकार्यार्थेसिंधौवीचीवदै मुने इतिवचना य-थार्थकंतदितिवाच्यंपक्षांतरस्य युगपदक्रमेणावेतिपक्षद्वयेदर्शित दोषग्रस्तत्वात् तस्मात्तेपांतत्रभान मात्रत्वंमणिर्यथाविभागेनेति वचनान्मंतव्यंभानस्यचानित्यत्वं सर्वेनित्याः शाश्वताश्चदेहा-स्तस्यपरात्मनः इतिवचनात् अनयोः स्मृतिवचनयोः स्फुटंविरु-द्धार्थकत्वेनप्रतीयमानयोरन्यतरस्यप्रमाणत्वेतदन्यतरस्य बाधा दुष्करीत्यैवैकवाक्यतोपपत्तेः यद्यपिविशिष्टशक्तित्वेनेश्वरस्य-सौभरिशरीरवत् युगपत्विलक्षण बहुविग्रहधारित्वमप्युपप-द्यतेतथापिभानमात्रार्थकत्वपक्षेमणेर्दृष्टांतःसुतरामुपपद्यतेदोषा-नाक्रांतश्चसःपक्षांतरस्तुयुगपत्क्रमेणेत्युक्तदोषद्वयग्रस्तः यदितु-विशिष्टशक्तिमत्वेनान्यथा कर्त्तुंसमर्थस्य परमेश्वरस्यमृत्योरपिमा-रकत्वेन तत्परतंत्रत्वाभावात्तद्धृतविग्रहाणामप्यविनाशित्वेननि-त्यत्वंमन्यते तदापियुगपत्क्रमेणवाधृतानांविग्रहाणांधारकत्वं-श्रीरामाख्येब्रह्मण्येवपर्यवस्यतिब्रह्मणोरूपकल्पनेत्यादिश्रुते.पर-

न्तुसर्वेषामनादित्वंसमानं नोपपद्यतेतत्तत्काले तत्तदवतारपर पुराणवचनविरोधात् लीलाविभूत्याविर्भावपरंतत्तद्वचनमितिचे त्तदामूलकारणत्ववचनव्याघातः तस्यद्वित्रिनिष्ठत्वानुपपत्तेः तत्रविनिगमनाविरहात्सर्वेष्वेकस्यतदनुपपत्तेश्च चिन्मय- स्याद्वितीयस्यब्रह्मणइत्येकनिष्ठावतारित्व परश्रुतिविरोधाच्च- कथंचिदपिनोपपद्यते तत्विशिष्टशक्तिमतः सर्वमुपपद्यते इति चेन्नअनुभवयुक्तिसहकृतब्रह्मनिष्ठावतारित्व परश्रुतिविरोधेन- त्वत्कल्पनायाः अप्रमाणत्वात् तस्मात्श्रुतिस्मृतिबलात्प्रकृतं- रामपदाभिधेयं ब्रह्मश्रौतद्विभुजादिमत्सर्वावतारिस्वनित्वविग्रहं रूपांतरेणकल्पयतिभासयतियथादिदीय.स्वस्वरूपंदीपांतरेणभा- सयतितद्वत्स्वनित्यरूपेणस्वस्था नस्थः सन्विष्णुमत्स्यादिरूपो भूत्वोपासकानांकार्यार्थमात्राविर्भवतीत्यर्थः विष्णुत्वमुपजग्मि- वानित्यादिस्मृतेः तथारूपस्थानांदेवानांपुंस्त्र्यंगास्त्र्यादिकल्पने त्यत्रापिस्वयंरामाख्यं ब्रह्मविष्णवादिरूपंभवति सीतांस्वपत्नीं- लक्ष्म्यादिरूपेणकल्पयति तांलक्ष्म्यादिरूपांभावयतीत्येततस्वां गानि चतुर्भुजादिविष्णवाद्यंगरूपेणकल्पयतिस्वास्त्राणिशंखादि- रूपेणकल्पयतीत्येवमुत्तर त्रापियथासंभवमूह्यं ब्रह्मणोरूपक- ल्पनोपासकानां कार्यार्थ मित्यादिश्रुतिबलात् अस्मिन्पक्षे- यथाद्यादिप्रदीपेनसर्वदीपप्रबोधनं तथा सर्वावताराणामवता- रीरघूत्तम इत्यादिवचनंप्रकृत श्रुत्यर्थोपबृंहकत्वेनज्ञेयंकिंचात्र कथिता इतिश्रुतिबलात्वशिष्ठसंहितादौहनुमदादीनां नित्य-

विभूतावपिस्थितेः स्मरणाच्चवेदार्थज्ञैः शिष्टैर्यस्यभगवद्विग्रह-
स्ययेयादृशांश्चांगवाहनशक्तिसेनादयस्तत्रतत्रकथिता स्तेता-
दृशास्ततः सहस्रगुणाधिकतेजसश्चनित्यविभूतिस्था इत्यनुमे-
याः तथाचात्रश्रीराघवस्य च तद्वर्त्तित्वप्रसिद्धतत्पार्षदादीनां पा-
र्षदान्तरेभ्य उत्कृष्टतोपपत्तेः तन्मूलकश्रुतिभिः प्रसिद्ध्यनुरो-
धाच्च नित्यविभूतावपितस्य सर्वभगवद्विग्रहोत्कृष्टतोपपत्त्या
सर्वावतारित्वं तदस्याद्युत्कृष्टत्व परपौरुषेय वचसा मपिश्रुति
मूलकत्वेन स्वार्थे प्रमाणत्वं निर्बाधं अवतारिसंबंधिनामपि
तदवतारसंबंधिभ्य उत्कृष्टतोपपत्तेः सर्वाण्यपि सर्वावतारि
रामाख्यब्रह्मस्वरूपायुधादि परत्व परवचनानि यथा श्रुतमवा
धितार्थानि मंतव्यानीति न च ब्रह्मणोरूपकल्पनेति रामाख्य
ब्रह्मनिष्ठं सर्वावतारित्व श्रुतिवत् उपनिषदंतरेपि भगन्नामां
तरवाच्यावतारित्व वाक्यंश्रूयते यद्वाक्यं तदन्यस्याप्य
वतारित्वमुपपादयत्सत्ब्रह्मणोरूपकल्पने त्यादिप्रबलश्रुतिवि-
रोधेनाप्रमाणता मिवगच्छत्सत्स्वप्रमाणत्वोपपत्तये उक्तप्रबल-
श्रुत्यनुरोधिसत्स्वोदरगतावतारित्वपरनारायणादिशब्दस्यरामा-
ख्यब्रह्मपर्यवसायित्वसूचनद्वाराप्रमाणत्वं गच्छेत्किंतुश्रूयते तत्र
तत्रोपनिषदितत्तन्नामकस्यजगत्कारणत्वमात्रं तथाहि गोपालो-
पनिषदि कादापःलात्पृथिवी त्यादिनाश्रीकृष्णाख्यस्य पृथिव्या
द्युत्पत्तिहेतुत्वंतथा मथुरायांस्थितिब्रह्मन्सर्वदामेभविष्यतितस्या-
मधिष्ठितः कृष्णरूपीपूज्यस्त्वयासदेत्यादि नातस्यनारायणा-

रुद्रस्यप्रलयावधित्व श्रवणादुभयविधश्रुत्योः परस्परंविरोधेना-
प्रमाण्यतास्यात्तसिद्धान्तेतुनारायणाद्रुद्रोजायतेइतिनारायणाज-
त्वेनरुद्रस्यसर्वकारणत्वानुपपत्तेःकारणवाक्यगतरुद्रशब्दस्यसर्व
शाखाप्रत्ययन्यायेनपरमात्मवाचकत्वोपपत्तेः सरुद्रशब्दोपि का-
रणवाक्य गतनारायणशब्दबोधितस्य रामाख्यब्रह्मणः प्रल-
यावधित्वे पर्यवस्यति एकोहवै नारायण आसीदिति देवाहवै
स्वर्गलोकमिति उभयोरुपनिषदोः प्रसिद्धार्थकयोः हवै इति-
पदयोः श्रवणात्तयोरितरोपनिषद इतरानुवादकत्वानुपपत्त्या
द्वयोरप्युपनिषदोः ब्रह्मणोरूपकल्पनेत्यादिनिरनुवादकश्रुत्यनु-
वादकत्वोपपत्ते रितिनकश्चिद्विरोधः वस्तुतस्तुनेमानारायण-
नृसिंहगोपाल रुद्राद्युपनिषदः अवतारित्व विषयकाः नापि
परविभूतिविषयकाः किंतुलीलाविभूति विषयकाः सत्योनारा-
यणरुद्रादिशब्दाभिहितस्य प्रलयावधित्वं बोधयन्त्य स्तस्मा-
द्ब्रह्माद्युत्पत्तिसूचनद्वारा तस्यजगत्कारणत्वेन भजनीयत्वं द्यो-
तयंति ननुएकोहवैपूर्वंनारायणोदेवोयस्मिंल्लोकाओताश्चप्रोताश्च
तस्यहृत्पद्माज्जातोऽब्जयोनिस्तपयित्वा तस्मैवरंददौ सहोवाचा
व्ययो निर्वोऽवताराणां श्रेष्ठोवतारः कोभवतीति गोपालतापनी-
योपनिषदि नारायणस्यावतारित्वं श्रूयते इतिचेत्सत्यं तथापि-
तत्रावतारत्वविषयं बहुवचनं एकांहिरुद्रायजंति द्वितीयांहि
ब्रह्मायजतीत्याद्युक्त रुद्रादिपूज्यमथुरावनस्यस्थ द्वादशमूर्त्तिपरं
तन्मध्ये कृष्णावतारस्यश्रेष्ठत्वद्योतकं च भवति वोऽवताराणां

मध्ये श्रेष्ठोऽवतारकोभवति यंस्मृत्वामुक्ताअस्मात्संसाराद्भवं-
तीति ब्रह्मप्रश्नवाक्येतदवतारमध्यगतश्रेष्ठावतार मूर्तेर्मोक्षहे-
तुत्वश्रवणात् तदुत्तरभूतेनारायणवाक्येपि तांहियेयजंतिते-
मृत्युंतरंतिमुक्तिं लभंते इत्यादिनातासुद्वादशसुतन्मुर्तिषुमध्ये-
भूमिस्थत्वे नोकस्यैकस्यकृष्णस्यैवयाजकानांमुक्तिप्राप्तिवचनेन
सर्वावतारेषुकृष्णावतारस्य श्रेष्ठत्वद्योतनाच्च तत्रमत्स्यकूर्मादि
नामाश्रवणाच्चशास्त्रांतरेमत्स्यादिभक्तानां मोक्षाश्रवणाच्च नम
त्स्यादिसाधारणेनमुक्तिप्रदत्वेनहेतुनामत्स्यादिभ्यः श्रीकृष्णश्रे-
ष्ठ्योतकत्वं तयोःप्रश्नःतदुत्तरवाक्ययोरुपपद्यतेकिंतुमथुरावनस्थ
रुद्रादिपूज्यैकादशमूर्तिभ्यः एवअथवा गोपालोहमजोनित्यः
प्रद्युम्नोहंसनातन इत्याद्युक्तेषुनारायणावतारेषुप्रद्युम्नादिभ्यो-
गोपालस्यश्रेष्ठत्वद्योतकंभवतुप्रद्युम्नादीनांप्रत्येकंगुणाढयत्वेन-
मुक्त्यर्थोपास्यत्वानुपपत्तेस्तदश्रवणाच्चतस्मात् श्रीकृष्णस्याव-
तारश्रेष्ठत्वज्ञापनायास्यवाक्यस्यप्रवृत्तेः श्रीकृष्ण निष्ठावतार
श्रेष्ठत्वविधायक मिदंवाक्यं ननारायण स्यावतारित्व-
विधायकमुभयविधाने विधेयभेदापत्तेः तर्ह्यर्थसिद्ध-
तदवतारित्वमितिचेन्न एकोहवैपूर्वं नारायणोदेव इति
प्रसिद्धार्थकहवै पदाभ्यामस्यावाक्यस्यावाक्यांतरप्रसिद्धा-
र्थानुवादकत्वोपपत्तेः नारायणोपनिषदि महोपनिषदि बृहन्ना-
रायणोपनि च नारायण परावतारित्ववचनाश्रुतेश्च यदितुना-
रायणस्यावतारित्वं श्रुत्यभिप्रेतंस्यात् तदातिसृषूपनिषत्सुमध्ये

कस्यामपिरत्वोपनिषदिनारायणस्यावतारि त्वमुक्तंस्यात यदितु-
गोपालतापनीय वाक्यबलेनतदवतारि त्वंस्थाप्यते तदातस्य-
हृत्पद्माज्जातोऽब्जयोनिरिति तन्नाभिजपद्मत्वेन तत्पद्मजातब्रह्म-
त्वेन च लिंगेन लोकभ्रांतत्वपोतत्वलिंगेन च गोपालतापनी-
य नारायणावतारित्व परवाक्यस्य क्षीराब्धिशायिपरत्वोपपत्तेः
ॐ क्षीरार्णवशायिनं नृकेशरिणमिति नृसिंहोपनिषदिस्फुटं
तस्य क्षीराब्धिशायित्व श्रुतेश्च पुराणेपि जगृहेपौरुषं रूपं भग-
वान्महदादिभिः सम्भृतं षोडशकलमादौलोकसि सृक्षया
यस्यांभसिशयानस्य योगनिद्रामुपेयुषः नाभिहृदाम्बुजादासी
द्ब्रह्मालोकपितामहः यस्यावयव संस्थानैः कल्पितोलोक-
विस्तरः एतन्नानावताराणां निधानं बीजमव्यय मित्यत्रय-
स्यावयव संस्थानैरिति जलाशाप्य वयवेषु लोकोतत्व
रूपतत्व स्मरणात्तन्नाभि हृदाम्बुजात्स्फुटं ब्रह्मोत्पत्तिस्म-
रणाच्च वेदपुराणवाक्ययोरेकार्थ्यावगत्यातद्गतनारायणश-
ब्दस्य क्षीराब्धिशायिपरत्वनिश्चयात् आपोनाराइतिप्रोक्ता आपो
वैनरसूनवः अयनंतस्यताः पूर्वंतेननारायणःस्मृत इतितदर्थक-
नारायणशब्दनिरुक्तिपरस्मृतेश्च एषनारायणःसाक्षात्क्षीराब्धि
निकेतनः नागपर्यंकमुत्सृज्येहागतोमथुरांपुरी मितितथैवस्मर-
णाच्चावतारिनारायणस्यक्षीराब्धिशायित्वनिश्चयात्क्षीराब्धि
शायिनस्तु जगृहेपौरूषरुपमादावितिहरिप्रथमावतारत्वोक्त्या-
मुख्यावतारित्वानुपपत्तेः तन्निष्ठावतारित्ववचनस्य नृसिंहादि

निष्ठप्रातीतिक बुद्धिनिरासार्थकत्वेनान्यथासिद्धेर्नतत्रत्यमवता-
रित्ववचनंस्वार्थेमुख्यमित्यवधेयं किंच गोपालोपनिषद्वाक्य-
स्यब्रह्मणोरूपकल्पने त्यादिवाक्यानुसारेण नेतव्याच्चतत्कुतः
तत्रहवैइत्याभ्यांप्रसिद्धानुवादकत्वेनतस्यावतारि ब्रह्मानुवा-
दकत्वोपपत्तेः नचतस्यप्रसिद्धानुवादकत्वेपिनारायणो पनिप-
द्वाक्यश्रुतनारायणानुवादकत्वं स्यादिति वाच्यं तस्यापि क्षीरा-
ब्धिशायित्वोपपत्त्यामुख्यावतारित्वानुपपत्तेः ननुनारायणोपनि-
षदि च क्षीराब्धिशायिलिंगंनोपलभ्यते इतिचेन्न नारायणा-
द्ब्रह्माजायते इतितस्माद्ब्रह्मोत्पत्ते रेवतत्क्षीराब्धिशायित्वलिं-
गत्वावगमात् पुनः अनुवादकवाक्य दृष्टस्यक्षीराब्धिशायि-
लिंगस्य तस्य हृत्पद्माज्जातोब्जयोनिरित्यादेरनुवाद्य वाक्यस्थ
नारायणलिंगत्वोपपत्तेश्चकुतः वाक्यद्वय प्रतिपाद्ययो नारा-
यणयोः शब्दतोर्थतश्चैकत्वावगमात्तारादुपनिषत्प्रतिपाद्यस्य
नारायणस्य कारण वाक्यगतस्योक्तरीत्या क्षीराब्धिशायि-
त्वोपपत्तेः क्षीराब्धिशायिनस्तुहरिप्रथमावतारत्वस्मृत्यामुख्या-
वतारित्वानुपपत्तेः ब्रह्मनारायणयोरेकस्यैवमुख्यावतारित्वोप-
पत्तेश्च ब्रह्मपरवाक्यस्यद्वयादि सहस्रान्त हस्तवदशेषाव-
तारि विषयकत्वेन प्रबलात् नारायण परवाक्यस्य गोपाल-
तापनीयदृष्टस्य नृसिंहतापनीय दृष्टस्य च तदन्यत्र दृष्टस्य
वामनस्याद्यशेषावताराविषयकत्वेनतदल्पविषयत्वेनदुर्बलत्वा-
त्तद्वाक्यदृष्टयोः श्री कृष्णनृसिंहयोरवतारांतरोपलक्षकत्व-

स्वीकारेपि तस्य तस्य नारायणपरवाक्यस्य तदुर्बलत्वोपपत्तेः दुर्बलस्यतु स्वप्रबलवाक्य विरोधेनाप्रमाण्यं प्राप्तस्यैवप्रबला-नुरोधेनैवप्रमाणत्वोपपत्तेः पुनः नारायण परवाक्येहवै इति प्रसिद्धार्थकपदश्रवणेन तस्यकस्य चिदनुवादकत्वावगमात् ब्रह्मपरवाक्ये तादृशपदाश्रुत्यातस्यतदनुपपत्तेश्च गोपालताप-नीय नारायण परवाक्यस्य तस्य नारायणोपनिषद्ब्रह्मना-रायणोपनिषच्छ्रुतनारायणानुवादकत्व स्वीकारेपिन नारायण स्यावतारित्वमुपपद्यते अवतारित्वस्यद्विप्रत्वानुपपत्तेरुक्तरी-त्यानारायणपरवाक्यस्यब्रह्मपर वाक्यतोदुर्बल त्वाच्चकारणवा-क्यस्यविशेष्यस्य ब्रह्मशब्दस्य नारायणादिपदविशेषणात्वा नुपपत्तेश्च परिशेषात्कारण वाक्यस्थ नारायणशब्दस्यैव ब्रह्मपरत्वोपपत्यापि नारायणसहस्रनाम सदृशस्यप्रणवकारण-स्यरामशब्दस्य विरोधेन तस्यनारायणशब्दस्य ब्रह्ममुख्यवाच-कत्वानुपपत्तेश्च श्रीरामतापनीयोपनिषदिप्रणवकारणरामशब्दा-भिहितस्यब्रह्मणः सर्वावतारित्वप्रसिद्धेः सर्वास्वप्युपनिषत्सु-तस्यैवसर्वावतारित्वोपपत्तेश्च सर्वशाखाप्रत्ययन्यायेन सर्वे-पिशकलोपनिषत्कारणपरवाक्यगताःनारायणादयः शब्दाः रामाख्येसर्वावतारिणिब्रह्मणिपर्यवस्यतस्यैवसर्वत्रसर्वावतारि-त्वंद्योतयंतीत्यवगम्यते नन्वेवंचेत्तर्हि पुराणादौनारायणस्य-राघवकारणत्वोक्तेः सर्वोत्कृष्ट रामशब्दस्य सर्वकारणवाचक त्वयोग्याच्च तादृशोरामशब्दोपिं सर्वशाखाप्रत्ययन्यायेन नारा-

यगो पर्यवस्य तस्यैव सर्वोत्कृष्टत्वमुपपादयतीतिवाच्यमिति चेन्न पौराणिक विवादे वैदिकस्य सर्वशाखाप्रत्यय न्यायस्य प्रवृत्त्यनुपपत्तेः वैदिक विवादेतु सर्वोत्कृष्टकारण वाक्यगते रामाख्येपरेब्रह्मण्येवसर्वेषां कारणवाक्यगतानां विशेषशब्दा-नां सर्वशाखाप्रत्यय न्यायेन पर्य्यवसानत्वोपपत्तेश्च पौराणिक नारायण कारणत्वस्यान्यथा सिद्धेसामान्यभूतपशु शब्दस्य विशेषभूतछागशब्द वाच्ये पर्यवसानत्व दर्शनेन सामान्य शब्दानामेव सर्वेषां स्वसमानविशेषशब्दवाच्ये पर्यवसानत्व योग्यात्तथा मूलकारणत्वस्य द्विनिष्ठ त्वानुपपत्त्या तत्पराणा-मपि विशेषशब्दानां कारण वाक्य गतानां स्वोत्कृष्टशब्दा-नुरोधेनसर्वशाखाप्रत्ययन्यायात् तद्वाच्ये पर्यवसानत्वयोग्यत्वे सति सर्वोत्कृष्टत्वेन श्रुतस्यविशेष शब्दस्य कारणत्वेन श्रुतेपि स्वनिकृष्ट शब्दवाच्ये पर्यवसानत्वायोग्यात् तदश्रवणा च्चातः सर्वोत्कृष्टस्य रामशब्दस्य स्ववाच्याभेद दृष्ट्यातत्का-र्यभूत नारायणादि वाचकत्वोपपत्तावपि मुख्ययावृत्त्या नारा-यणादि शब्दानुरोधेनवातस्य तत्तद्वाचकत्वानुपपत्तेः अन्यथा नारायणादि शब्दनिष्ठक्षीराब्धिशय्यादिमुख्यवाचकत्व बाधेन रामशब्दस्यैवतन्मुख्यवाचकत्वोपपत्तेः रामनाम्नैवजगत्कारण-त्वेनोक्तानां क्षीरार्णवशय्यादीनां ख्यातित्वोपपत्त्या नारा-यणादिशब्दानां तद्वाचकत्व निरवकाशत्वोपपत्तेः ननुस्या-त्तर्हि नारायणकारणत्वपर वचन विरोधेन रामनामपरत्व-

स्यान्यथासिद्धिर्ययानिवधिं नारायणस्य कारणत्वमुपपद्येतेति चेन्न भगवन्नाममाहात्म्येऽर्थवादत्वानुपपत्त्या तदन्यथासिद्धे-दुर्वचनत्वात् ननु तथापि[1] वाचकानां मध्ये रामनाम्नः वा-च्यानां मध्ये नारायणस्य सर्वकारणत्वमस्तु वेद पुराणादिषु तथा श्रवणादिति चेन्नैतदप्युपपद्यते भगवन्नामनामिनोस्ता-दात्म्यभाव श्रुतिभिरुभयोरुत्कृष्टत्वस्यापकृष्टत्वस्य वासमान त्वोपपत्तेः ततस्तु मूलकारणत्वस्यद्विनिष्ठत्वानुपपत्त्या राम-नारायण शब्दवाच्ययोरुभयोर्मूलकारणत्वानुपपत्तेः रामनाम महिम्न्यर्थवादत्व वचनाभावेन तदन्यथासिद्धेर्दुरुक्तितया तत्सर्वोत्कृष्टत्वस्य निर्बाधात्तद्विरोधेन तदपकृष्ट नारायणादि शब्दवाच्यस्य तद्वाच्य कारणत्वानुपपत्त्या नारायणादि कार-णत्वस्यैवान्यथा सिद्ध्युपपत्तेस्तदपिकथमितिचेत्कारणवाक्य-गतनारायणशब्दस्यतत्रत्यैः जगदोतत्वप्रोतत्वाव्ययोनित्वादि भिःप्रदर्शितक्षीरार्णवशायिलिंगैः पूर्वोक्तरीत्या क्षीराब्धिशायि परत्वोपपत्तेः क्षीराब्धिशायिनस्तु हरिप्रथमावतारत्वोक्त्या मुख्यावतारित्वानुपपत्तेरसकृदुक्तत्वात् विष्णवाद्यवतारित्वस्य श्रुतिविरोधेन तत्प्रकरणपूर्वापरवचनविरोधेचान्यथासिद्धेर्दर्शि-तत्वाच्च श्रीरामनामतद्वाच्ययोःसर्वोत्कृष्टतायाःसमानत्वश्रवणा-त्तदेकमुख्यावतारित्वोपपत्तेश्च श्रूयतेचतयोःसर्वोत्कृष्ट्यंसमानं रमंतेयोगिनोऽनंतेसत्यानंदे चिदात्मनि इतिरामपदेनासौपरंब्रह्मा

---

१—वाचयवाचकयोः ।

भिधीयतेचिन्मयस्याद्वितीयस्यनिष्कलस्याशरीरिणः उपासकानां कार्यार्थंब्रह्मणोरूपकल्पना ॐ योवैश्रीरामचन्द्रःसभगवानद्वैतप-रंब्रह्मयोब्रह्माविष्णुरीश्वरः येमत्स्यकूर्माद्याः योब्रह्मांडस्यांतर्बहि-र्व्याप्तोतीत्यादि नामिपक्षे नामपक्षेतुब्रह्मादीनांवाचकोयं स्वभू-र्ज्योतिर्मयोऽनंतरूपीस्वेनैवभासते जीवत्वेनदेमोंयस्यसृष्टिस्थि-ति लयस्यच कारणत्वेनचिच्छक्त्यारजः सत्वतमोगुणौ.सर्व-वाच्यस्यवाचकः इत्योमितीति चएतदेवोपास्यमिति ज्ञेयमितिच एतत्तारकंब्रह्मणोनित्यमधीते सपानानंतरति श्रीरामस्यमनुंका-श्यांजजापवृषभध्वजः इत्यादिकंतथैव स्मर्यतेस्मच श्रीरामस्य-कलांशाद्वै अवताराभवंतिहि कोटिकोटिश्चकार्यार्थे सिंधौवी-चीववैमुने इति अस्मत्प्रसादसुमुखः कलपाकलेशइति कलाव-तीर्णौयुवयोर्दिदृक्षुणाइत्युक्तानां कलानामीशः कलेशःइतिनै-तद्यशोरघुपतेः सुरयांचयात्तलीलातनोर्ह्यधिकसाम्यविमुक्तधा-म्न इति नाम पक्षेनामिपक्षेतु सहस्रनामतातुल्यंरामनाम वरा-नने विष्णोर्नाम्नां सहस्राणांतुल्यएषमहामनुः अनंताभगवन्मं-त्रा नानेनतुसमाकृताः विष्णोरेकैकनामैव सर्ववेदाधिकंमतं तादृङ्नामसहस्रैस्तुरामनाम समंमतं जपतः सर्ववेदांश्चसर्वमं-त्राश्चपार्वति तस्मात्कोटिगुणंपुण्यं रामनाम्नैवलभ्यते नाराय-णादिनामानिकीर्तितानिबहून्यपि अत्मातेषांचसर्वेषांरामनाम-प्रकाशक इत्यादि तदेवमत्रवाच्यवाचकयोः सर्वोत्कृष्टत्वसमा-नत्वश्रवणात् रामनाम्नोमहिम्नः भगवन्नामांतरेभ्यः सहस्र-

गुणाधिक्यश्रवणात्तद्बाधकाऽभावाच्चतद्वाच्यस्यश्रुतंस्मृतं च-
सर्वावतारित्वं निर्बाधमुपपद्यतेतन्नामांतराणांतुभगवन्नामांत-
रेभ्यस्तदाधिक्यानुक्तेस्तत्तद्वाच्यानां विश्वादीनांयच्छ्रूयतेरम-
र्यतेवावतारित्वं तस्यरामनाम महात्म्यविशेषेनतत्तदतारविष-
यक मनुष्यत्वमत्स्यत्वनृसिंहत्वादिबुद्धिनिरासार्थकत्वेनान्यथा
सिद्धिर्द्रष्टव्यागोपालतापनीयोपनिषदि श्रुतस्यकृष्णावतारिणो
नारायणस्यनाम्नः स्वावतारभूतकृष्णनाम्नोन्यूनत्वानुपपत्तेस्त
द्विरोधेनश्रीकृष्णनाम्नि सहस्रनामसमत्वविधायकब्रह्मवैवर्त्ता-
दिवचनानामप्रमाण्यं पूर्वमेवदर्शितमितिननामांतर वाच्यस्या-
वतारित्वमुपपद्यते ननुविष्णुनारायणाद्यवतारित्वस्यान्यथासिद्धि
वत्तुल्ययुक्त्या श्रीरामपरावतारित्ववचनमप्यन्यथासिद्धेदितिचे-
न्न श्रीरामस्यसर्वथारघुकुलानुकूलमानुषाचारकारित्वात् आ-
त्मानंमानुषंमन्ये रामंदशरथात्मजमितिस्वविषयक मानुषत्वो-
क्त्यास्वेश्वरत्वाछादिकत्वाच्चशास्त्रकाराणांतत्राप्तमानुषत्व बुद्धि
निवृत्तये तदीश्वरत्व बोधकविष्णुनारायणाद्यवतारत्व विधाय-
कवचनानां जज्ञेविष्णुः सनातनः रामोनारायणः साक्षादि-
त्यादि नामवश्यंवक्त व्यत्वाच्च तन्निष्ठावतारित्वावलंबेन
विष्ण्वादि गतानिष्ट बुद्धिनिवृत्त्यनुपपत्तेः कुतइतिचेत् विष्ण-
वादीनामीश्वरत्व प्रसिद्ध्यातत्रमानुषत्वादि बुद्धेरप्राप्तत्वात्
अप्राप्तस्य निषेधायोग्याच्च तन्निरासार्थकत्वेन श्रीरामनिष्ठाव
तारित्व वचनस्यान्यथा सिद्ध्यानुपपत्तेः नापित्वकारणभेद

दृष्ट्यातद्विषयकमवतारित्व वचनंप्रवृत्त मितिवाच्यं भग-
वदपरिमितिनामाधिकनामधेयस्य श्रीरामस्य स्वनामापकृष्ट-
नाम वाच्यावतारत्वानुपत्तेः नापिकारणवाक्यगत ब्रह्मशब्दा-
भिधेयः कश्चिदन्यस्तत्परत्वेन ब्रह्मणो रूपकल्पनेत्याद्याश्रुतिः
संभावनीयेत्याशंकनीयं सर्वासांश्रीरामोपनिषच्छ्रुतीनां श्रीराम-
परत्वमुद्दिश्यप्रवृत्तेः शास्त्रतात्पर्यनिर्णायकैरुपक्रमोपसंहाराभ्या-
सादि लिंगैस्तत्रत्यब्रह्मशब्दस्य श्रीरामपरत्वनिश्चयाच्च तस्मा-
दनुवाद कान्यथा सिद्धयादि दोषानाक्रांतास्वोपनिषदि पठिता
द्वयादिसहस्रांत हस्तवद्भगवद्विग्रहाणां श्रीरामावतारत्वबोधि
केयं श्रुति रपि श्रीरामस्यसर्वोत्कृष्टत्व विधाने विजयते इति
चिंतनीयं सुमतिभिः तदेवं परोपनिषच्छ्रुतस्य नारायणावतारि
त्व वचनस्यो क्तरीत्यान्यथा सिद्धयुपपत्तेः स्वस्वोपनिषत्सुरामा-
ख्यब्रह्मव्यतिरिक्तस्यावतारित्वा श्रवणात्तदुपबृंहणभूतेतिहास
पुराणादिषु श्रुतमपितदन्य विषयकमवतारित्व वचनंनमुख्य
वृत्त्योपपद्यते यतोऽतस्तद्वेदमूलकत्वेना प्रमाणमिति वक्तव्ये-
पिवेदार्थज्ञ प्रणीतत्वेनांगीकृत्यापि अन्यथानेतव्यं तथाच
कानिचत्कृष्णादि विषयकान्यवतारित्व वचनानि योधत्तेसर्व
भूतानामभवायोशतीस्तनू रित्यादीनि तत्कारणभेद दृष्टया
तत्रप्रयुज्यमानानि तत्रतत्र रुच्युत्पादनार्थकानि कानिचित्
विष्णुनारायण विषयकावतारित्व वचनानि मत्स्यकूर्मवराह
नृसिंह रामकृष्णाद्यवतारत्व वादीनिसंतियानि तानितत्रतत्र-

प्रातीतिक प्राकृतमत्स्यत्व कूर्मत्ववराहत्व नृसिंहत्वमनुष्यत्वादि बुद्धिनिरासार्थकत्वेन सार्थकतयान्यथा सिद्धानि नेमेमत्स्यादयः प्राकृताः किंतु विष्ण्वाद्यवतारत्वेन परमेश्वराइत्येवं इत्थंहि जज्ञे विष्णुः सनातनः रामोनारायणः साक्षादित्याद्युक्तस्य विष्ण्वा- दिकारणत्वस्य तत्तदुपनिषत्सुतथाऽश्रुतस्यावेद मूलकत्वे नान्यथा सिद्ध्युपपत्तेः स्वोपनिषत्प्रतिपादितं श्रीरामाख्य स्य- ब्रह्मणः सर्वावतारित्वंतात्विकं निश्चित्य सएवयस्मिन् कस्मिंश्चिद्विग्रहेस्वयं वासाक्षत्सर्वैः सर्वदोपासनीयस्तस्यैकस्यै- वोपासनया तत्समस्तावतारोपासनासिद्धेः तन्मंत्रैकजपेनैवाशेष भगवन्मंत्र जपोपपत्तेश्चेत्येतदर्थं तन्मंत्रस्यसर्ववाचकत्वप्रका- शयति ब्रह्मादीनां वाचकोयमितिस्फुटयामासास्यार्थं भगवान् गिरिजापतिः जपतःसर्ववेदांश्चसर्वमंत्रांश्च पार्वति तस्मात्कोटि गुणंपुण्यंरामनाम्नैवलभ्यत इति तद्वन्मंत्राश्चवेदाश्चस्कारेषु व्यवस्थिताः इतिचएतदर्थमेवोत्तर तापनीयेप्यस्यमंत्रस्योपास- नापरवाक्ये एवकारेणमंत्रांतरोपासनानां व्यवच्छेदयति एत- देवोपास्यमिति ज्ञेय मितिचेति संक्षेपः १० ननू पासनंनस्वरूपोपासनामात्रेण सिध्यति किंतुमंत्रानुष्ठाने ना- पीत्याशंक्यबहुस्वरूपोपासनानुपत्तिवतबहुमंत्रानुष्ठानानुपपत्ति- मप्याशंक्य समस्तोपास्यकारणे कोपासनयातद्विज्ञानेन च समस्तकार्यस्वरूपोपासना विज्ञानवत अस्यकारणवाचकस्यत- त्कार्यमात्रवाचकत्वो पपत्तेरस्यैकस्यैवजपेनविज्ञानेच सर्वमंत्रा

जनाविज्ञाताश्चतत्तन् मंत्रवाच्याउपासिताश्चस्यु रित्येतदर्थं श्रीराममंत्रस्यसर्वंवाचकत्वंवदन्तज्जपंविधत्ते ब्रह्मादीनांवाचकोयमिति

**ब्रह्मादीनांवाचकोयं मंत्रोन्वर्थादिसंज्ञकः**
**जप्तव्यो मंत्रिणानैनंविनादेवः प्रसीदति।११।**

अयंवक्ष्यमाणः षडक्षरोमंत्रः अन्वर्थादिसंज्ञकः इत्यन्वयः वाचकतया सर्वानर्थान्वाच्यान् अनुगताआदिः सनातनभूतासर्वार्थानुगत्वेपि सर्ववाच्यवाचकत्वेन तन्नामांतर कारणत्वोपपत्त्यासर्वश्रेष्ठारामेतिसंज्ञायस्मिन्सोऽन्वर्थादि संज्ञकः " शेषाद्विभाषेति बहुब्रीहौकः " प्रत्ययः यद्वाअनुगताः सर्वे ब्रह्माद्योऽर्थायस्यां सान्वर्था अन्वर्था चासावादि संज्ञाचयस्मिन्मंत्रे सअन्वर्थादिसंज्ञकः सर्वशब्दवाच्यवाचकत्वश्रुतेः सर्वेषांवीजमक्षयमिति सर्वशब्दवीजत्वस्मृतेश्च तदशेषशब्दकारणत्वावगत्यामृच्छब्दस्यघटादीनामपि वाचकत्ववत्तत्स्यस्वकार्यभूततच्छब्दवाच्या नामपिवाचकत्वोपपत्तेः समस्तवेदतन्मंत्रलयोत्पत्तिस्थानरेफविवरण भूतानन्तभगवन्नामसमप्रणवकारणरामनाम विवरणभूतत्वात्स्वस्याप्यनंत भगवन्मंत्राधिकत्वस्मृत्या सर्वमंत्रकारणत्वोपपत्तेः सर्वकारणभूतरामाख्यब्रह्मवाचकत्वश्रुतेश्चायंमंत्रः सर्वश्रेष्ठत्वेनसर्वैरूपास्यो ज्ञेयश्चेति तथैववक्ष्यति एनदेवोपास्यमितिज्ञेयमितिच श्रीरामनाम्नोस्वस्या

कारणकत्वेना नादित्वं मंत्रांतराप्रकाश्यत्वेन तत्प्रकाशकत्वमनं तद्रूपित्वेनसर्वकारणत्वंच स्वभूर्ज्योतिर्मयोऽनंतरूपी स्वेनैवभासते इत्यत्रश्रूयते रेफारूढामूर्तयस्युः शक्तयस्तिस्रएवचेत्य त्रतस्य मंत्रवाच्याधारत्वंचतेनरामनाम्नो सर्वशब्दानां तद्वाच्यानां-चोत्पत्तिलयस्थानत्वेन ब्रह्मरूपत्वमवलोक्यश्रुतिःस्वकंठतोपि रामपदाक्षराणांब्रह्मरूपत्वं वक्ष्यति ब्रह्मात्मकाः सच्चिदानंदा-ख्याइत्युपासितव्यमिति स्मृतंचपुलहसंहितायां तस्यसर्व-कारणत्वं रकाराज्जायते ब्रह्मारकाराज्जायतेहरिः रकाज्जायते शम्भुः रकारात्सर्वशक्तयः आदावंते तथा मध्येरकारेपुव्यव-स्थितं विश्वं चराचरं सर्वमवकाशेननित्यशः यथैववटबीजस्थः प्राकृतश्चमहाद्रुमः तथैव सर्वे वेदाहि रकारेषुव्यवस्थिताः यथा करंडरत्नानि गुप्तान्यज्ञैर्नदृश्यते तद्वन्मंत्राश्चवेदाश्च रकारेपुव्यवस्थिताः इत्यादिनातथैवपुराणेष्वपिश्रूयते मुख्यत्वा-द्विश्वबीजत्वात्तारकत्वान्महेश्वर त्वदंशैः स्वीकृतंरामचास्मा-भिर्नामैतंत्रिभिःभार्गवोयंपुराभूत्वा स्वीचक्रेनामतंविधि विष्णु-र्दाशरथि भूत्वास्वीकरोत्यधुनाविभो संकर्षणस्ततश्चाहं स्वीक-रिष्यामिशाश्वतं एकमेवत्रिधायातंसृष्टिस्थित्यंतहेतवे इति स्कंदपुराणे श्रीरामंप्रतिशिववचनं पुराणांतरेपि विश्वरूपस्यते राम विश्वेशब्दाहिवाचकाः तथापि रामनामेदं विश्वेषांबीज-मक्षयमिति तत्रषडक्षरस्यसर्वार्थानुगतत्वंस्फुटयति ब्रह्मादीनां वाचकोयमिति ब्रह्मादीनां वाचकः अन्वर्थादिसंज्ञकःइत्यनयोः

परस्परं हेतु हेतुमद्भावोपिबोध्यः अत्रब्रह्मपदंनचतुर्मुखपरंआदि-पदेनतच्छेदस्यसंग्रहत्वायोग्येनतस्य श्रीरामवाचकत्वानुपपत्तेः ब्रह्मादीनामपि वाचक इत्यनुपादानाच्च किंतुपरब्रह्मपरं इति राम.पदेनासौपरंब्रह्माभिधीयते इतितस्यपरतत्व वाचकत्वोपक्रमात् आदिपदंतुरूपस्थानां देवतानां पुंस्त्र्यंगादि कल्पनेत्यादि श्रुत्युक्तानां द्विचतुः षष्ठीदशद्वादश षोडशादि सहस्रांत हस्त-वर्तिशंखचक्राद्यस्त्रोपेतानां विष्णुनारायण वासुदेवनृसिंह कृष्णादि सहस्रशीर्ष पुरुषांतानां भगवत्स्वरूपाणां तथा ब्रह्मादेः संग्रहार्थं तथाच परस्यब्रह्मणः सर्वेषांतदवताराणां च ब्रह्मरुद्रादिदेवतानां चयेवाचकास्तेषा मर्थस्य प्रकाशकत्वेन षड-क्षरस्यतद्वाचकैर्विष्णुनारायण वासुदेव नृसिंह कृष्णादि शब्दैस्तथालौकिक वैदिक शब्दैश्च साम्यंयौगपद्येनोपप-न्नतरं तथाचोक्तं पद्मपुराणे लौकिकाःवैदिकाःशब्दायेकेचित्संतिपार्वति नामानिरामचन्द्रस्यसहस्रंतेषुचाधिकं तादृङ्नामसहस्रैस्तु रामनामसमंमतंविष्णोरेकैक नामैवसर्ववेदाधिकंमतं तादृङ्नामसहस्रैस्तुरामनामसमंमतमिति सहस्रनामतातुल्यं रामनामवरानने इति चहारीतस्मृतावपि विष्णोर्नाम्नां सहस्राणांतुल्यएषमहामनुः अनंताभगवन्मंत्रानानेनतुसमाकृता इति तच्च तस्ययुगपत्तत्साम्य वचनमन्यथाऽनुपपद्यमानं सर्वेषांमंत्राणां तथासर्ववेदानांचपाठात्यत्फलं सतत्फलंकृतषडक्षर-पाठाद्भवतीत्यर्थतः सूचयति तदप्युक्तंतत्रैव जपतः सर्ववेदांश्च

सर्वमंत्राश्चपार्वति तस्मात्कोटिगुणंपुण्यं रामनाम्नैवलभ्यतइति अत्ररामनाम्नः सकृत्पाठोविवक्षितः अन्यथाभगवन्मंत्रांतरस्यापिबहुपाठात् सर्ववेदसर्वमंत्रपाठलब्ध फलप्रदत्वमुपपद्यते आवृत्याएकस्यापिमंत्रस्य बहुमंत्रतुल्यत्वोपपत्तेः तच्चपुराणश्रुततस्याशेषभगवन्मंत्रसाम्यं लौकिक वैदिक शब्दाधिक्यंच तत्तत्पाठफलप्रदत्वंच अन्यथानुपपद्यमाने तस्यसर्वमंत्र सर्ववेद सर्वकारणत्वमुपपाद्यार्थतः सर्वमंत्र सर्वशब्दवाच्य वाचकत्वेपर्यवस्यति तस्यसर्वकारणत्वं स्वभूर्ज्योतिर्मयोनंतरूपीति रेफारूढामूर्त्तयस्युरिति च श्रुतिभ्यांविश्वरूपस्यतेरामविश्वेशब्दाहिवाचकाः तथापिरामनामेदं विश्वेषांबीजमक्षयमिति स्मृत्या चावगम्यते तस्यसर्ववाचकत्वमपिश्रुतिराह ब्रह्मादीनां वाचकोयमित तथा चात्रोपनिषदिमंत्रस्यसर्वपदार्थवाचकत्वंश्रूयते सर्वमंत्रसाम्यं सर्वमंत्रजपफलप्रदत्वंत्वर्थाल्लभ्यते पुराणादौतुतस्य सर्वमंत्रसाम्यं सर्ववेद जपफलप्रदत्वं च स्फुटं श्रूयते सर्ववाच्य वाचकत्वं त्वर्थाल्लभ्यतइति वेदवाक्य पुराणादि वाक्ययोरेकार्थबोधकत्वेन मूलतदुपबृंहणरूपत्व निश्चया त्तदुक्तार्थस्य सप्रमाणत्वेन निर्बाधात् प्रदर्शितवाक्यानां स्वार्थ बोधने प्रमाणांतर निर्पेक्षत्व मप्युपपन्नतरं तस्मात्सर्वमंत्रजपफलप्रदस्यास्य सर्वमंत्राधिक्योक्ति सूचित सर्वकारणत्वेन सर्ववाच्यवाचकत्वोपपत्तेः सर्ववाच्यस्य वाचक इत्यग्रेतथैव श्रवणाच्च षडक्षरस्यैवोपासनेन सर्वेऽवताराः ब्रह्मादयश्चाप्यु

पामिताभवेयुरित्यतः सर्वैरप्युपासकैरयमेव मंत्रराज उपासित-
व्य इतिस्फुटीकरिष्यत्युत्तरतापनीये एतदेवोपास्यमितिज्ञेयमिति
चैषाश्रुतिः अथवारमंतेयोगिन इत्यत्रश्रीरामनाम्नः सच्चिदानंद
परब्रह्मवाचकत्वश्रुतेरनंतस्वरूपवाचकत्वेन मुख्यतोपपत्तेर्मृच्छ-
ब्दस्य घटादीनामपि वाचकत्ववत् तत्स्वरूपावताराणामपि-
वाचकत्व मुपपद्यते तथातस्य सच्चिदानंद पदार्थवाचकत्वात्तु
सच्चिदानंदरूपाणां सर्वेषां भगवत्स्वरूपावताराणामपि वाच-
कत्वं विज्ञाप्यात्रतस्यब्रह्मादीना मपिवाचकत्व ज्ञापनयोक्तं
ब्रह्मादीनां वाचकोयमिति अत्रब्रह्मादीनामित्यस्यानंतरमपेक्षि
तापिशब्दस्यानुक्तिः छंदोभंगभियाइति द्रष्टव्यं यद्यप्यस्यमंत्र-
स्यसामान्यतः सर्ववाचकत्वमात्रमुक्तं नतुतेषां न्यूनाधिक भावो
बोधित स्तथापिरेफारुढामूर्त्तयस्युरित्यत्र ब्रह्मादि वाचकानाम
कारादीनां परब्रह्मवाचकरेफाश्रितत्व श्रवणात् ब्रह्मादीनां पर-
ब्रह्माश्रितत्वं बोधयन्नेवतत्तद्वाचको नतुतेषांतत्तुल्यत्वबोधयन्
अन्यथाब्रह्मरुद्रयोर्वक्ष्यमाणंतारकाश्रयणंनोपपत्स्यति नचमुख्य
त्वाद्विश्व बीजत्वात्तारकत्वात् महेश्वरेत्यादि वाक्यमप्युपप-
त्स्यते एवं मंत्रराजस्योत्कर्षतां निर्दिश्य तस्यजपंविधत्ते जप्तव्य
इति अतोमंत्रिणागुरुतो गृहीतमंत्रोणायमवश्यं जप्तव्यइत्य
पूर्वविधिः विहितस्यास्य जपस्य विपक्षेबाधकदर्शनेनावश्यक-
र्त्तव्यतांद्रढयतिनैनं विमेति एनंमंत्रराजजपं विनादेवोद्योत-
नात्मको रामोनप्रसीदति नस्वात्मानंदर्शयति अथवाननुसंधेयं

जीवानां स्वस्व प्रारब्धकर्मानतिक्रमेणैव सुखदुःखादि प्राप्ति र्भवतीतिशिष्टाः वदन्त्यतः किंमंत्रजपेनेत्याशंक्यकृष्यादि कोलौकिको व्यापारो वैदिकश्च यज्ञाद्यनुष्ठान विधान मन्यथा नुपपद्यमानं प्रारब्धकर्मभ्योपि पुरुषकारस्य प्रबलत्वमुपपादयती त्यभिप्रायेणविपक्षेबाधक प्रदर्शनेन पुरुषकारस्यावश्यककर्त्तव्यतां द्रढयनर्थात्प्रारब्धकर्मातिक्रमेण मंत्रजपरूपपुरुषस्यकारस्य श्रीरामप्रसन्नरूपं फलंज्ञापयतिजप्तव्य इतिनैनंविनेति यत्तुकचित्संहितायांनारायणमंत्रजपेनाहंवः प्रसीदामीतिवचनंश्रूयतेतस्यतत्ररुच्युत्पादकत्व मात्रेणसार्थक्यंबोध्यं मंत्रान्तरेपुतस्योत्कृष्टत्वबोधनमात्रेण वाग्यन्यथानैनंविनादेवःप्रसीदतीति श्रुतिविरोधेनतस्याप्रामाण्यतास्यात् अथविहितस्य मंत्रजपस्यमंत्रार्थानुसंधान पूर्वकत्वात्मंत्रार्थमुपदिशतिक्रियेति ।

**क्रियाकर्मेज्य कर्तॄणामर्थं मंत्रोवदत्यथ ।**
**मननात्त्राणनान्मंत्रःसर्ववाच्यस्यवाचकः॥१२**

क्रियामनोव्यापाररूपा मच्छरीरीरामः एवस्वप्राप्तिरूपायइत्यनुसंधान लक्षणांकर्मचतुर्थी बोध्यंभगवत्कैंकर्यलक्षणां ईज्यःपूज्यः कर्त्ताउक्तक्रियाश्रियः ईज्यत्वप्रतियोगित्वात्तदाराधकः तत्कैंकर्यकारित्वेनतच्छेषभृतः मकारवाच्योजीवः एतेषामर्थंप्रयोजनमभिधेयंवामंत्रोवदति अर्थोभिधेयवस्तु प्रयोजननिवृत्तिष्विति कोषकारः क्रियाकर्मादीनांप्रत्येकःयार्थस्यमन

नाद्यत्त्राणनं तस्मान्मंत्रउच्यतइत्यन्वयः तत्रत्रिंयायाउक्त-
लक्षणाया अर्थस्यप्रयोजनस्यमननात् चिंतनात्स्वप्राप्तेरुपायः
रामइत्यनुसंधानस्य किंफलंभवतीति विचारणादित्यर्थः एवं-
कर्मादिपक्षे पियोऽयं उपायांतरत्यागपूर्वकं भगवदेकोपायतया-
दृढास्थितिर्भवति उपायांतरसंत्यागोनमः शब्दोहिशंततीति
पंचरात्रकर्तृस्मरणात् कर्मणोर्थस्यप्रयोजनस्यतदभिधेयस्यदा-
मननात् अर्थकामादौदेवतांतरपूजनादौचपुरुषार्थत्वबुद्धिनिरा-
सपूर्वकं एकत्रासर्वविधिभगवत्कैंकर्ये पुरुषार्थत्वबुद्धिरुत्पद्यते
तदपिस्मृतंतेनैव चतुर्थीदीयतेचात्रतादर्थ्यैकफलोद्भव अन्ये-
तितनमामेवसंत्यज्यान्यत्प्रयोजनमिति इज्यपदार्थस्यमनना-
त्स्वस्मिन्भगवदेकशेषत्व बुद्धिदाढर्यकृतदेवतांतरे शेषत्व
बुद्धिनिरासेनतच्छेषत्वबुद्धिनिरासः कर्तृपदार्थस्यमननात्स्व-
स्मिन्स्वातंत्र्यबुद्धिविरहपूर्वकं सार्वादिकभगवदेकाराधनतत्प-
रत्वबुद्धिरुत्पद्यते एतदुक्तंभवति क्रियाकर्मेज्यकर्तृणामर्थस्यश्री-
रामएवममोपायः तत्कैंकर्यमेवमम् कर्त्तव्यंसएवममाराध्यःशेषी-
अहंचतदाराधकः शेषःइत्येवंभूतस्यसमन्वितस्य मननात्चिं-
तनात् उपायांतरेकर्त्तव्यांतरेचतथात्वबुद्धिनिरासः देवतांतरे
इज्यत्वबुद्धिनिरासेनस्वशेषित्वबुद्धिविरहः स्वस्मिंश्चस्वातंत्र्य-
बुद्धिर्देवतांतरशेषत्व बुद्धिविरहपूर्वकंभगवदेक शेषत्वबुद्धिश्च
दृढाभवति ततस्तुअनन्योपायत्वेनानन्य प्रयोजनत्वेनान्यशेषत्वे-
नचसर्वथास्वैकनिष्ठंतज्ज्ञानिशिरोमणिं सर्वथात्रायते श्रीरामःइति

मननं गुरूपदेशानंतरं मंत्रार्थस्यानुचिंतनं तस्मात्त्राणान्मुपासं-
कस्य संसारतो रक्षणं तत्कारणान्मंत्र उच्यत इत्यर्थः अन्यथा
त्राणानादित्येवं ब्रूयात् यद्यपि तदर्थानुचिन्तनं विनैवभगव-
न्नामोच्चारण मात्रेणाजामीलादीनां रक्षणं श्रूयते तथापि
त्राणानादित्ये तन्मात्रोक्तौ मन्त्रानुच्चार कस्यापि त्राणं
प्राप्तं विशेषानुक्तेः तद्वारणाय मननादित्युक्तं उपलक्षणं
चैतन्मन्त्रोच्चारणस्यापि मननादुच्चारणाद्वेत्यर्थः अन्यथा
रामेतिद्व्यक्षरोमन्त्रोमन्त्रो यस्तु संस्मरेत् नरो न लिप्यतेपापैः
पद्मपत्रमिवांभसा प्राणप्रयान समयेस्तु नामसकृत्स्मरेत्
सभित्त्वामंडलंभानोः परंपदमवाप्नुयात् द्विजोवा राक्षसोवा-
पियापीवाधार्मिकोपिवा रामरामेतियोवक्ति समुक्तोनात्रसंशयः
इत्यादि वाक्यनांचव्याकोपः स्यात् नच नाममंत्रयोर्भेदाशं-
कातयोर्वीजतद्विवरण रूपेणैक्यात् नापिनाम्न्यर्थवाद आशंक
नीयः तत्रविधि निषेधाश्रवणात्किंतर्हि विधिनिषेधाश्रवणेसति
श्रुतेच्चपदार्थमहत्वेविधिःकल्पनीयः विधेयवस्तुस्तूयते इतिन्या-
यात् मंत्रप्रकरणे तुस्फुटंविधिः श्रूयते जप्तव्योमंत्रिणेति
तत्रैवं सतियद्यपियंमंत्रार्थानु चिंतनपरः यश्चतदुच्चारणमात्र-
परस्तावुभौप्रतिमंत्रस्य रक्षकत्वं प्राप्तं तथापिमंत्रार्थानुसंधान
परस्य देहात्मबुद्धिविरहपूर्वकं स्वस्य भगवच्छेषत्वेन तत्पार
तंत्र्य निश्चयात् भगवदितरशेषत्वेन मद्रक्षणं मच्छेष्यवश्यं
करिष्यतीत्युपायांतरत्यागात् देहसंबंधिषुबंधुत्वबुद्धि विरहेण

परमात्मनिसर्वथानिरूपाधिक वंधुत्वबुद्धिदाढर्याच्चविषयधी
चापल्यविरह पूर्वकं सकलविधभगवत्कैंकर्यैक भोग्यत्वधिया
सर्वदातत्परत्वाच्च जीवतोपिमुक्तिनेतेरस्य सातत्र उक्तहेतूनां
जीवत्यनुद्भवात्किंतु देहावसानेतस्यापिसाभाव्या सर्वधर्मोज्झि-
ताविष्णोर्नाममात्रैकजल्पकाःसुखेनयांगतिंयान्तिनतांसर्वेपिधा-
र्मिकाः रामरामेतियोवक्ति समुक्तो नात्रसंशयः रामरामेति
जनाये जपंतिचसर्वदा तेषांमुक्तिश्च भुक्तिश्च भविष्यति न
संशयः यंयंवापिस्मरन्भावंत्यजत्यंते कलेवरं तंतमेवेतिकौंतेय
सदातद्भावभावितः प्राणप्रयानसमये यस्तुनामसकृत्स्मरेत्
सभित्वामंडलंभानोः परंपदमवाप्नुयादि त्यादि प्रमाण सद्भा-
वादित्युभयत्रविशेषः अथवामननपदं नतदुच्चारणस्योपलक्षणं
क्रियाद्यर्थस्योच्चारण संभवात्तदुच्चारणस्यतु जप्तव्यो मंत्रिणे-
तिपूर्ववाक्ये नैवलाभात्तथा चोपासकेन तदर्थचिंतनपूर्वकं
मंत्रोजप्तव्य इतिमंत्रार्थानु संधानपरस्यदेहादौ एवात्म त्वादि
बुद्ध्यभावेन विषयेषु वैराग्यात्सतिदिनं मंत्रजपादौ रुच्याधि-
क्येनदेहावसानसमयेप्यवश्यं तत्स्मरणभाव्यात्तत्रैव जन्मनि-
निःसंदेहामुक्तिः इतरस्यतु स्वरूपज्ञानाभावेनदेहाद्यासक्त्या-
विषयचापल्यादवश्यं मंत्रजपशैथिल्ये न देहावसान समये
मंत्रोच्चारणावश्यकत्वसंदेहात्तस्मिन् जन्मनिमु [illegible] देहो जन्मां-
तरेतु तस्यापिसाभविष्यति श्रुताचिंत्यमहत्व भगवन्नामप्रभा-
वादित्यवधेयं इदानींषडक्षरस्य मंत्रांतरेभ्य उत्कृष्टत्वंस्फुटयति

सर्ववाच्यस्य वाचक इतिसर्ववाचीतिच्छेदः तथाचराजपुरुष वाक्यवन्नृशब्दतो ब्रह्मादि वाचीसन्नप्यर्थतोस्यचिन्मयेस्मि न्नित्युक्तस्यवाचको मृच्छब्दवत् इतिस्फुटं ब्रह्मादीनां श्रीराम-शेषत्वबोधकत्वाच्चादात्म्येन परब्रह्मवाचकत्वा च्चायंमंत्रः सर्व-श्रेष्ठइत्यर्थः अथवा सर्ववाच्यस्येतिपदं विश्वरूपस्यतेरामविश्वे-शब्दा हिवाचकाः तथापिरामनामेदंविश्वेषां बीजमक्षय मितिस्मृतेः सर्वेषांनाम्नां रामनाम कार्यत्वेनकार्याणां कारणा-नुगामितयास्वकारण वाच्यवाच्यकत्वोपपत्तेः सर्वशब्दवाच्य-स्यापि श्रीरामस्यायंवाचकः इतिवाच्यकांतरेभ्योऽस्यपार्थिक्यो-क्त्यामुख्यत्वंनिर्दिष्टं यत्तादेवस्मृत्वोक्तं विश्वेषांबीजमक्षयमिति अथवास्वरूपतोविश्वरूपत्वस्मृतेः तन्नाम्नश्चविश्वशब्दबीजत्वा क्षयत्वस्मृतेश्च श्रीरामस्यचिद चिच्छरीरित्वेन तत्तद्रूपतोपपत्तेः सर्वावतारित्वेनचसर्वावताररूपत्वोपपत्तेश्च विश्वरूपत्वं तथा तन्नाम्नः साधारण्येन विश्वशब्द जीवत्वस्मृतेः सर्ववेद सर्व-मंत्र जपफलप्रदत्वो क्तेश्च सर्वशब्दकारणभूतप्रणवकारणत्व-श्रुते श्चाशेषाणां भगवन्नाम्नामपिकारणत्वं चोपपद्यते तथा च शरीर वाचकस्यशरीरिणिपर्यवसानत्ववत् चिद चिद्वाच-कानां सर्वेशरीरिणि श्रीरामेपर्यवसानत्वाच्चास्य चिद चिद्वा-चकवाच्यत्वोपपत्तेः सर्वेषामवताराणामवतार्याकृति विशेषत्वे-नतत्तद्वाचका नामपितत्तद्द्वाराऽवतारीवाचक त्वोपपत्ते श्चेत्ये-वमुपपन्नसर्वशब्दवाच्यत्वस्य श्रीरामस्यवाचकोमंत्रः सर्वशब्द

वीजत्वात्सच्चिदानन्दपदार्थवाचकत्वेन स्ववाच्यतादात्म्यगतत्वा-
च्च वाचकांतरेभ्यो ऽस्यपृथगुक्तेश्च सर्वमंत्र श्रेष्ठइत्यर्थः यद्य-
पिभगवत्स्वरूपा वतारेष्व न्यतरस्यापिचिदचिच्छरीरत्वेन तत्त-
द्वाचक वाच्यत्वं भगवत्स्वरूपाणां तत्वत ऐक्यात्तत्तद्वाचक
वाच्यत्वं चोपपद्यते तथापितन्नाम्नः भगवन्नामांतर कारणत्वं-
विशेषतः प्रणवकारणत्वं तत्रापिश्रीरामनामकारणत्वं न
श्रूयते न वास्मर्यते इतिनतस्यसर्ववाच्य वाचकत्वमभिधीयते
तस्यभगन्नामांतरादि कारणत्वानुपपत्तेः अन्यथा सर्वेषांभग-
वत्स्वरूपाणां चिदचिदं तर्यामित्वोपपत्त्यासर्व शब्दवाच्यत्वो-
पपत्त्या तन्नाम्नांसर्व वाच्यवाचकत्वोपपत्तेःसर्ववाच्यवाचक-
इतिविशेषोक्तेः सामान्यत्वापत्त्यावैयर्थ्यापत्तेः एवमेकेनमंत्रार्थं
सामान्यतः सूचयित्वा अथयंत्रस्यपूज्यदेवशरीरत्वसूचनेन
वाह्यपूजोपयोगियंत्रंश्रीरामशरीरत्वेना वश्यंपूजनीयमित्याह-
सोभयस्येति ।

**सोभयस्यास्यदेवस्याविग्रहो यंत्रकल्पना ।**
**विनायंत्रेणचेत्पूजादेवतानप्रसीदतीति ॥ १३**

इति प्रथमोपनिषत् ।

यंत्रकल्पना कल्प्यमानंयंत्रं वक्ष्यमाणयंत्रस्य देवस्य
श्रीरामस्याविग्रहः शरीरमेवकीदृशस्य सोभयस्यउभयेनवाच्येन-
ब्रह्मादिना वाचकेनमंत्रराजेनविशिष्टस्ये त्यर्थःननुसायुधाद्युपे-

तत्रपुष्पैत्रपूजास्तुकिंयंत्रेणेत्यतआह विनायंत्रेणेति चेत्यंत्रेण विनापूजातदादेवता नप्रसीदति न स्वात्मानं दर्शयतीत्यर्थः अत्रसमपदानुपादा नात्देवदेवतयोः पदयोरूपादानाच्च सर्वदेवतायंत्राणां तत्तदेवशरीत्वं तत्तद्यंत्रपूजनं विनातत्तच्छरीरपूजयापिकापिदेवतान प्रसीदतीति ज्ञापि तंभवति दृश्यतेतत्र शास्त्रेतुतत्तद्देवतामंत्रपुरश्चरणे तत्तदेवतायंत्रसहित मेवतत्तद्देवतापूजनेविधानं इतिशब्दः प्रथमोपनिषत्समाप्तार्थः ।

इतिप्रथमोपनिषत् १

द्वितीयोपनिषदारभ्यचतुर्थो पनिषत्समाप्त्यंतंव्यासेन वक्ष्माणयोर्मंत्रार्थयंत्रयोः प्रथमोपनिषदिसमासेन निर्देशइत्यतोमंत्रार्थ विषयकवाक्यमंदर्भमध्येकथंयंत्रविषयक वाक्यपाठ इति नाशंकनीयं अथपूर्वनिर्दिष्टयोः श्रीरामतन्मंत्रयोः सर्वकारणत्वं स्पष्टयितुं रामाभिन्नस्य वह्निवीजस्यार्थं वदन् वीजस्यस्वतः सिद्धत्वेन कारणत्वं प्रणवस्य तत्कार्यत्वनिर्देशेन तस्याशेषवेदमंत्रकारणत्वं च सूचयन् ततः सद्वारकं सृष्ट्यादिकं दर्शयति स्वभूरिति ।

स्वभूर्ज्योतिर्मयोनंतरूपीस्वेनैवभासते ।
जीवत्वेनेदमोंयस्यसृष्टिस्थितिलयस्यच ॥ १४
कारणत्वेनचिच्छक्त्यारजःसत्वतमोगुणैः ।

स्व भूः स्वतः सिद्धः अकारणक इत्यर्थः अनेन श्री-
रामतन्मंत्रयोरन्यकार्यत्व व्युदासःतेन बहूनां मूलकारणत्वा
संभवेनतयोः सर्वकारणत्वमर्थ सिद्धं ज्योतिर्मयः प्रकाश-
मय इति तस्य स्वभिन्न प्रकाशकत्वमर्थंसिद्धं अनंत
रूपीति अनंतअपरिछिन्नंद्विभुजादिमद्रूपंविद्यते यस्यसतथोक्तः
भावुकानां विभिन्न देशस्थानांयुगपत्स्व विग्रहेष्वाविर्भावात्
विश्वव्यापी राघवोयस्तदानीमंतर्दधे इतिराघवस्यैव विश्वव्या-
पित्वश्रुतेश्च अथवाअनंतानि अपरिमितानि रूपाणि विद्यंते
यस्यसतथोक्तः नीलपीतादिपुष्प संनिधानेन नीलपीतादि
रूपेणदृश्यमानवैदूर्यमणिरिवायमपि विलक्षणशक्तिमान्तत्त-
दुपासकभावना रूपेण तत्तद्रूपेणदृश्यतइत्यर्थः चिन्मयस्य
द्वितीयस्य ब्रह्मणोरूपकल्पनेति श्रुतेः योवैमत्स्य कूर्माद्याव-
तारा इत्यादि वक्ष्यमाणचरम मंत्रेभ्यश्च मत्स्य कूर्मवारा-
हादि रूपधारिण मव्ययमिति सनत्कुमारस्मरणाच्च महार्णवे-
शयानोप्सुमांत्वं पूर्वमजीजनः रक्षांविधास्यन्भूतानां विष्णुत्व
मुपजग्मिवान् एकश्रृंगवराहस्त्व मित्यादि महर्षिस्मरणाच्च
तद्वाचकस्यानंतरूपित्वंतुरेफारूढामूर्त्तयस्युःइत्योमितीतियद्भूतं
यच्चभवत्भव्यं च तत्सर्वमोंकार एवेत्यादिश्रुतयः स्फुटयिष्यं-
ति रकाराज्जायते ब्रह्मावीजे यथास्थितोवृक्षः यथाकरण्डेरत्ना-
नि आदावंतेतथामध्ये रकारे सुव्यवस्थितं विश्वचराचरंसर्व
मवकाशेन नित्यशः इत्यादिपुलह संहितावचनेभ्यश्चावगम्यते

नन्वेकरूपधारिणामपि सौर्भय्यादीनां कारणान्तरंश्रूयते ज्योति रूपस्यापि सूर्यादेर्भासकांतरं श्रूयते इत्याशंक्य प्रथमाशंकास्वभूरित्यनेननिरस्तांमत्वाद्वितीयांनिरस्यतिस्वेनैव-भासतेइतिनतस्यप्रकाशकांतरमस्तीतिकृत्वाबहूनांस्वप्रकाशक-त्वानुपपत्ते रतस्यसर्वप्रकाशकत्वमर्थसिद्धंएतदेवाभिप्रेत्योक्तंना-रायणादिनामानि कीर्तितानिबहून्यपि आत्मातेषांतुसर्वेषां राम नाम प्रकाशकः इत्यादिएवंतस्यस्वतः सिद्धत्वं स्वप्रकाशत्वंचो-क्तत्वात व्यतिरिक्तस्यसर्वस्यतत्कार्यत्वं तत्प्रकाश्यत्वं चाहजी-वत्वेनेति यस्यपरमात्मनः श्रीरामस्य जीवत्वेन ॐ ॐ कार प्रभवंइदंकृत्स्नं जगद्भासते इति पूर्वक्रिययैवसंबंधंमंत्रपक्षेतु एवंतस्यस्वतः सिद्धत्वंस्वप्रकाशत्वं चप्रदर्श्यकैमुत्यन्यायेनतस्य-सर्ववेदसर्वमंत्र प्रकाशकत्वज्ञापनाय सर्ववेदमंत्रकारणस्यप्रण-वस्य तत्प्रकाश्यत्वमाह जीवत्वेनेदमोंयस्येतियस्यवह्निवीजस्य-जीवत्वेनस्फोटकत्वेनेदं सर्ववेद सर्वमंत्रात्मकं ॐ कारात्तरं भासते वह्निवीजमेव वर्णविश्लेषादिकारणांतरमोंकार रूपत्व-मापद्यतद्रूपेणभासते नतुवस्तुतः तद्भिन्न ॐ कारोस्तीत्यर्थः इत्योमितीत्युत्तर तापिनीयश्रुतेः रामनाम्नः समुत्पन्नः प्रणवो मोक्षदायक इत्यादिस्मरणाच्चइदानींततः सद्वारकं सृष्ट्यादि-कमाहसृष्टीतिरजः सत्वतमोगुणैर्विशिष्टयाचिच्छक्त्यासृष्टिस्थि-तिलयस्यकारणत्वेन रामोवतिष्ठत इतिक्रियापदमध्याहृत्यान्व-यः भासतइत्यनयैववासंबंधः वाचकपक्षेतु यथैववटवीजस्थ

इतिवीजस्थ चराचरात्मकस्यजगतोलयस्थानत्व श्रवणात्रेफा-
रूढामूर्त्तयस्युरित्यत्रच स्वस्वशक्तिसंहितानां ब्रह्मादीनांजग-
त्कारणानां रेफाश्रितत्वश्रवणाच्च आदावंतेतथामध्येरकारेसु-
व्यवस्थितं विश्वंचराचरं सर्वमवकाशेननित्यशः रकाराज्जाय-
तेब्रह्मेति तथैवस्मरणाच्च रजःसत्वतमोगुणैर्विशिष्टयाचिच्छ-
क्त्याब्रह्मादिरूपया सृष्टिस्थितिलयस्यकारणत्वेन रेफात्मकरत-
त्प्रकृतिकोत्रामंत्रो ऽवतिष्ठतेभासतेवेत्येवंयोजनीयं ननु
विचित्रस्यजगतः सृष्टत्वंपालनत्वं चैकस्यविग्रहवतः संभवतु-
कुलालादीनां घटशरावादेः सृष्टत्वमिवराज्ञोविविधरूपायाप्रजा-
या रक्षणमिवनतुलयस्थानत्वं तस्यसावयत्वेनाल्पपरिमाण-
वतोसंभवति विविधत्वेनवहुत्वेनच वहुपरिमाणवतस्तस्याधा-
रत्वासंभवादित्याशंक्यविलक्षणशक्त्यादिमत्वेनाघटितघटना-
पटीयसीश्वरे तत्रनकिमप्यसंभाव्यं तत्सृष्टयंतर्गताल्पपरिमाण-
वत्यपि महत्परिमाणवत स्थितिश्रवादिति समादधत् श्रीराम-
स्यनह्मवाचकस्यवन्हिवीजस्यचजगत्कारणत्वंस्फुटयति यथैवेति

यथैववटवीजस्थः प्राकृश्च महाद्रुमः ॥१५॥
तथैवरामवीजस्थं जगदेतच्चराचरं।
रेफारूढामूर्त्तयस्युःशक्तयास्तिस्त्र एवचेति १६॥

इति

यथैवप्राकृतो महाद्रुमः वहुफलशाखापत्रादिमान् वृक्षोवट

वीजस्थः तथैवै तच्चराचरं जगतरामवीजस्थं रामरूपंवीजं रामा भिन्नंवीजं वातत्स्थ मित्यर्थः चकारो अश्वत्थादीनां स्वस्व वीजस्थ त्वदृष्टांतानांसमुच्चपार्थः रामाभिन्नं रांवीजं जगदु-पादानं जगदाधारमिति फलितोऽर्थः तदेवं श्रीरामस्य जगत्सृष्टयादि कारणत्वं दर्शितं तथा चात्रयथा कस्मिंश्चि-त्क्षेत्रे आवयति सिंचतिकृतंति चायमस्यक्षेत्रस्य स्वामीत्यपरे-णानि श्रीयते तथैव जगतसृष्टत्वादिव्यापारैरयं जगच्छेषीति निश्चेतव्यत्वेन जगत्परमात्मनो शेषशेषीभावसंबंधलाभा त्कृ-त्स्नं चराचरं जगत् श्रीरामस्यैव शेषभूतं नान्यस्य स्वस्यवेति वीजस्यफलितोऽर्थः ननुनान्यस्य शेषभूतमिति निषेधो नोप-पद्यते ब्रह्मादीनामपि जगत्कारणत्व श्रवणेन तेषामपिशेषि कोटिप्रविष्टत्वा दित्याशंक्य प्रणवस्यवन्हि वीजकार्यत्वदा-ढर्याय तस्यहैवाप्रणवस्यया पूर्वामात्रा पृथिव्यकारः सऋ-ग्भिः ऋग्वेदोब्रह्मावसवो गायत्रीगार्हस्त्यः सासाम्नः प्रथमः पादोभवति द्वितीयांतरिक्षसउकारः सयज्वुभियजुर्वेदो विष्णु रुद्रास्त्रिष्टुब्दक्षिणाग्निः साम्नो द्वितीपादोभवति तृतीयाद्यौ समकारः ससामभिः सामवेदोरुद्राआदित्या जगत्याहवनीयः ससाम्नः तृतीयपादोभवतियावसाने अस्य चतुर्थ्यर्धमात्रा ससोमलोकः ॐकारः साथर्वणैर्मंत्रैरथर्ववेदः संवर्त्तकोग्निर्म-रुतोविरांडेकऋषिर्भासती सासाम्नश्चतुर्थः पाहोभवतीति नृसिंहतापिनीपाद्यासुपनिषत्सु प्रणवावयव भूताकाराद्यक्षर

वाच्यत्वेन श्रुतेषुबहुषुमुख्य भूतानां ब्रह्मादीना मत्रेरफाश्रिता कारादिवाच्यत्वोक्ते रतेषां रेफवाच्य श्रीरामाश्रितत्वोपपत्ते रुपनिषदंतरेषुनृसिंह तापिनीयादिष्वकारादिवाच्यत्वेनदृष्टानांपृथिवी ऋग्वेदादीनामत्रकैमुत्यन्यायेनरे फाश्रितत्वोपपत्तेः परमात्मनोब्रह्माद्युत्पत्ति श्रवणाच्चेतेषां तदाज्ञाकारित्वाच्चते पितच्छेषत्वकोटिप्रविष्टा अतोजगत्कारणत्व श्रवणमात्रेण तेषांशेषित्वंनोपपद्यते इतिसमाधत्तेरेफारूढेतिरेफोरवर्णस्तमारूढा तदुपश्लिष्टावृक्षारूढा वानराबृक्षाश्रितायथातथैवरेफारूढत्वेन तदाश्रिताः मूर्त्तयोब्रह्म विष्णुरुद्ररूपावर्णास्तिस्र अकारद्वयंमकारश्चेति समुदितावीजंस्युर्वीजमित्यध्याहर्तव्यमिति केचित्तन्नोपपद्यतेकुतः रेफारूढेषुरेफाश्रितेषुमूर्त्तिपदवाच्येष्वकाराकारमकारेष्वेववीजत्वापत्तेः रामवीजरथमित्येतावतैववीजस्वरूपवोधाच्च वन्हिवीजस्यविद्वत्प्रसिद्धत्वाच्च वीजावयवाकारादिवाच्यब्रह्मादि जगच्छेषित्वप्राप्तिप्रतिषेधार्थत्वेनरेफारूढाइत्यस्याः श्रुतेःप्रवृत्युपपत्तेश्च यद्यपिरामवीजरथमितिसामान्यतउक्तस्यरेफारूढेतिविशेषोक्तिःवीजस्वरूपदर्शनार्थेति वचनमप्युपपद्यते तथापिवीजनिष्ठजगत्कारणत्ववोधकस्यतस्य सामान्यवचनस्यसाविशेषोक्ति वीजावयवाकारादिवाच्यानांब्रह्मादीनां जगत्स्रष्टत्वादिकमवलंव्यापितेषां वहुत्वेन तद्वारतवशेषित्वानुपपत्त्या त्तेषांमपिरेफाश्रितत्वदर्शनेन रेफावाच्यस्यैकस्यैव ब्रह्मादीनांमप्याश्रयत्ववोधनेन तन्निरूपाधिक-

शेपित्वज्ञापनायसुतरामुपपद्यतेवीजस्वरूपदर्शनार्थत्वेतुरेफारूढा-
मूर्त्तयःस्युःशक्तयरितस्मएवचे त्यस्या रेफश्चकारोमकारश्चवीजं-
स्युः समन्विताइतीदृशःपाठःस्यात् नतुतत्रमूर्त्तिपदपाठः शक्ति-
पदपाठश्चस्या दतस्तस्यावीजस्वरूपवोधनार्थकत्वस्वीकरणं-
नवरं तत्रमूर्त्तिपदग्रहणस्यवैयर्थ्यात् त्रिशक्तिपदग्रहणस्यचा-
त्यंत्यवैयर्थ्यात् सीतारामौतन्मयावत्रपूज्यावि त्यत्रत्येनतच्छव्दे-
नपूर्वपरामृष्टसंपूर्णवीजस्य श्रीरामवाचकत्वोक्तेः रेफारूढाइत्यत्र
केवलरेफस्यश्रीरामपरत्वोक्तेः तदारूढानामकारादीनां ब्रह्मादि
परत्वोक्तेश्च परस्परंविरोधापत्तेश्चवीजविवर्णभूतमंत्रशेषावय-
वस्यनमसः वीजस्थमकार विवरणस्यजीववाचित्ववोध-
कोत्तरश्रुतिविरोधा च्चमंत्रार्थप्रकरणविरोधाच्च मंत्रा-
र्थप्रकरणेवीज प्रत्यक्षरवाच्यानां स्वरूपज्ञानस्य तेषांशेष-
शेषिज्ञानस्यचापेक्षितत्वान्नोपपद्यते त्वदुक्तं किन्त्वस्मदुक्तमेव-
तत्रोक्तदोषानापत्तेः ननुतवपक्षोपिदुष्टः कुरएनस्यनाम्नः पर-
मात्मपरत्वबोधकवाक्यविरोधित्वात् इतिचेन्न अकारेब्रह्मस
साम्न प्रथमपादोभवतीतिनृसिंहोपनिषदि अकाराक्षर सम्भूतो-
सौमित्रिर्विश्वभावनः ॐ मित्येतदक्षरंसर्वमिति रामंतापिनी-
योपनिषदि ॐमित्येकाक्षरंब्रह्मेतिभगवद्गीतायाश्चप्रणवावयवा
कारादीनामनेकार्थकत्वश्रवणवत् रामनामावयवानामप्यने
कार्थवाचकत्वश्रवणात्सर्वरूपिणोब्रह्मणः सर्वशव्दवाच्यत्वेपि
मुख्यभूतस्यतस्य सर्ववाच्यस्यवाचक इत्यत्रसर्वशव्दकारण

रामनाममुख्यवाच्यत्वश्रवणात् सर्वाक्षरकारणरामनामाक्ष
सर्वार्थवाचकत्वेपि मुख्ययावृत्त्यासच्चिदानंदात्मकस
पदार्थवाचकत्वेनतेषांसम्पूर्णपरब्रह्मवाचकत्वोपपत्तेश्चतत्रैवं
यत्रनामावयवभूताकारमकारौ सदानंदवाचकौ रकारश्चि
चकःतत्रत्रयाणामपिरामनामाक्षराणां सच्चिदानंदब्रह्मपर
कृत्स्नस्यनाम्नःब्रह्मपरत्वंउपास्यत्वंज्ञेयत्वंच श्रूयते रमंतेयं
इति ब्रह्मात्मकासच्चिदानंदाख्याइत्युपासितव्यंतदेवोपास्यं
मितत्वसच्चिदाद्यर्थकत्वेनोपास्यत्वंशेषशेषिसंबंधबोधकत्वेन
त्वंच स्मर्यतेच चिद्वाचकोरकारःस्यादिति यत्रतुरेफः ब्रह्म
आकारादयःवर्णाब्रह्मादिपराःतत्राश्रयाश्रितत्वसंबंधेन ब्रह्म
नांजगत्सृष्टयादिकर्तृणांतत् सृष्टस्यसर्वस्यजगतश्चराम
परमात्मशेषत्वंज्ञापयंति रेफारूढामूर्त्तयःस्युःशक्तयस्तिस
त्याद्याउपलक्षणंचैतद्रामपदस्यद्विविधार्थवाचकत्वमर्थांतर
मपि वाक्चकत्वश्रूयते दृष्टंचनामाक्षराणां बह्वर्थवाच
महारामायणादौ अस्याउपनिषदः उपक्रमेचरघुकुलेखिलं
त्याद्यासुतेषांबह्वर्थवाचकत्वंश्रूयते तथाचब्रह्मादयःसर्वेश्च
श्रीरामस्यशेषत्वेन तद्रक्ष्याइतिकृत्वास्वयोगक्षेमचिंतां परि
सच्चिदानंदात्मकब्रह्मवाचकत्वात्रामनाम्निब्रह्मात्मकत्वश्र
च्चवाच्यवाचकयोरभेदमनुसंधाय . वाचकोजप्तव्यःध्यातव्यः
वाच्यइत्येतावतैवस्वार्थसिद्धे ननामाक्षराणामर्थांतरवाचक
काशनंकृतमनयोपनिषदेत्यवधेयं अत्रोत्रेदृशोऽर्थः शक्तित्रय

साहंचर्य्यान्मूर्त्तयइतिपदस्यब्रह्मादिपरत्वावगमात् मूर्त्तयोब्रह्मा-
द्यास्तच्छक्तयश्चरेफारूढातदाधेयभूताबृक्षारूढानां वानराणांवृक्षा
श्रितत्वमिवरेफारूढत्वेनतदाश्रितास्युः संतितन्न्यूनत्वेसतितज्ज-
न्यत्वाच्च रकाराज्जायतेब्रह्मारकाराज्जायतेहरि: राकाराज्जायते
शंभुःरकारात्सर्वशक्तयइतिरेफात्सर्वशक्त्युत्पत्तेः स्मरणात् अत्र-
रेफारूढामूर्त्तयस्युः शक्तयस्तिस्रएवचेत्येतत्चराचरात्मकस्यकृ-
त्स्नस्य जगतो रेफाधेयत्वेउपलक्षणमिति स्मृतिकारवचनादवग-
म्यतेयथाकरंडेरत्नानिगुप्तानीति आदावंतेतथामध्येरकारेसुव्य-
वस्थितं विश्वचराचरंसर्वमित्यादेः तत्रतद्व्यावस्थिति रपितस्मात्त
दुत्पत्तौहेतुः नचात्रहेतुरप्रयोजकइतिवाच्यं विपक्षवाधकस्मृति-
कारवचनसद्भावात् रकाराज्जायतेब्रह्मेति स्मृतिरपिरेफाद्ब्रह्माद्यु-
त्पत्तिं वदन्कृत्स्नस्यजगतस्ततउत्पत्तिंलक्षयति यतःयतश्चज-
गत्प्रधानभूतानांब्रह्मादीनांरेफाधेयत्वश्रवणेनरेफोत्पत्तिस्मरणेनच
तदधस्थस्यसर्वस्यजगतःरेफादुत्पत्तिः, कैमुत्यन्यायेनापिसिध्य-
ति तस्मात्सिद्धंरेफस्यब्रह्मादुत्पत्तिस्थितिलयस्थानत्वेन सर्व-
जगत्कारणत्वंयद्यपि मितरेपीतेवेति मांडूकेप्रणवाकारोकार-
योस्तद्वतमकारलयत्वश्रवणात् जीवत्वेनेदमोंयस्येति तत्ररामं-
नाम्नःप्रणवकारणत्व श्रुतेस्तदवयवभूतस्यमकारस्य प्रणवस्थ
मकारकारणत्वोपपत्तेः प्रणवावयवमकारकारणत्वेनरामनामस्थ
मकारस्य सर्ववागात्माकारो कारकारणत्वेन सर्वकारणत्वोप-
पत्त्या रेफारूढामूर्त्तय इतिश्रुत्यारेफस्य सर्वकारणत्वोपपत्त्या

रकारमकारयोर्द्वयोरपि प्रत्येकं सर्वकारणत्वनिष्पत्तेः रामनाम्नः सर्वोत्कृष्टत्वं जीवत्वेनेदमों यस्येत्यादौश्रूयते अनंताभगवन्मं त्रा जपतः सर्ववेदाश्चेत्यादौ स्मृतं च वेदज्ञैः तथापिनाम प्रत्यक्षरवाच्य निर्णयावसरेमकार वाच्यस्यापिरकार वाच्यसा दृश्यं सर्वकारणत्वप्राप्तं तच्चानिष्टं मूलकारणत्वस्यद्विनिष्ट-त्वानुपपत्ते रितितद्वारणाय रेफारूढामूर्त्तय इत्यनयारेफस्या कारोकारसहिततादृशमकाराधारत्वे तत्कारणत्वं तद्वाच्यस्य तद्वाच्यकारणत्वं च सूचितं भवतीतिबोध्यं किंचात्ररेफः श्री रामब्रह्मपरः तमारूढा अकारदयो ब्रह्मादि विष्णवादिवाचका स्तेनषडक्षरस्य तत्तद्वाचकत्वोपपत्ते इतिरामपदेनासौ परंब्रह्मा-भिधीयते इत्युक्तं ब्रह्मादीनां वाचकोयमित्युक्तिश्चोपपन्नतरा अपरंचरेफाश्रितादि वाच्याब्रह्मदयोरेफवाच्यस्य श्रीरामस्या श्रित्वेन तच्छेषभूताइत्यप्युपपन्नतरं इतिशव्दो द्वितीयोपनिष त्समाप्त्यर्थः। इतिद्वितीयोपनिषत् २

प्रथमोपनिषद्वि हितस्यमंत्रजपस्य मंत्रार्थज्ञानं विनावीर्य वत्त्वाभावात्रि पदश्रीराममंत्रस्य प्रथमपदंरांवीज रूपं द्वितीयोपनिषदिव्याकृतं शिष्टैर्मंत्रार्थं निरूपणे मंत्रगत पदानामन्वयत्रयं प्रदर्श्य प्रथमान्वये जीवस्य स्वरूपं द्वितीये उपायस्वरूपं तृतीयेतूपेयस्वरूपं शोधितं तदत्रापि वीजार्थं निरू पणेन प्रथमान्वयवोध्यं जीवस्य श्रीरामशेषत्वरूपंस्वरूपं शो-धितंभवति अथोपायस्वरूप शोधनार्थं तृतीयोपनिषत्प्रवर्त्तते

तत्रादौ वाच्यवाचकयोः रामरेफयोः तादात्म्यसंबंधं निर्दिश्य कथं सर्वकारणस्यरेफस्यश्रीरामस्य तादात्म्येनवाचकत्व मुपपद्यत इत्याशंक्यचतस्यतत्तादात्म्योपपत्तयेजानकीरामयोरभेदत्व सूचनाय च ताभ्यामष्टारकं चतुर्दश भुवनोत्पत्त्यादिक्रमाह सीतारामाविति ।

**सीतारामौतन्मयावत्र पूज्यौजातान्याभ्यां भुवनानिद्विसप्त। स्थितानिचप्रहृतान्येवतेषु ततो रामोमानवो माययाधात् ॥१७॥**

अत्रास्मिन् वीजे तन्मयौरेफमयौ रेफतादात्म्यापन्नौ सीतारामौपूज्यौज्ञेयौ पूजतिरत्रज्ञानार्थः धातूनामनेकथित्वात् नार्चनार्था अर्चनायरस्य अग्रेवक्ष्यमाणत्वात् अत्रतच्छब्दः स्वव्यवहित पुर्ववर्त्तिनोरेफस्य परामर्शकः केचित्तु रेफारूढामूर्त्तयःस्यु रित्यत्रमूर्त्तयो ब्रह्मविष्णुरुद्ररूपावर्णास्तिस्र अकारउकारं मकारश्चेति समुदिता वीजंस्युर्वीज मित्यध्याहर्त्तव्य मित्येवंव्याख्यायसीतारामौ तन्मया वित्यत्र तन्मयौवीजात्म काविर्त्यैत्र व्याख्यायंते तेप्रष्टव्याः रेफवर्जिता अकारादयोवीजंस्यु स्तत्सहितावा आद्येवीजात्मकौसीता रामावुच्येते चेत्ता दात्वदभिमतवीजस्याकारादिरूपस्याधारभूतो योरफेरतस्यवाच्योवक्तव्यः अस्तिकेषांचिन्मते वीजवाच्यात्मगुणादपिपरंनिर्गुणं ब्रह्मेतिचेन्न स्वभूः स्वेनैवभासते इत्याभ्यांतस्मा

त्परस्य निषेधात् इतिरामपदेनासौपरंब्रह्माभिधीयते इतिराम-पदवाच्यस्यैव परब्रह्मत्व श्रवणाच्च रमंतेयोगिनोनंते सत्यानंदे-चिदात्मनि सत्यंज्ञानमानंदंब्रह्मेत्यनयोः समानार्थकत्वाच्च-ज्ञः कालकालो गुणीनिर्गुणश्चएष आत्मा अपहतपाप्मा वीजरोविमृत्युर्विशोको विजिघित्सोऽपिपासः सत्यकामः सत्य-संकल्प इत्यनपापाप्मत्वदीन हेगुणान् प्रतिषिध्य तत्रैवसत्य कामत्वादि दिव्यगुण विदधत्याश्रुत्याएकस्यैव निर्गुणत्व स गुणत्वोपपादनाच्च परास्यशक्तिर्विविधैव श्रूयतेस्वाभाविकी ज्ञानवल क्रियाचेति ज्ञानादीनांतत्स्वाभाविकगुणत्वश्रवणाच्च द्वितीयपक्षे आधाराधेयभूतानां रेफाकारादीनां परब्रह्मचतुरा-ननादिवाचकानां केवलसीतारामवाचकत्व मुच्यतेचेत्तदा त्वदुक्त्यैवविरोधः रेफः परब्रह्मपरः प्रथमअकारोब्रह्मरूपः द्वितीय अकारो विष्णुरूपः मकारोरुद्ररूपः इत्यनयाशेषत्व कोटिप्रविष्टब्रह्मादिवाचकानां साक्षाच्छेषिवाचक त्वासंभवाच्च विश्वरूपस्यतेराम विश्वेशब्दाहि वाचकाः इतिवदत्रापि वोध्यमितिचेन्न तत्रतुशरीर वाचकानांतच्छरीरिणिपर्यवसानत्व वत् चराचर वाचकानां परंपरयासर्वशरीरिणि श्रीरामेपर्यवसा-नत्व स्वीकारात् नन्वेवं चेत्तदाराजपुरुषवाक्य वदत्रापिवोध्यं राजपुरुषवाक्यं यथाशब्दतः पुरुषप्रधानमप्यर्थतोराज्ञएवप्राधा-न्यंद्योतयतितथा रेफमारूढामूर्त्तयस्तु इत्येतदर्थकं वीजंश-ब्दतः ब्रह्मादिप्रधानमप्यर्थतः परब्रह्म परमेवेति चेत्सत्यं

तथाप्ययंदृष्टांतः विचारतः वीजस्यअर्थतः परब्रह्म परत्वं सूचयन्नपिवाचकत्वेन ब्रह्मादिपरतत्व मेवोपपादयतीतित्वद-भीष्टहानिरेव तद्यथाराजपुरुषवाक्यस्यराजभृत्यस्यैव वाचकत्व मुपपद्यते नतुराज्ञो वाचकत्वं राजपुरुषमानयेत्येवं वक्तव्योपि पुरुषराजा नमानयत्येवमन्वयानुपपत्तेः तथात्वदभीष्टवी-जस्यापि चतुराननादि वाचकत्वमुपपत्स्यते नतुपरब्रह्म-वाचकत्वं रेफारूढामूर्तयउपासनीया इत्येषमन्वयसंभवेपिमूर्त्त्या श्रयोरेफउपासनीयइत्येवमन्वयासंभवात्तत्पुरुषस्य परपदप्रधान-त्वात्तस्मात्तत्रवीजंस्युरि त्यध्याहारोनिरर्थकः रेफारूढामूर्त्तयः स्युरित्यस्यतत्तत्स्वरूपमात्रबोधनपरत्वा तथाचरेफस्यपरब्रह्मपर-त्वेनाकारादीनांब्रह्मादिपरत्वेनसीतारामौतन्मया वत्रपूज्यौ ब्रह्मा-दीनांवाचकोयमित्युभयथोक्तिरुपपन्नतरा किंचप्रकरणांतरेअका-रादीनां सदादिवाचकत्वेन राजपुरुषदृष्टांतेनचस्यात् कृत्स्नस्य-वीजस्य श्रीरामवाचकत्व मर्थतस्तत्परत्वंच अत्रातुमंत्रार्थप्रकरणे सीतारामौतन्मया वत्रपूज्यावित्यत्रसीतारामयोर्नसंपूर्णवीजमय त्वेनज्ञेयत्वमुपपद्यते रेफारूढामूर्त्तयः स्युरि तिब्रह्मादीनामकारा-दिमयत्वज्ञापकश्रुतिविरोधात् बीजप्रधानौतावित्यर्थकत्वेतुवीज-स्यतत्प्रधानत्वेनतयोस्तन्निकृष्टत्वापत्तेः किंतुरेफमयत्वेनैवज्ञेयत्वं रेफारूढामूर्त्तय इतिरेफास्यब्रह्माद्याश्रयत्वतदुपलक्षित सर्वजग-दाश्रयत्वश्रवणात् रकाराज्जायतेब्रह्मारकाराज्जायतेहरिः रका-राज्जायतेशंभुः रकारात्सर्वशक्तयः इति तद्वन्मंत्राश्चवेदाश्चरका-

रेसुव्यवस्थिताः आदावंतेतथामध्येरकारेसुव्यवस्थितं विश्वं-चराचरं सर्वमवकाशेननित्यशः इतितथैवस्मरणाच्च रकारार्थो-राम इतिशिष्टवचनाच्चयदित्वत्रसंपूर्णस्यबीजस्य तद्वाचकत्व-मुच्यते तदातच्छेषभूतब्रह्मादिवाचकत्वानवशेषात् प्रथमा-न्वयेकिमक्षरवाच्यस्यपरमात्मैक्यं परमतेस्वमतेतु परमात्मशेष-त्वमुपपत्स्यते जीववाचिनमोनामेत्युक्तनमः पदवाच्यस्येतिचेन्न नमसोबीज विवरणभूतमंत्रशेषांत्त गतस्यमंत्रशेषगतरामपदेना-न्वयंप्राप्तस्य स्ववाच्यजीवस्य तादर्थ्येन तत्कैंकर्यार्थ तावोधक-त्वस्वीकारात् तथाचमूलेजीववाचकत्वानवशेषेतद्विवरणेपित-द्वाचकत्वानुपपत्तेः विवरणगतस्यनमसोजीव वाचकत्वमन्यथा नुपपद्यमानंमूलगताकारादीनांब्रह्मादिवाचकत्वं तदाश्रयस्यरेफ-स्य विवरणगतरामपदसारूप्यात् बीजविवरणयोरेकार्थकत्वाच्च श्रीरामपरत्वंचोपपाद्यमंत्रशेषइवबीजेपिब्रह्मादीनांश्रीरामशेषत्वमु-पपादयतीत्यस्मिन्प्रकरणे रेफस्यैव सीतारामवाचकत्वमुपपद्यते अतोऽत्ररेफेअकाराश्च आकारश्चमकारश्चेतिपृथक्पृथगेव-पदानिछांदसत्वाद्विभक्तिलोपः रेफारूढाइतिरेफाधारकत्वनिर्देश-स्तुरेफस्याकारादीनां चाधाराधेयसंबंधं प्रकाश्या कारादिवाच्या-नांब्रह्मादीनांरेफवाच्याश्रितत्वप्रदर्शनेनरेफवाच्यशेषत्वं सूचयती त्यलमतिविस्तरेण प्रकृतमनुसरामः ननुरेफस्यवाचकत्वं सीता-रामयोस्तद्वाच्यत्वंवाच्यवाचकयो स्तादात्म्यसंबंधंचयदुक्तंतन्नोपप-द्यतेयतोरेफस्यसर्वकारणत्वंनिर्दिष्टं नतुसीतारामयोरित्याशंक्य-

तयोरपि जगत्कारणत्वमाह जातान्याभ्यामिति आभ्यांसीतारामा-भ्यांद्विसप्तभुवनानि अधस्तनानिसप्तउपरितनानिचसप्तेतिच तुर्दशभुवनानिजातानितथास्थितानिच आभ्यामित्यत्रानयोरिति विभक्तिपरिणामः अथवा स्थितानिपालितानि तथाभ्यांप्रहृता-निविनाशितानि अनेन सीतारामयोर्जन्माद्यस्ययत इति सूत्र-विषयत्वमुक्तंभवति तेषुततइतितेषुसृष्टेषुभुवनेषुततोऽनंतरं राम-आत्मानमधात् प्रावेशय त्तत्सृष्ट्वातदेवानुप्राविशदिति श्रुत्यं तरात् यद्यपि यथाकाशोआधारैरचितेषुघटादिष्वाकाशस्यपूर्व-मेवप्रवेशः नतुघटादिसिद्ध्यनंतरतथैवरामब्रह्माधारैरचितेषुद्विस-प्तभुवनेषुपूर्वमेवरामस्यप्रवेशः नतुसप्तभुवनरचनानं तरंतत्रांत-त्प्रवेशः उपपद्यत्ते तथापिरामस्यसर्वान्तर्यामित्वेन सर्वनियंतृत्व बोधनार्थंतत्रतत्प्रवेशउक्तः अन्तःप्रविष्टःशास्ताजनानामित्यन्त प्रविष्टस्यैवसर्वजननियंतृत्वश्रवणात् अनेनश्रीरामस्यचराचरांतः र्यामिरूपत्वमुक्तंभवति ननुजडांतःप्रविष्टस्यजगत्प्रकाशकत्वं नस्यात् घटांतःप्रविष्टप्रदीपवदित्याशंक्याह मानवइतिमाप्रभात यानवः नूतनअकुंठितप्रकाशशक्तिरित्यर्थः अथवा अमाययेति छेदः अमाययामानवः स्वभावतःमानवः मनुष्याकृतिरित्यर्थः द्विभुजःकुंडली त्युत्तरत्रश्रवणात् अस्मिन्पक्षे नहिदृष्टुर्दृष्टेर्वि-परिलोपोविद्यते इत्यादिश्रुतिमवलंब्योक्ताशंकानिरसनीया तदेव मत्रश्रीरामचन्द्रस्यजगत्सृष्टिस्थितिसंहारकर्तृत्वे नतत्स्वामित्वंत-दंतः प्रवेशेनच तत्सत्तास्फूर्त्तिकारित्वेनक्रियासुप्रवर्त्तकत्वाच्च-

कशेषत्वंचसम्यग्ज्ञात्वास्थितिः संबंधयाथात्म्यज्ञानं नामश्रियः पत्युर्निरुपाधिकशरीरि त्वंस्वस्यनिरूपाधिकशरीरत्वंसम्यग्ज्ञा-त्वास्थितिःसम्बन्धस्यज्ञानंनामश्रिय :पत्युर्निरूपाधिकधर्मित्वंस्व-स्यनिरुपाधिकधर्मत्वं चसम्यग्ज्ञात्वास्थिति :सम्बन्धस्वरूपयाथा-त्म्यज्ञानंनामधर्मिधर्मयोरैक्यं सम्यग्ज्ञात्वास्थितिःऐक्यंनामवि-शिष्टविशेषे सतिसएवसन्स्वयंयथानप्रकाशतेतथास्थितिरिति तत्र-हेतुमाहप्राकगुणेनेतिप्रागुक्तेःनजगत्प्रवेशित्वरूपेणगुणेनतथा-चजगदंतः प्रविष्टस्य तच्छरीरित्वेनतन्नियामकतयातच्छेषित्वं जगतश्चतच्छरीरत्वेन तन्नियम्यतयातच्छेषत्वं शरीरवच्चचिद-चितोः स्वरूपस्थितिप्रवृत्तेः श्रीरामाश्रिततयातदाश्रयस्यपरमा-त्मनोधर्मित्वे तयोस्तदाश्रितत्वेन तद्धर्मत्वेधर्मिधर्मयोश्च गो-गोत्वादिवदभेदोपपत्तेः रैक्यमुपपन्नतरं अत्रनमःपदं सखंडा-खंडभेदेनद्विविधं द्वयोर्नमसोरत्यंतसारूप्यात्तंत्रेणोपादानंतत्रा-खंडनमः पदंद्वितीयान्वयेबीजस्योत्तरमास्थाय जीवोपायंवदति सखंडनमः पदंस्थलत्रयेप्यन्वेति बीजोत्तरं नमसउत्तरं च-तुर्थ्यंतोत्तरं चास्थायेतितस्मिन्नमःपदेमकारः षष्ठ्यंतोजीववाची नेतिप्रतिषेधार्थकः द्वितीयोनमःशब्दस्तूपायवाचीउपायःशर-णागतिः गच्छध्वमेनंशरणंशरण्यंपुरुषर्षभमितिमार्कंडेयोपदिष्ट-शरणपदस्थाने द्रौपद्याःसहितासर्वेनमश्चक्रुर्जनार्दनमितिनमः पदप्रयोगात्साधनांतरसंत्यागोनमःशब्दोहिसंशतीति पंचरात्र-वचनाच्चार्थतोनमः शब्दोपायवाचित्वावगमाच्च इतिशब्दः-

तृतीयोपनिषत्समाप्त्यर्थः

इतितृतीयोपनिषत्तु ३

विनायंत्रेणचेत्पूजादेवतानप्रसीदतीत्य भिहितंप्रथमोप-निषदितत्रकीदृशंयंत्रस्वरूपमिति जिज्ञासायांतन्निरूपणार्थंतु-रीयोपनिषत्प्रवर्त्ततेतत्रादौमंत्रार्था वशिष्ठतृतीयान्वयत्वोध्यमुपये-स्वरूपंचतुर्थ्यर्थमाहजीववाच्चीति

**जीववाचिनमोनामचात्मा रामेतिगीयते ।**
**तादात्मिकाया चतुर्थीतिथाचायेतिकथ्यते ॥१६॥**

अत्रनमःपदोत्तरस्थानेनेत्यव्ययंप्रतिषेधार्थकं मेतिप्रथमां-तोजीववाची ततोविभक्तिलोपश्छांदसः तथाचजीववाचीनमो-नाकिंतुमइत्यन्वयः कृत्स्नोनमः तथानाकिंतुतदंतावयवभूतो मकार इत्यर्थः आत्मातथामकारेणपंचविंशःप्रकीर्तितः इतिस्म-रणात् अत्रवेदस्यपरोक्षवादत्वादेवमुक्तमितिज्ञेयं यद्वाजीववा-चीनमोमः स्यादात्मारामेतिगीयते इतिवक्तव्येपिनमोनामेत्यत्र कथनंकश्चिदाचार्यवानधिकारीविशेषइममर्थंजानातु नतुसर्वो-पिजन इत्येतदर्थंवेदाहिक्वचिदन्यथासंतंपदार्थं विशेषमन्यथा-वदंति तंचतुर्होतारंचतुर्होतेत्याचक्षत इतिवत्तच्चेश्वरस्यापिप्रीति करमिति पुराणवचनादवगम्यते परोक्षवादोवेदोयं परोक्षं-चममप्रियमितिरामेतिप्रातिपदिके नात्मापरमात्मा गीयतेकथ्य-

तद्दत्यर्थः आत्मपदमत्रपरमात्मपरंजीवस्य नमोमकारार्थत्वात् अथरामायेत्यत्र वर्त्तमानायाश्चतुर्थ्या अर्थमाह तादात्मैकेत्युत्त-रार्द्धेनयद्यपि शव्दशास्त्रे तादर्थ्येचतुर्थीश्रूयते नतुतादात्म्ये तथापिवेदस्यस्वतः प्रमाणाच्चात्तत्र यथादृष्टमेव व्याख्यायते तथाचेति तथाचसतिमरामपदयो र्जीवपरमात्मपरत्वेसतिया-चतुर्थी आयेतिकथ्यते रामेतिप्रातिपदिकात्पराउच्चार्यते साता-दात्मिकेत्यन्वयः अत्रापिवेदस्यपरोक्षवादत्वात् तादात्मिके-तिपदं तादर्थ्यार्थकं तस्मैरामायायमात्माजीवः तदात्मातस्य-भावस्तादात्म्यंतंवोधयतीति तादात्मिकायदितुतादर्थिकेतिपाठः स्यात् तदाशव्दशास्त्रस्यागमस्यन्च सम्मतंस्यात् तथाचस्मर्यते ‘षडक्षरोवह्निपूर्वस्तारकस्त्वभिधीयते महापातकिनां पापदहने-दहनोपमः चतुर्थीदीयते चात्रतादर्थ्यैकमलोद्भव अम्येतितेना-मेवसंत्यक्त्यान्यत्प्रयोजन मितितत्रैवनमः शव्दस्योपायवाचकत्व मपिस्मर्यते साधनांतर संत्यागोनमः शव्दोहिसंशति अनेनशरणापत्तिः परमैकांतिनां मतेति साधनांतर संत्याग पूर्वकं भगवदेकोपायतयास्थितिःशरणापत्तिरित्युच्यते यद्यपि आयेतिनचतुर्थी तथापि चतुर्थीसंबंधि विकारत्वाच्चतुर्थीत्युक्तं तदेवं मंत्रस्यार्थः यथा संप्रदायं वर्णितः अत्रोपनिषदि तुक्त-त्सनस्यनमः शव्दस्य जीववाचकत्वंश्रूयते जीववाचिनमोनामे-तित्यतः प्रकारांतरेण मंत्रस्यार्थोवर्ण्यते ।

श्रीरामाख्यंपरं ब्रह्मनत्वा श्रीजानकीधवं ।

रामकंत्रस्य व्याख्यानं करोमि श्रुतिसंमतं ॥१॥
येसंति ब्राह्मणाः लोकेप्रशांतावेदपारगाः।
तेषां ब्रह्मत्व ज्ञानायमंत्रार्थोयं प्रदर्श्यते ॥२॥

परीक्ष्य लोकानकर्म चितान् ब्राह्मणोनिर्वेदमायान नास्त्यकृतेनतद्विज्ञानार्थं सगुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं तस्मैसविद्वानुपसन्नायसम्यक्प्रशांत चित्ताय शमान्विताययेनाक्षरं पुरुषं वेदसत्यं प्रोवाचतांतत्वतोब्रह्मविद्यां इतिश्रुतिः अस्यार्थः परीक्ष्यप्रत्यक्षानुमानागमैः अनित्यतया-परीक्ष्यज्ञात्वासर्वतोयाथात्म्येना वध्यार्थ लोकान्संसारगति-भूतान् अव्य क्ताद्यान्स्थावरांतान्कर्म चितान्धर्माधर्मनिर्मितान् ब्रह्मणोब्रह्मबुभुत्सुः निर्वेदं वैराग्यं आयात्गच्छेत कुर्यादि-त्यर्थः कथंइहसंसारे नास्तिकश्चिदपि अकृतःपदार्थः सर्वएवहिलोकाः कर्मचिताः कर्मकृतत्वाच्चानित्याः ननित्यं-किंचिदस्तीत्यभिप्रायः किं कृतेन कर्मणायासवहुलेन अनर्थ-साधनेन इत्येवंनिर्विण्णः अकृतं नित्यमभयं यदक्षरंपुरुषं तद्विज्ञानार्थं विशेषणाधिगमार्थं सनिर्विण्णोब्राह्मणोगुरुमा-चार्य्यं शमदमादि संपन्नमभिगच्छेत् शास्त्रज्ञोऽपिस्वातंत्र्येण ब्रह्मज्ञानान्वेषणं नकुर्यादित्यर्थः समित्पाणिः समिद्भारगृहीत-हस्तः श्रोत्रियं अध्ययनश्रुतार्थसंपन्नंब्रह्मनिष्ठं सर्वानकर्मादीन् हित्वाकेवलेब्रह्मणि निष्ठायस्यस ब्रह्मनिष्ठः अथवा निर्वेदं

वैराग्यंआयात् गच्छेत्कथं नास्त्यकृतोमोक्षः कृतेनकर्मणा अहंतुमोक्षलक्षणा नित्यफलार्थीतस्मात् किंकर्मणानित्यफले नेतिविरक्तः सन्तद्विज्ञानार्थंतस्यमोक्ष पदार्थस्य ब्रह्मणोक्षरस्य विशेषेणज्ञानार्थं सनिर्विराणोब्राह्मणोगुरुमेवाभिगच्छेत् रिक्तहस्तस्तु नोपेयाद्राजानंदेवतांगुरुमि त्यादिनारिक्तहस्तगमनस्य निषिद्धत्वात् समित्पाणिरित्युक्तं किं लक्षणांगुरुं श्रोत्रियं ब्रह्मनिष्ठं चतत्रश्रोत्रियमित्यनेनाध्ययन हीनस्यगुरुत्वंवार्यते ब्रह्मनिष्ठमित्यनेन श्रोत्रियस्यापिकर्मिणोगुरुत्वंवार्यते कर्मनिंदयाततोविरक्तस्य ब्रह्मविद्याधिकारोक्तेः तमेवंभूतंगुरुंविधिवदुपसन्नः प्रसाद्यपृच्छेत् अक्षरंपुरुषंसत्यं सविद्वानगुरुः तस्मैउपसन्नायोपगताय सम्यक्यथाशास्त्रंप्रशांतचित्ताय उपरतरागादिदोषायशमन्विताय बाह्येंद्रियोपरमेणयुक्तायसर्वतोविरक्तायेत्यर्थः येनविज्ञानेनयया परया विद्ययाअक्षरमविनाशिसत्यंपुरुषंवेदविजानाति तांब्रह्मविद्यां अक्षरविद्यैवब्रह्मविद्यातां तत्त्वतोयथावत्प्रोवाच- प्रब्रूयादित्यर्थेकयं श्रुतिरित्यर्थः श्रोत्रियंब्रह्मनिष्ठमितीयं श्रुतिः श्रोत्रियंब्रह्मनिष्ठंपुरुषब्रह्मविद्यावंतं वदति तच्छिष्यंचनान्यं ब्रह्मविद्ब्रह्मैवभवतीतियदासर्वेप्रमुच्यंतेकामायेऽस्यहृदिस्थिताःअथमर्त्योमृतोभवत्यत्रब्रह्मसमश्नुतेः इत्येवमाद्याः श्रुतयः ब्रह्मविदः सर्वकामरहितस्य ब्रह्मप्राप्तिंवदंति न च वेदाज्ञस्य ब्रह्मज्ञानंभवतीति नावेद विन्मनुतेतं बृहतं इत्येषावदति न ब्रह्मज्ञानं विनामुक्तिर्भवतीतिश्रुतेज्ञानान्नमुक्तिः

इत्येषाश्रुतिर्वदतिनब्रह्मापरोक्षज्ञानं विनासर्वसंशयसर्वकामना-राहित्यपूर्वकं ब्रह्मप्राप्तिर्भवतीति भिद्यते हृदयग्रन्थिश्छिद्यंते सर्वसंशयाः क्षीयंतेचास्य कर्माणि तस्मिन्दृष्टेपरावरे यदासर्वे प्रमुच्यंतेकामा इत्येवमाद्याः श्रुतयोवदन्ति तस्माद्वेदार्थविचा-रेण स्वस्वरूपादिपरोक्षज्ञानिनो ब्रह्मनिष्टयातदपरोक्षज्ञानेन सर्वसंशयसर्वकामनाराहित्यपूर्वकं ब्रह्मप्राप्तिर्भवतीतिसर्व श्रुतीनांतात्पर्योऽवगम्यते तत्रयथा श्रोत्रियस्यवेदार्थ विचार जातस्वस्वरूप परस्वरूप ज्ञानकारितयाब्रह्मनिष्टयासर्वकामना राहित्य पूर्वकजाततदपरोक्षज्ञानेन श्रोत्रियब्रह्मनिष्ठस्य ब्रह्म-प्राप्तिर्भवति यथाचप्रशांत चित्तस्यतच्छिष्यस्य तदुपदिष्ट स्व-स्वरूपपरस्वरूप ज्ञानात्मक ब्रह्मविद्याकारित ब्रह्मनिष्टया सर्ववासना विनाशपूर्वक जाततदपरोक्षज्ञानेन ब्रह्मप्राप्तिर्भव-तितथैवषडक्षरतारकमंत्रार्थ विचार जातस्वस्वरूप परस्वरूप ज्ञानकारितया ब्रह्मनिष्टया सर्वकामनाविनाशपूर्वकजात तद परोक्षज्ञानेनमंत्रार्थ विचारतत्परस्यापि रामाख्यब्रह्मप्राप्तिर्नि-ष्पद्यतेइत्यतोमंत्रार्थ विचारपरत्वेनभवितव्यं मुमुक्षुभिर्वेदार्थ विचारासमर्थैः ननुनावेदविन्मनुतेतंबृहंतमितिश्रुतिर्वेदार्थज्ञानर हितस्य ब्रह्मज्ञानाभावं वदतितद्विरोधेनमंत्रार्थ विचारपरस्यन ब्रह्मज्ञानं समुत्पद्यतेऽतोनतस्य ब्रह्मप्राप्तिरुपपद्यते इतिचे-दुच्यते अत्रवेदार्थविचार जातंस्वस्वरूपादिज्ञानं ब्रह्म-प्राप्तेर्मूलमुक्तंसर्वेषां वेदानांतुकारणमोंकारइति ॐ मित्येत,

दक्षरं सर्वमित्येवमाद्याः श्रुतयोवदंति ततश्चसर्ववेदकारणस्य प्रणवस्यार्थ विज्ञानेनतत्कार्यभूतानांसर्वेषां वेदानामर्थोविज्ञातोभवति इतिकारणविज्ञान कृतकार्य विज्ञान वादिनीभिर्यथासैम्यैकेनमृत्पिंडविज्ञानेनसर्वमृन्मयं विज्ञातंभवती त्येवमादिभिः श्रुति भिरवगम्यते तस्यापिप्रणवस्य कारणं तारकं षडक्षरंभवतीति इत्योमितीति श्रुतिर्वदति तथाहितापनीयोपनिषदि किंतारकंकिंतरतीति भरद्वाजेन पृष्टोयाज्ञवल्क्य आह तारकंदीर्घानलांविंदु पूर्वकंपुनः दीर्घानलंमायनमः इतिषडक्षर तारकस्यस्वरूपमुक्त्वापुनः तस्य ब्रह्मात्मकाः सच्चिदानंदाख्या इत्युपासितव्यं इतिब्रह्मात्मकत्वेनोपासनं विहितंब्रह्मात्मका इत्यनेनअत्रापि ननुकथं जडानांतारकाक्षराणां सच्चिदानंद ब्रह्मात्मकत्वमुपपद्यते इत्याशंक्याह सच्चिदानंदाख्या इति नेमेषडक्षरवर्णा जडस्वरूपाः किंतु सच्चिदानंदाख्याः सच्चिदानंदसंज्ञकाः सच्चिदानंद पदवाच्याः सच्चिदानंदस्व स्वरूपाइत्यर्थः स्वभूर्ज्योतिर्मयोऽनंतरूपीस्वेनैवभासते जीवत्वेनदेमोयस्य सृष्टिस्थिति लयस्यचकारणत्वेन चिच्छक्त्यारजः सत्वतमोगुणैः इतिपूर्वतापनीयश्रुतेश्च एवं तारकस्वरूपमुक्ताऽनंतरंतस्मात्प्रणवोत्पत्तिमाह इत्योमिति तदर्थस्तु इत्युक्तकारकं षडक्षरंतारकमोमित्यों कारोभवति ॐ रूपमापद्यतेनह्येतस्मादोंकारोऽन्य ॐ कारादेतन्यदित्यर्थः ननुकथं त्रिवर्णात्मकस्यप्रणवस्यषड्वर्णात्मककार्यत्वमुपपद्यते इत्याशंक्योंकारस्य

षड्वर्णात्मकत्व मुक्तवान् अकारः प्रथमाक्षरो भवति उकारो द्वितीयाक्षरोभवति मकारस्तृतीयाक्षरोभवति अर्द्धमात्राश्चतुर्थीक्षरोभवति विंदुः पंमाक्षरोभवति नादःषष्ठाक्षरोभवति तारकत्वात्तारकोभवति तदेवं सर्ववेद कारणप्रणवकारणस्य षडक्षरतारकस्यार्थस्य विज्ञानेन प्रणवतत्कार्य भूतसर्ववेदार्थ विज्ञानोपपत्त्या मंत्रार्थज्ञानवतः सर्ववेदवित्त्वनिष्पत्ते र्ननादेद विन्मनुतेतंवृहंतमितिश्रुते र्विरोधोमंत्रार्थज्ञानवतोब्रह्मज्ञानवत्वो उपपद्यते किंच यथैववटवीजस्थः प्राकृतश्चमहाद्रुमः तथैव रामवीजस्थंजगदेतच्चराचरं रेफारूढामूर्त्तयःस्युःशक्तयस्तिस्र एवचइतिरकाराज्जायतेब्रह्मारकाराज्जायते हरिः रकाराज्जायते शंभुरकारात्सर्वशक्तयः वीजेयथास्थितःवृक्षःशाखापल्लवसंयुतः तथैवसर्ववेदाहिरकारेसुव्यवस्थिताः आदावंतेतथामध्येरकारेसुप्रतिष्ठितं विश्वंचराचरंसर्वमवकाशेननित्यशः यथाकरंडे रत्नानिगुप्तान्यज्ञैर्नदृश्यते तद्वन्मंत्राश्चवेदाश्चरकारेसुव्यवस्थिताः रकारमैश्वर्य वीजंमकारस्तेनसंयुतः अवधारणयोगेनरामोयस्मान्मनुःस्मृतः सर्ववेदाश्रयत्वाच्चसर्वलोकस्यकारणात् ईश्वरप्रतिपाद्यत्वादखंडब्रह्मवाचकः इत्येवमादिपुलहसंहितादि वचनेभ्यश्च सर्ववेदसर्वमंत्रसर्वलोकाश्रयत्वेनसर्वकारणस्याखंडब्रह्मवाचकस्य तारकमंत्रादिमाक्षरस्यरकारस्यार्थस्यविज्ञानेन तत्कार्यभूत सर्ववेदार्थ विज्ञानोपपत्त्यापितारकार्थविदः सर्ववेदार्थ वित्वोपपत्ते र्ब्रह्मज्ञानित्व निष्पत्तेर्नोक्त श्रुतिविरोधः उप-

पद्यते किंच सर्वेवेदा यत्पदमामनंति तद्विष्णोः परमंपद मित्ये षाश्रुतिः वेदैश्च सर्वैरहमेवेद्य इतिस्मृतिश्चैकस्यैव परस्य ब्रह्मणः सर्ववेद वेद्यत्वं वदति अतोयः प्राप्यस्य ब्रह्मणः सच्चिदानद स्वरूपं तत्प्राप्त्युपायं च तद्विरोधि स्वरूपंवेद स सर्ववेदार्थवित्त्वेनवक्तव्यः इत्येवं सर्ववेदवेद्यः परब्रह्मतारकादि मान्तरस्यार्थोरित रकारस्तुतद्वाचकः रेफारूढ़ामूर्त्तयः स्युः शक्तयस्तिस्र एवचेति श्रुत्युक्तस्यरेफस्य ब्रह्मविष्णवाद्या श्रयत्वेनपर ब्रह्मवाचकत्वोपपत्तेः पुनःरकाराज्जायतेब्रह्मेति ब्रह्म विष्णवाद्युत्पत्तिस्थितिलयस्थानस्यरेफस्य परब्रह्मस्वरूपत्व- तद्वाचकत्वोपपत्तेश्च सर्ववेदाश्रयत्वाच्च सर्वलोकस्यकारणात् ईश्वरप्रतिपाद्यत्वादखंड ब्रह्मवाचकः इतिस्फुटं रेफस्याखंड ब्रह्मवाचकत्वोक्तेश्च तस्मादशेषवेदवेद्यस्य ब्रह्मणोरेफवाच्यत्वे- नरेफवेदनवेद्यत्व निष्पत्तेः योरेफार्थ वित्सोपिसर्ववेदार्थ विद्भ- वतीति कृत्वायोरेफ विवरणभूतवह्निवीज तद्विवरण भूतषड- क्षरस्यार्थंजानातिससर्ववेदार्थविद्भवतीतिकिंवक्तव्यंकिंचसर्ववेद वेद्यस्यपरब्रह्मणःस्वरूपंयोवेदतस्यशब्दब्रह्मविच्छब्देनचवक्तव्या त्तारकमंत्रस्य स्ववाच्यपरब्रह्मस्वरूप तच्छेषत्वात्मकजीवस्वरूप तत्प्राप्त्युपायस्वरूप तत्फलस्वरूप तद्विरोधिस्वरूपबोधकत्वात् षडक्षरमंत्रार्थज्ञानेन सर्ववेदसारार्थोज्ञातोभवति अतःषडक्षर- निरूपणपराः यारामतापिनीयश्रुतयःब्रह्मादीनांवाचकोऽयं क्रि- याकर्मेज्यकर्तृणा मित्याद्यास्तासां व्याख्याकरणेन षडक्षरमंत्रा-

र्थः स्फुटीक्रियते ब्रह्मादीनामित्यारभ्य रेफारूढामूर्त्तयं इत्यादि श्रुतयस्तासामर्थः रेफः परब्रह्मवाचकः प्रथमाकारो ब्रह्मवाचकः द्वितीयाकारो विष्णुवाचकः अनंतोऽग्न्यासनःसेंदुर्नाशामेकाक्षरोवतु इत्यत्राकारस्य विष्णुवाचकत्वस्मरणात् मकारःशिववाचकः मःशिवश्चन्द्रमावेधा इतिकोशात् तदेवमंत्रस्यब्रह्मादिवाचकत्वं स्फुटमाहश्रुतिः ब्रह्मादीनांवाचकोऽयं मंत्रोऽन्वर्थादिसंज्ञकः जप्तव्योमंत्रिणानैनं विनादेवःप्रसीदति इतिअनुगताः सर्वेअर्थाः ब्रह्मविष्ण्वादयो यस्यांसान्वर्था रामेत्याद्यासंज्ञा सास्ति यस्मिन्मंत्रेसोन्वर्थादिसंज्ञको मंत्रोजप्तव्य इत्यपूर्वविधिः विपक्षेबाधकदर्शनेना वश्यजप्तव्यत्वंज्ञापयति नैनंविनेति एनंमंत्रजपं विनादेवोरामो नप्रसीदति नस्वात्मानं दर्शयति एवंमंत्रंजपंति मंत्रार्थानुसंधानपूर्वकं मंत्रजपस्य कर्त्तव्यत्वान्मंत्रार्थमाह क्रियाकर्मेत्यादिना क्रियाकर्मेज्यकर्तृणामर्थंमंत्रोवदत्यथमननात्त्राणनान्मंत्रःसर्ववाच्यस्यवाचकः तत्र क्रियाममात्मा मच्छरीरित्वेनैहिकामुष्मिकमयोगक्षेमकारी रामएवस्वप्राप्तेरुपायभूतो मेनान्य इत्याकारोबुद्ध्यध्यवसायरूपोव्यापारः कर्मइज्यपदसान्निध्यात् तत्कैंकर्यलक्षणंचतुर्थीबोध्यम् मंत्रजपरूपंच जप्तव्योमंत्रिणेति मंत्रजपस्याप्युक्तत्वा इंज्यः पूज्यः कैंकर्येणमंत्रजपेनचरामःक्षेत्रोस्मिन्योऽर्च्चयद्भक्त्यामंत्रेणानेनमांशिवइतितापनीये स्वमंत्रजपेन स्वर्च्चनायाउक्तेः स्तवैरर्च्चैन्नरः सदेति नामयाठात्मकैः स्तवैर्भगवदर्च्चनायाः स्मर-

णाच्च मंत्रजपस्योपक्रमाच्चकर्त्ताईज्यपदसान्निध्यात्त त्कैंकर्य-
स्यकर्त्ता मंत्रजपोपक्रमात्तन्मंत्रजपकर्त्ता चकैंकर्यकर्तृत्वेनतन्मं-
त्रजपकर्तृत्वेन तदाराधकत्वाच्च तच्छेषभूत: नाकिंचित्कुर्वं
स्तच्छेषत्वमितिन्यायात् तत्कैंकर्यकर्त्तुस्तंमंत्रजपकर्त्तुस्तच्छेषत्वो
पपत्तेः शेषत्वंनामजगत्प्राणायात्मने इत्यग्रतनश्रुतेः जगदात्म-
त्वेन जगद्व्यापको रामस्तेनवहिरंतर्व्याप्तस्य जीवस्य तदपृथक्
सिद्ध्या जीवस्वरूपस्थितिप्रवृत्त्योस्तदधीनतयातदत्यंतपरत्वं
तच्छेषत्वं एतेनजीवस्यश्रीरामानन्यशेषत्वमुपपन्नतरम् कुतः-
रामव्यतिरिक्तजगद्व्यापकाभावेन जगतस्तदन्यव्याप्यत्वासि-
द्ध्या तदन्य परतंत्रस्वरूपत्वाभावेन तदन्यशेषत्वा सि-
द्ध्या श्रीरामानन्यशेषत्वनिष्पत्तेः तच्चेदंश्रीरामशेषत्वमेव जीव
स्यस्वरूपं यद्यपि ज्ञानानंदगुणकं ज्ञानानंदात्मकमेव जीवस्य-
स्वरूप मित्युक्तंमंत्रार्थकर्त्तृभिः तथापिज्ञानानंदगुणकं ज्ञाना-
नंदात्मकत्वमपि पुत्रादि वद्बहिर्मत्वाजीवस्य स्वरूपंभगवच्छेष-
त्वात्मकमेवेति दृढीकृतं दाक्षिणात्याचार्य्यैर्वार्तामालायां
तत्रस्वरूपज्ञानंनामज्ञानानंदादिकवृत्तिम् पुत्रादिवद्बाह्यमिति
मत्वाभगवदनन्यार्हशेषत्वमेव स्वरूपमिति स्थितिः स्वरूपया-
थात्म्यज्ञानं नामभगवदन्यार्हशेषत्वंवहिर्वृत्तिम् पुत्रादिवद्बाह्य-
मितिमत्वा भागवतशेषत्वमेव स्वरूपमिति स्थितिरि ति गी-
ताभाष्यकारेणापितथैवोक्तं ज्ञानी नामइतरस्त्वन्यांप्रकृतिंविद्धि-
मेपराम् जीवभूतामित्यादिना मिहितभगवच्छेषतैकरसात्मस्व-

रूपविदिति नाल्पसंख्यासंख्यातानां पुण्यजन्मनां फलमिदं यन्म च्छेषतैकरसात्मयाथात्म्यज्ञानपूर्वकंमत्प्रपदनमिति च यथार्थं हितत् यतोज्ञानानंदगुणकत्वेसति ज्ञानानंदस्वरूपमितिलक्षणं आत्मपरमात्मोभयसाधारणंशेषत्वं तुजीवमात्रनिष्ठत्वेन जीवमात्रसाधारणम् अतःशेषत्वमेवस्वरूपंजीवस्य तत्रापि चेतनत्वेसतिशेषत्वं जीवत्वमिति लक्षणेचेतनपदस्यनिवेशः प्रकृत्यतिव्याप्तिव्यावृत्यर्थः नतुजीवस्वरूपबोधनार्थः तच्चशेषत्वमीदृशं यथाजलनिधौपतितनांतूलकणानांजलेनवहिरंतर्व्याप्तानां जलरूपेणैवभानंभवति नतुतूलरूपेणतथैव श्रीरामेणवहिरंतर्व्याप्तानांजीवानांस्वरूपेणभानाभावपूर्वकंश्रीरामस्वरूपेणैवयद्भानत्वंतदेवश्रीरामशेषत्वं जीवस्यस्वरूपमुच्यते तत्रज्ञानानंदस्वरूपस्यापि वहिरंतः श्रीरामव्याप्त्या श्रीरामस्वरूपत्वेनभानत्वोपपत्त्या श्रीरामशेषत्वोपपत्तेः एतेनजीवपरमात्मशेषशेषीसंबंधः उपपन्नतरः संबंधस्वरूपज्ञानमप्युक्तंवैष्णवाचार्यैः संबंधस्वरूपज्ञानं नामचतुर्विधं संबंधज्ञानम्संबंधयाथात्म्यज्ञानं संबंधस्वरूपज्ञानम् संबंधस्वरूपयाथात्म्यज्ञानं तत्रसंबंधज्ञानं नाम श्रियःपत्युर्निरुपाधिकशेषित्वं स्वस्यनिरुपाधिकशेषत्वं चसम्यक् ज्ञात्वास्थितिः संबंधयाथात्म्यज्ञानं नामश्रियःपत्युर्निरुपाधिकशरीरित्वं स्वस्यनिरुपाधिकशरीरत्वं ज्ञात्वास्थितिः संबंधस्वरूपज्ञानंनामश्रियःपत्युर्निरुपाधिकधर्मित्वंस्वस्यनिरुपाधिकधर्मत्वंसम्यक्ज्ञात्वा स्थितिः संबंधस्वरूपयाथात्म्यज्ञानं नामधर्मिधर्मयो-

रैक्यंसम्यक्ज्ञात्वास्थितिः ऐक्यंनामविशिष्टविशेषेसतिसएवस-
न्स्वयंयथानप्रकाशते तथाचस्थितिरिति क्रियाकर्मेऽस्य कर्तृणामी-
दृशमर्थं मंत्रोवदति तस्येदृशस्यार्थस्य मननात्ईदृशमंत्रार्थं
मननपूर्वकंमंत्राजपादित्यर्थः मंत्रजपमुपक्रम्य मंत्रार्थस्योक्तत्वात्
मंत्रवाच्य श्रीरामकर्तृकं यन्मंत्रजपकर्तुस्त्राणंपालनं संसारा-
द्रक्षणं तस्मान्मंत्रउच्यते मंतारंत्रायतेइतिमंत्रः इतितन्निरुक्तेः
कथंभूतोमंत्रः सर्ववाच्यस्यवाचकः सर्वशब्दवाच्यस्य श्रीरामस्य-
वाचकः अशेषचिदचिच्छरीरि सच्चिदानंद श्रीरामस्वरूप
साक्षाद्वाचकत्वेन रामाख्यपरब्रह्ममुख्यवाचक इत्यर्थः ननु-
सर्ववाच्यस्येति श्रुत्यासर्वेषां शब्दानां श्रीरामवाचकत्वोक्तेः
राममंत्रस्यापिसर्वशब्दांतर्गतत्वेन तद्वाचकत्वोपपत्तेः पुनः केन-
विशेषणसर्वेभ्यःशब्देभ्यः पृथक्कृत्यराममंत्रस्यतद्वाचकत्वमुक्तम्
सर्ववाच्यस्यवाचक इतिश्रुत्यायं विशेषमाश्रित्यत्वयापितत्स्वरू-
पवाचकत्वेन तन्मुख्यवाचकत्व मुक्तमितिचेदुच्यते यथाशरीर
वाचकाः शब्दास्तच्छरीरिणिप्रत्यगात्मनि जीवेपर्यवस्यतद्वा-
चकाः भवंति अन्यथाशरीरं त्यक्त्वा पित्रादिलोकंगतानां-
जीवानांत्यक्तशरीरनाम्ना पिंडोदकप्रदानानुपपत्तेः तथैववि-
श्वरूपस्यते रामसर्वे शब्दाहिवाचकाः इतिस्मृतेश्चचिदचिद्वा-
चकाः सर्वेशब्दाचिदचिद्द्वारा चिदचिच्छरीरिणि श्रीरामेपर्यवस्य
चिदचिदंतर्यामिणोरामस्य वाचकाभवंति न तु सच्चिदानंद
स्वरूपंवदंति तथाविष्णुनारायणवासुदेवहर्यादयो पियेभगव-

द्वाचकाः शब्दास्तेपि सर्वव्यापकत्वक्षीराब्धिनिवासित्व सर्वतत्वायनकरणत्व सर्वउपायत्वोपेयत्व सर्वभूतनिवासित्व भक्तदुःखहरत्व प्रकृतिजीवाधारत्वादि गुणकर्मद्वारैवतस्मिन्पर्यवस्य तस्यवाचकाभवंति नत्वपरिछिन्नचिदात्मकं तत्स्वरूपंवदंती त्येतत्सर्वसम्यगुपपादितमस्माभिः श्रीरामतापनीयमध्यभाष्ये तत्तत्रैवद्रष्टव्यं श्रीरामनामतुसच्चिदानंदं तत्स्वरूपंसाक्षाद्वदतीत्याह श्रीरामतापनीयाश्रुतिः रमंतेयोगिनोनंतेसत्यानंदेचिदात्मनि इतिरामपदेनासौ परंब्रह्माभिधीयते इत्येषाषडक्षरस्य श्रीराममंत्रस्यादिममक्षरं वह्निवीजंस्वप्रकाशज्योतिर्मयपरब्रह्मस्वरूपभूतमस्ति सर्ववेदकारणभूतप्रणवकारणंचास्ति जगत्सृष्ट्यादेश्च कारणमस्तीत्याह द्वितीयाश्रुतिः स्वभुज्योतिमयोऽनंतरूपीस्वेनैवभासते जीवत्वेनेदमोंयस्यसृष्टिस्थिति लयस्यच कारणत्वेनचिच्छक्त्यारजःसत्वतमोगुणैः इत्येषातथैवाह श्रीरामोपनिषच्छ्रुतिः स्वप्रकाशःपरंज्योतिः स्वानुभूत्यैकचिन्मयः तदेवरामचन्द्रस्यमनोराद्याक्षरंस्मृतम् इत्येषामंत्रस्यषडपिवर्णा ब्रह्मात्मकाःसच्चिदानंदाख्यासंतीत्याह रामतापनीयाश्रुतिः ब्रह्मात्मकाः सच्चिदानंदाख्याइत्युपासितव्यम् इत्येषा सएवंमंत्रः प्रणवरूपोभवतीत्याहश्रुतिः इत्योमितिइत्येषा इत्युक्तप्रकारकः षडक्षर ॐ मितिभवति ॐकाररूपमापद्यते इत्यर्थः रेफोवह्निवीजं च रामनामचषडक्षरश्चमंत्रः इतीमेसच्चिदानन्दब्रह्मस्वरूपं साक्षाद्वदंति ब्रह्मस्वरूपभूताश्चसंतीति

रेफारूढामूर्त्तयःस्युःशक्तयस्तिस्रएवच इतिस्वभूर्ज्योतिर्मयोऽनंत रूपीस्वेनैवभासते जीवत्वेनेदमोयस्यसृष्टिस्थितिलयस्यच कारणत्वेनचिच्छक्त्यारजःसत्वतमोगुणैः इतिचरमंतेजोगिनोऽनंतेसत्यानंदेचिदात्मनि इतिरामपदेनासौपरब्रह्माभिधीयते इति चब्रह्मात्मकाः सच्चिदानंदाख्याइत्युपासितव्यं इत्येमादिभिः-श्रुतिभिरवगम्यते तेनयथास्वरूगाश्रितेभ्योव्यापकत्वादिगुणकर्मभ्यः कोटिगुणाधिकंभवति अपरिछिन्नचिदात्मकं ब्रह्मस्वरूपं तथैवव्यापकत्वाद्यर्थकेभ्यो तत्तद्गुणकर्मद्वाराभगवद्वाचकेभ्योविष्णवादिनामभ्यः सच्चिदानंदतत्स्वरूपवाचकस्य तत्वरूपभूतस्य चरामनाम्नः षडक्षरश्रीरामतारकमंत्रस्य चकोटिगुणाधिक्योपपत्तेः स्वरूपतः फलतश्चविष्णवादिनामभ्यः तन्मंत्रेभ्यश्चराममंत्रस्यरामनाम्नश्चकोटिगुणाधिक्यमुपपादितं व्यासादिभिः विष्णोरेकैकनामैव सर्ववेदाधिकं मतम् तादृङ्नामसहस्रैस्तुरामनामसमंमतं जपतः सर्ववेदाश्च सर्वमंत्राँश्चपार्वति तस्मात्कोटिगुणं पुण्यं रामनाम्नैयलभ्यत इतिव्यासेनोक्तं पद्मपुराणे अगस्त्येनापि सर्वेषुमंत्रवर्गेषु श्रेष्ठंवैष्णवमुच्यते गाणपत्येषुशैवेषुशाक्त शौरेष्वभीष्टदम् वैष्णवेष्वपि मंत्रेषु राममंत्राः फलाधिकाः गाणपत्यादि मंत्रेषु कोटि कोटिगुणाधिकाः मंत्रस्तेष्वप्यनास फलदोयंषडक्षरः शांतः प्रसन्नोवरदोह्यक्रोधोभक्तवत्सलः अनेनसदृशोमंत्रो जगत्स्वपि नविद्यते इतिसर्वमंत्रेभ्योऽस्याधिक्यमुक्तं हारितेनापि श्रीरामायनमो-

ह्येतत्तारकंब्रह्मनामकं नाम्नांविष्णोः सहस्राणां तुल्यएषमहा-
मनुः अनंताभगवन्मंत्रा नानेतुसमाकृताः श्रियोरमण साम-
र्थ्यात् सौंदर्य्यगुण सागरात् इत्येवमुक्तं नन्वत्रानंतानामपरि-
मितानामशेषा नामपिभगवन्मंत्राणां श्रीराममंत्रसमत्व निषेधे
तच्छ्रीरमण सामर्थ्यं तत्सौंदर्यगुणसागरत्वं चहेतुरुक्तो हारीते-
नतत्किंमन्येषु विष्णुनारायण वासुदेव हरिकृष्णादिषुतादृशं
श्रीरमणं सामर्थ्यंसौंदर्य गुणसागरत्वंनास्ति येनराममंत्र सम-
त्वंतत्तन्मंत्राणां निषेधितमिति चेदुच्यते यथा श्रीरामस्यपूर्वा-
ह्ने पौरकार्याणि कृत्वासर्वाणिपूर्ववत् शेषंदिवसभागार्द्धमंत.पुर
गतोनयत् एवंतयोर्विहरतोःसीताराघवयो श्चिरम् दशवर्षसह-
स्राणि व्यतीयुः सुमहात्मनोः इत्येवंगृहवनाशोकवाटिकादिष्व
हन्यहन्येकादशसहस्रवर्षपर्य्यंतं श्रीजानकीरमयितृत्वं श्रूयतेन
तथान्येषां कुत्रापिश्रीरमयितृत्वंश्रूयते नचोपपद्यते श्रीकृष्णस्य
त्वल्पकालंराधादिगोपीरमयितृत्वं श्रूयते नतुश्रीरुक्मिणीरम-
यितृत्वं अतःश्रीरमणसामर्थ्यं रामएवोपपद्यते नत्वन्यत्रकिंच
तत्तन्नामनिरुक्त्यापि श्रीरमयितृत्वं रामस्यैवोपपद्यतेनत्वन्यस्य
तथाहि श्रीरमंते यत्रसश्रीरामःअधिकरणेघञ् श्रियंरमयतीति
श्रीरामःरामोरमयतांवर इतिवाल्मीकिवचनेनुकूलेयं निरुक्तिः
इतिनिरुक्तोरामशब्दः स्पष्टंरामस्यश्रीरमयितृत्वं बोधयतिनतु
नारायणादिनाम्नां निरुक्त्याकस्यापि श्रीरमणत्वमुपपद्यतेत-
थाहिश्रियः शोभमानाःनाराः अयनंयस्य सश्रीनारायणः

शोभनानि तत्वानिवाश्रयनंयस्य सश्रीनारायणः श्रियंवेवेष्टीति श्रीविष्णुः श्रियांवसतिश्रियंवसयतीतिवाश्रीवासुः सचासौदेव-श्चश्रीवासुदेवः श्रियंहरतीति श्रीहरिः श्रियंकर्षयतीतिश्रीकृष्णः इतीनाव्युत्पत्तयस्तुनोपपद्यंते नचनारायणादीनां श्रीरमयितृत्वं वोधयंतिकिंतुदेवपूजकोब्राह्मणः देवब्राह्मणइतिवत् श्रीसहितो नारायणः श्रीनारायणः श्रीसहितोविष्णुः श्रीबिष्णुः श्रीसहितो वासुदेवःश्रीवासुदेवःश्रीसहितोहरिः श्रीहरिःश्रीविशिष्टःकृष्णः श्रीकृष्णः एवंनामांतरेष्वपिज्ञेयं ईदृशीव्युत्पत्तिरुपपद्यते अनया-पिनिरुक्त्या नारायणादीनां श्रीरमयितृत्वंनोपपद्यते किंतुश्री-विशिष्टत्वमेवेति नकथंचिद्भगवन्नामांतरंस्ववाच्यस्य श्रीरम-यितृत्ववोधनेशक्तम् सौंदर्यगुणसागरत्वं तुरामस्य रूपंसंहननं लक्ष्मींसौकुमार्य्यंसुवेषतां ददृशुर्विस्मिताकारारामस्यवनवा-सिनः रूपौदार्यगुणैः पुंसांदृष्टिचित्तापहारकम् इत्येवमादिवा-ल्मीकीवचनात् पुरामहर्षयः सर्वेदंडकारण्यवासिनः दृष्ट्वारामं-हरितत्र भोक्तुमैच्छन्सुविग्रहम् इतिव्यासवचनादवगम्यते श्री-रामसौंदर्यस्याधिक्यं दंडकारण्यमहर्षिगणमोहकत्वादवगम्यते यथानतथातदन्यसौंदर्यस्यपुंसां तत्रापितपस्विनां मोहकत्वे-कुत्रापि किंचित्प्रमाणमुपलभ्यते सर्वगुणसागरत्वं तुरामस्य सचसर्वगुणोपेतः कौशिल्यानंदवर्द्धनः इत्येवमादिभ्योवाल्मी-किवचनेभ्यो ऽवगम्यते तस्माद्रामादन्यस्य श्रीरमयितृत्वसौं-दर्यगुणसागरत्वा श्रवणात्तदनुपपत्तेश्च तदन्यमंत्राणां राममं-

त्रसमत्वंप्रतिषेधितं हारितेन तथापद्मपुराणेव्यासेन रामनाम्न-
स्तदात्मकस्यषडक्षरमंत्रस्य च विष्णवादिनामभ्य: अनेक-
सहस्रगुणाधिक्योक्त्या सर्ववेदसर्वमंत्र जपफलाच्च रामनाम
जपफलस्य कोटिगुणाधिकोक्त्याच्च राममंत्राद्विष्णवादि
मंत्राणा मसमत्वं बोधितंभवति "विष्णोरेकैकनामैव
सर्ववेदाधिकंमतं। तादृङ्नामसहस्रैस्तुरामनामसमंमतम्॥ जपनः
सर्ववेदांश्च सर्वमंत्रांश्चपार्वति। तस्मात्कोटिगुणांपुण्यं रामनाम्नै
वलभ्यते"॥ अगस्त्येनापि राममंत्रसमत्वं मंत्रांतराणांप्रतिषेधि-
तम् "शांतः प्रसन्नोवरदोह्यक्रोधो भक्तवत्सलः। अनेनसदृशो
मंत्रो जगत्स्वपिनविद्यते॥"इतिस्कंदपुराणे शिवेनषडक्षरं विहा
यभगवद्भिन्नदेवतान्तर मंत्रावलंबिनांमूर्खत्वमुक्तम् "अचिंत्यो
ऽयं महाबाहो मंत्रश्चिन्तामणिर्विभो। विहायैनंविमूढात्मा इत
श्चेतश्चधावति" इतितथैव रामतापनीयाश्रुति रपिगर्भजन्म-
जरामरण संसारमहद्भयाद्यस्मात्तारयति तस्मादुच्यते तारक-
मित्येषातारकस्य गर्भजन्मादिभ्यस्तारकत्वे न तारकमित्यन्वर्थां
संज्ञांप्रकाश्य सर्वेषां भगवन्मंत्राणां संसारनिवृत्ति पूर्वक मोक्ष
प्रदानसामर्थ्य समत्वेप्यस्यमंत्रस्यझटिति संसारनाशशक्तिस्ते-
भ्योधिकेति सूचितं श्रुतिस्मृतिषुच यथाषडक्षरस्यतारकब्रह्मेति
संज्ञाश्रूयते तथान्यमंत्राणां न श्रूयते केषांचित्तुतारेतितारकेति
मात्रसंज्ञाश्रवणात् यतः षडक्षरतारकादन्येमंत्राः नैवंविधा
अतोऽन्यमंत्रनिचयं विहायश्रीरामप्राप्तिकामैः तदेवत्तारकमु-

पास्यं ज्ञेयंचेत्याह द्वितीयारामतापिनीयाश्रुतिः एतदेवोपास्य-
मितिज्ञेयमितिचेत्येषा अत्रएवकारेण तारकादन्यस्योपास्यत्वं
ज्ञेयत्वं च व्यवच्छिनत्ति इतिवाक्यद्वयेनतारके उपास्यत्वं ज्ञेयत्वं
चपरिसमापयतिश्रुतिः एवंमंत्रार्थोऽपिकृत्स्नःउपनिषदंतरश्रुतिभिः
कस्यापिमंत्रस्यनोक्तः येनस्मृतयस्तदुक्तार्थंवदंतु अतः स्मृति-
दृष्टोपिमंत्रस्यार्थः श्रुत्यमूलकत्वेन न प्रमाणत्वमेति श्रीराम-
तापनीयश्रुतिभिस्तु कृत्स्नोपि राममंत्रस्यार्थः उक्तःक्रियाकर्मे
ज्यकर्तॄणामर्थंमंत्रोवदत्यथ मननात्त्राणनान्मंत्रः सर्ववाच्यस्य
वाचकः स्वभूर्ज्योतिर्मयोऽनंतरूपीस्वेनैवभासते जीवत्वेनेदमों-
यस्यसृष्टिस्थितिलयस्य च कारणत्वेन चिच्छक्त्यरजःसत्वत-
मोगुणैः 'यथैववटवीजस्थः प्राकृतश्चमहाद्रुमः । तथैवरामवीज-
स्थंजगदेतच्चराचरं' रेफारूढामूर्त्तयः स्युःशक्तयस्तिस्रएवचेति
इत्याद्याभिः तत्रसर्वेषामेवमंत्राणामेषः साधारणः क्रमःइत्येषा-
श्रुतिर्यएषोराममंत्रार्थस्यतद्वीजादिन्यासस्यचक्रमःससर्वेषांमंत्रा
णांसाधारणः क्रमः इत्यर्थिकायेन क्रमेणयोराममंत्रस्यार्थो
उक्तस्तेन क्रमेणसएवसर्वेषां मंत्राणामर्थोज्ञेयः इत्येतदर्थज्ञाप-
नेनयथासौम्येकेनमृत्पिंडज्ञानेन सर्वंमृण्मयंविज्ञातंभवति इति
श्रुतिः कारणविज्ञानेन तत्कार्यमात्रस्य विज्ञानंभवतीति वोध-
यति तथैवषडक्षरतारकार्थविज्ञानेन सर्वेषां मंत्राणा मर्थस्य
विज्ञानंभवतित्यर्थबोधनेन षडक्षरस्यसर्व मंत्रकारणत्वं-
ज्ञापयति अतएव एतदेवोपास्यमिति चैषाश्रुतिः

मंत्रांतराणामुपास्यत्वंज्ञेयत्वं चैवकारेणव्यवच्छिद्यास्मिन्नेवमंत्रो उपास्यत्वंज्ञेयत्वंपरिस्थापयति अत्रमंत्रेक्रियापदमनन्योपायत्वं वदतिकर्मपदमनन्यभोग्यत्वं वदतिइज्यकर्मकर्तृपदमनन्यशेषत्वं वदतितेनाकारत्रयसंपन्नत्वंमंत्रजपकर्तुर्ज्ञापितंभवति किंचात्रे ज्यपदेनसर्वजीवस्वामित्वशेषित्वरूपं श्रीरामस्यस्वरूपंक्रियापदेन श्रीरामप्राप्त्युपायस्वरूपंकर्मपदेनतत्प्राप्तिफल स्वरूपमुक्तंभवति तेनजीवस्यश्रीरामव्यतिरिक्तेस्वशेषित्वबुद्धिः परस्वरूपविरोधि-नीभवति रामादुपायांतरे उपायत्व बुद्धिरुपाय स्वरूप विरोधनी भवति रामकैंकर्यादन्यत्र फल बुद्धिः फलस्वरूप विरोधिनी भवति स्वनिष्ठा रामाद्देवतांतरादेः शेषत्व बुद्धिः स्वस्वरूप विरोधिनी भवति इत्यर्थत उपलभ्यते तएते अर्थाः मंत्रवित्तमैः ज्ञातव्याः तदुक्तं प्राप्यस्य ब्रह्मणोरूपं प्राप्तुश्च-प्रत्यगात्मनः प्राप्त्युपायंफलं प्राप्तेरतथाप्राप्तिविरोधिनः ज्ञात व्यमतेदर्थानां पंचकं मंत्रवित्तमैरिति । येएते मंत्रस्यपंचविधा अर्थास्तएवसर्ववेदेतिहासादिसारार्थाभवन्तीप्यप्युक्तमभियुक्तैः प्राप्यस्यब्रह्मणोरूपं प्राप्तुश्चप्रत्यगात्मनः प्राप्त्युपायं फलं प्राप्तेस्तथाप्राप्तिविरोधिनः वदंतिसकलावेदाः सेतिहासपुरा-णकाः मुनयश्च महात्मानो वेदवेदांतवेदिनः इति अतोयः षडक्षरतारक मंत्रार्थयाथात्मविद्भवति सोपिसर्ववेदेतिहासादि सारार्थवित्त्वेनशब्दब्रह्म विद्भवति सएव यदामंत्रोक्तस्यस्वशे-षिणोरामाख्यपरब्रह्मणोहंरामोऽस्मीत्येवंतत्वतस्तादात्म्यंभावयन्

ब्रह्मणि नितरांतिष्ठतीति तदाब्रह्मनिष्ठइत्युच्यते इत्येवं मंत्रा र्थविदः शब्दब्रह्मवित्त्वं परब्रह्मनिष्ठत्वं चेत्युभयमुपपद्यते इति तस्यैवगुरुत्वेनाश्रयणीयत्वम् तद्विज्ञानार्थं गुरुमेवाभिगच्छेत् श्रोत्रियंब्रह्मनिष्ठमित्याद्याः श्रुतयोवदंति एवमेकयाश्रुत्यासामा न्येनमंत्रार्थउक्तः एवं संक्षेपेणमंत्रार्थं मंत्रस्य चसच्चिदानंद परब्रह्म स्वरूपवाचकत्वेन तन्मुख्यकत्वं प्रकाश्य अर्थविशेषतो- मंत्रार्थं वदंती आदौवह्निवीजतद्वाच्यरामयोः स्वप्रकाशज्योति मयस्वरूपं प्रकाशयन्तीतयोः सृष्ट्यादिकारणत्व ज्ञापनद्वारा जगद्रामयोः शेषशेषीभावं ज्ञापयति ॥ स्वभूर्ज्योतिर्मयोनंत- रूपीस्वेनैवभासते जीवत्वेनेदमोंयस्य सृष्टिस्थितिलयस्य च कारणत्मेन । चिच्छक्त्या रजः सत्वतमोगुणैः ॥ इत्येषाश्रुतिः स्वभूःस्वतः सिद्धः ज्योतिर्मयः स्वप्रकाशचिन्मयः अनंतरूपी अपरिच्छिन्नरूपी अनंतरूपधारी सर्वावतारी स्वेनैवभासते स्वयंप्रकाशरूपः नसूर्यादिवत्स्वान्यप्रकाश्यप्रकाशितइत्यर्थः एवंवीजस्यस्वरूपमुक्त्वातस्य रण वकारणत्वं दर्शयन्सृष्ट्यादि कारणत्वमाह जीवत्वेनेदमों यस्येत्यादिना यस्यवन्हिवीजस्य जीवत्वेनजीवयतीति जीवस्तस्यभावोजीवत्वं तेनजीवत्वेन- स्फोटकत्वेनइदमों ॐ काराक्षरंचिच्छक्त्या रजः सत्वतमो- गुणै जगत्सृष्ट्यादि कारणत्वेनावतिष्ठतइतिशेषः वाच्यपक्षे- यस्यरामस्य जीवत्वेनेदमों कारात्मकं जगत्वर्त्ततेयश्चचि- च्छक्त्याश्रीसीताख्यया सर्वाभरणयाचितेति जानक्याशिचद्रूप-

त्वश्रुतेः रजःसत्वतमोगुणाः सृष्टिस्थितिलयस्यचकारणत्वेन तिष्ठतीत्येवं योज्यम् श्रीसीताद्वारारामस्य जगत्सृष्ट्यादिकर्तृत्वं श्रूयते श्रीरामतापिनीये श्रीरामसान्निध्यवशा ज्जगदानंददा· यिनी सृष्टिस्थितिसंहारकारणी सर्वदेहिनाम् सासीताभगवती- ज्ञेया मूलप्रकृतिसंज्ञिका प्रणवत्त्वात्प्रकृतिरिति वदंति- ब्रह्मवादिन इतिसेयंसीताचिदात्मिकास्ति नतुजडप्रकृतिरूपा हेमाभयाद्विभुजया सर्वालंकारयाचिता श्लिष्टः कमलधारि- णया पुष्टःकोशलात्मजः इतितापिनीये तस्याश्चिदात्मकत्व- श्रवणात् तदेवंजगत्सृष्ट्यादिकर्तृत्वेन वह्निवीजस्य तद्वाच्य- स्यरामस्य जगत्स्वामित्वं जगतस्तच्छेषत्वं चनिष्पद्यते क्षेत्र क्षेत्रीन्यायेन यथाकस्मिञ्चित्क्षेत्रिणि क्षेत्रेश्चावपति सिंचति कृंतति चायमस्यक्षेत्रस्य स्वामीत्यपरैर्निश्चीयते तथाजगत्सृ- ष्ट्यादिव्यापारैरयं रामोऽस्यजगतः स्वाम्यस्तीति निश्चयात् जगद्रामयोः शेषशेषीभावः श्रुत्यावगतस्तरः ननुवह्निवीजस्यच कुलालादिवज्जगतसृष्टत्वं राजादिवत्तत्पालकत्वं चोपप- द्यते नतुतल्लयस्थानत्वं तस्याल्पपरिमाणवतो महत्- त्परिमाणवज्जगदाधारत्वानुपपत्ते रित्याशंक्याह यथैववट- वीजस्थः प्राकृतश्चमहाद्रुमः तथैवरामवीजस्थं जगदेवच्चरा- चरम् इतियथाप्राकृतो महाद्रुमो वहुशाखापल्लववान्वटवृक्षो ह्रस्वप्रमाणवटवीजस्थः चकारो ऽश्वत्थादीनां समुच्चयार्थः तथैवरामाभिन्नंवीजंतत्रतिष्ठतीति रामवीजस्थम् एतच्चराचरं

जगदस्तीत्यर्थः अथबीजमुद्धरन्ननुजगत्सृष्ट्यादिकर्तृत्वं ब्रह्म-विष्णुमहेश्वराणां श्रूयते अतः क्षेत्रक्षेत्रीन्यायेन तेषामपिज-गत्स्वामित्वमुपपद्यते इत्यतोजगन्निष्टशेषत्वनिरूपितस्य तच्छे-षित्वस्य श्रीरामब्रह्मविष्णुमहेश्वर साधारणत्वोपपत्ते नरामा-नन्यशेषत्वस्य जगन्निष्टत्वमुपपद्यते इत्याशंक्यब्रह्मादीनांमपि श्रीरामवाचकरेफाश्रितत्वदर्शनेन रेफवाच्य रामानन्यशेषत्वं ज्ञापयन्ब्रह्मादीनां श्रीरामशेषत्वे सतितत्परतंत्रत्वेन जगत्सृष्ट्या-दिभिर्जगत्स्वामित्वंनस्वातंत्र्येणेत्याहरेफारूढेतिरेफारूढामूर्त्तयः स्युः शक्तयस्तिस्रएवच इतिरेफोरवर्णा रतमारूढा वृक्षारूढा-वानरावृक्षाधारा इवरेफारूढत्वेन रेफाधारतया रेफाश्रितत्वेन रेफशेषभूताः अकारद्वयं मकारश्चेति ब्रह्मविष्णुमहेश्वरवा-चका स्त्रयोवर्णा स्तदुपलक्षिता स्तद्वाच्या ब्रह्म-विष्णुमहेश्वरा स्तेषांशक्तय श्चतिस्रःस्युः अत्रमूर्त्तिपदग्रहणेन च ब्रह्मादीनामेवसशक्तीनांरेफारूढत्व मुक्तंभवति नदेवतां-तराणां तदारूढत्वंकुतः शक्तयस्तिस्रइतिशक्तीनां त्रित्वोक्त्या तच्छक्तिमतामपि त्रित्वोपपत्त्या ब्रह्मादिव्यतिरिक्तदेवता त्रि-त्वाश्रुत्याच तेषामेवरेफारूढत्वकथनेन रेफशेषत्वं ज्ञापितं भवति रकाराज्जायतेब्रह्मा रकाराज्जायतेहरिः रकाराज्जायते शंभू रकारात्सर्वशक्तयः इतिरेफारूढेति श्रुत्युपवृंहणभूतं पुलहसंहितावचनं यतोरकारेस्थितानां ब्रह्मादीनां रकादुत्पत्तिं वदन्रकारस्य तल्लयस्थानत्वं ज्ञापयन क्षेत्रक्षेत्रीन्यायेन

रकारशेषत्वं ब्रह्मादीनां सशक्तीनां वोधयति अतउपपद्यते मूर्त्तय इतिपदस्य ब्रह्मविष्णुमहेशपरत्वं तदेवंरेफस्य ब्रह्मादि-सृष्ट्यादि कर्त्तृत्वेनादिसृष्टिकर्त्तृत्वम् ब्रह्मादीनांतु रेफाश्रित-त्वेन रेफपरतंत्रतया तच्छेषत्वेनावांतर सृष्ट्यादिकर्त्तृत्वं निर्दिश्यब्रह्मादीनांतत्कृतसृष्ट्यादि कोटिगतस्य कृत्स्नस्य जगतश्च रेफतद्वाच्यरामानन्यशेषत्वं रेफरामयोस्तच्छेषित्वंचनिवोध्यब्रह्मा-दिजगतः श्रीरामस्यच शेषशेषीभावो वन्हिवीजस्यार्थो ज्ञापि-तोभवतीत्यर्थः तदेवं स्वभूर्ज्योतिर्मयइत्यनयाश्रुत्यावह्निवीजस्य स्वप्रकाशज्योतिर्मयस्वरूपत्वम् यथैववटवीजस्थइत्यनयाश्रुत्या रामाख्यपरब्रह्मविष्णुमहेश्वरादिमयस्य वह्निवीजस्य चराचर-जगत्कारणत्वम् रेफारूढामूर्त्तय इत्यनयाश्रुत्या रेफस्य सर्व-जगत्कारणत्वनिर्देशेन रेफस्य ब्रह्मादिसर्वजगच्छेषित्वं ब्रह्मा-दीनांचतच्छेषित्वं निर्दिश्यअथरेफरामयो स्तादात्म्यसंवंधेन वाच्यवाचकत्वंनिर्दिशन् सीतारामयोरेफवाच्यत्वोपपत्तये तत्र-रेफसाधर्म्यं जगत्कारणत्वं ज्ञापयितुं सीतारामयोः सर्वजगत्का-रणत्वं वदति सीतारामौ तन्मयावित्येषा श्रुतिः सीतारामौ-तन्मयावत्रपूज्यौ जातान्याभ्यां भुवनानि द्विसप्तस्थितानि चप्रहृतान्ये वतेषुततो रामोमानवो माययाधात् ॥ अत्रमंत्रो सीतारामौ तन्मयौ रेफमयोतादात्म्येनरेफावाच्यौपूज्यौज्ञेयौ पूजति रत्रज्ञानार्थः धातूनामनेकार्थत्वात अत्रतच्छब्दो रेफा-रूढा इत्यत्रत्यस्या व्यहितस्यरेफस्य परामर्शकः नतुव्यवहितस्य

तथैव रामबीजस्थं इत्यस्य रेफस्य आभ्यां सीतारामाभ्यां अधरतनानि सप्तसप्तचोपरितनानान्येवं द्विसप्तभुवनानि जातानि स्थितानि प्रहृतानिच अनेन जगत्सृष्ट्यादिव्यापारैः क्षेत्रक्षेत्रीन्यायेन सीतारामयोर्जगच्छेषित्वं जगतश्च तच्छेषत्वं ज्ञापितं भवति ततोनंतरंतेषु जातेषु भुवनेषु रामः आत्मानमधात् प्रावेशयत् तेषुरामःप्राविशदित्यर्थःतत्सृष्ट्वा तदेवानुप्राविशदिति श्रुत्यंतरात् कथंभूतः रामःमानवः माप्रभातयानवः नवीनः पुराणोपि प्रभया नवावयव इत्यर्थः माययाज्ञानेन मायावपुनं ज्ञानमित्युक्तो ज्ञानपर्यायोऽत्रमायाशब्दः अथवा अमायेतिचेच्छदः अमाययामायालेशराहित्येन मानवःमनुष्याकारः सच्चिदानंदाकार इत्यर्थः चिन्मयेस्मिन्महाविष्णौ जातेदशरथेहरौ रघोःकुलेखिलंराति राजतेयोमहिस्थितः सरामइतिलोकेषु विद्वद्भिप्रकटीकृतः रमंतेयोगिनोऽनंते सत्यानंदेचिदात्मनि इतिरामपदेनासौ परब्रह्माभिधीयते चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः उपासकानांकार्यार्थं ब्रह्मणोरूपकल्पना इत्युपक्रमश्रुतिभ्यः मुद्रांज्ञानमयीयामेवामेतेजःप्रकाशनम् धृत्वाव्याख्याननिरत श्चिन्मयःपरमेश्वरः अर्द्धमात्रात्मकोरामो ब्रह्मानंदैकविग्रहः इत्यभ्यासात् अहमोंतत्सद्यतपरं ब्रह्मारामचन्द्रश्चिदात्मकः इत्येवमाद्युपसंहारश्रुतिभ्यश्च श्रीशार्ङ्गधारिणांरामं चिन्मयानन्दविग्रहम् हलधृग्विष्णुमीशानं बलरामंकृपानिधिम् ॥ इत्येवमीडितोरामः प्रदात्त-

स्मैवरांतरम् विरराममहातेजाःसच्चिदानंदविग्रह इत्येवमादिस्मृतिभ्यश्च सच्चिदानंदविग्रहत्वेनप्रतिपादितत्वात् तदेवंरेफवाच्यंरामाख्यं परब्रह्म ब्रह्माद्यशेषजगच्छेषी भवतिरेफाश्रिताः अकारादिवाच्या ब्रह्मादयः सृष्टिस्थितिसंहारकर्त्तार स्तत्सृष्टि स्थितिप्रलयकोटिगतमशेषंचराचरात्मकं जगच्च श्रीरामस्यशेषभूतमिति वह्निवीजस्येममर्थंज्ञापयित्वाथमंत्रशेषस्यार्थंवोधयति जगत्प्राणायात्मने इत्येषाजगत् प्राणायात्मने तस्मैनमः स्यान्नमस्त्वैक्यंप्रवदेत् प्राग्गुणेनेति जगत्प्राणाययथाशरीर स्थिति प्रवृत्योर्हेतुःप्राणःप्राणंविनाशरीरस्यस्थितिरपिनदृश्यते कुतः प्रवृत्तिः तथैवजगत्प्राणं श्रीरामंविना जगत्स्वरूपस्थिति प्रवृत्त्यो रनुपपत्तेः जगत्सत्तास्फुर्त्तिप्रदाये त्यर्थःतथाजगदात्मने अततिसातत्येन नैरंतर्येण गच्छति व्याप्नोति सर्वजगद्बहिरंतर्व्याप्नोती त्यात्मातस्मैवहिरंतः सर्वजगद्व्याप्यस्थिताय जगदात्मने इत्यनेनयथास्वशरीरस्य योगक्षेमं चतच्छरीरी जीवात्माकरोतितथैव सर्वजीवशरीरिणः आत्मनः श्रीरामस्य सर्वयोगक्षेमकारित्वोपपत्तेः अनन्या श्चितयंतोमां येजना पर्य्युपासते तेषांनित्याभियुक्तानां योगक्षेमं वहाम्यह मिति स्वानन्यभक्तानामैहि कामुष्मिक योगक्षेमकारित्वोक्तेश्च अप्राप्तस्य स्वस्यप्रापणंयोगः स्वप्राप्तस्य पुनः संसारागमाद्रक्षणं क्षेमः इत्यामुस्मिकयोगक्षेम कारिणे स्वानन्यचिन्तकानां स्वप्राप्तेरुपाय भूतायेत्यर्थः तस्मैइतिचतुर्थी तादात्मिकाजीववाची नमोनाम

चात्मारामेतिगीयते तादात्मिकाया चतुर्थी तथाचार्येतिकथ्यते इत्यग्रतनश्रुतेः जीवपरमात्मनोस्तादात्म्यं बोधयतीतितादात्मिकायथाजलसागरे तैलकुंडे वापतितस्य जलेनतैलेनवांतर्बहिर्व्याप्तस्य तूलकणस्य तूलरूपेण भानंनभवेत् किंतुसर्वव्यापकरामरूपेणैवेतियत्तदेव जीवरामयोस्तादात्म्य मुच्यते किंचिद्भेद सहिष्णुत्वे सतिभेदासहिष्णुत्वं तादात्म्यम् इतितादात्म्य लक्षणं तत्रजीवपरमात्मनो स्वरूपमात्रेणाभेदः किंचिद्भेदः ततो व्याप्यव्यापकत्वेन त्वभेदः व्याप्यव्यापकयोर भेदउक्तोगीतायां सर्वसमाप्नोषिततोसिसर्वः इतिसएवभेदासहिष्णुत्व मित्यनेनोक्तः इतीदृशंयद्रामतादात्म्यं तस्मैरामतादात्म्यायजीववाचिनमोनामे त्यग्रतनश्रुतेः नमःजीवः स्यादितिविधिः श्रीरामतादात्म्याय यत्नंकुर्यात् श्रीरामतादात्म्यं यथानिष्पद्यते तथाभवेदित्यर्थः ईदृशं श्रीरामतादात्म्य मनुसंदधन्क्रियाकर्मेज्येत्युक्तं रामकैंकर्य्य लक्षणं कर्मकुर्यात् मंत्रजपप्रकरणाच्च तथैवषडक्षरंजपेदित्यर्थः तेनोक्तेन कर्मणा मंत्रजपप्रभावेन च श्रीराम तादात्म्यं यथावद्बुद्धा प्राप्यच श्रीरामेण समंनंदेदितिभावः श्रीरामतादात्म्यानुसंधान पूर्वकं तत्कैंकर्य करणंतूक्तंदाक्षिणात्याचार्य्यैः उपायज्ञानं चतुर्विधम् संबंधज्ञानं संबंधयाथात्म्य ज्ञानम् संबंधस्वरूपज्ञानं संबंधस्वरूप याथात्म्यज्ञानं तत्रसंबंधज्ञानंनामश्रियः पत्युर्निरुपाधिकशेषित्वं स्वस्यनिरुपाधिक शेषत्वं च सम्यग्ज्ञात्वास्थितिः संबंधयाथात्म्यज्ञानंनाम

श्रियः पत्युर्निरुपाधिक शरीरित्वंस्वस्यनिरुपाधिक शरीरत्वं ज्ञात्वास्थितिसंबंधस्वरूपज्ञानं नामश्रिय.पत्युर्निरुपाधिकधर्मित्वं स्वस्यनिरुपाधिकधर्मत्वं च ज्ञात्वास्थितिः संबंधस्वरूप याथात्म्यज्ञानं नामधर्मिधर्मयोरैक्यं ज्ञात्वास्थितिः ।

एक्यंनाम विशिष्टविशेषेसति सएवसन्स्वयं यथानप्रकाशते तथास्थितिः उपाययाथात्म्यज्ञानं नामतन्निष्ठा तन्निष्टानाम शेषत्वेकर्त्तृत्वनिवृत्तिः ज्ञातृत्वेकर्त्तृत्वनिवृत्तिः कर्तृत्वेकर्त्तृत्वनिवृत्तिः भोक्तृत्वेकर्त्तृत्वनिवृत्तिश्चतत्रशेषत्वेकर्त्तृत्वंनामराजाज्ञया जगत्पीडांकुर्वतोमंत्रिणइवभगवद्दासतयासदाचारश्लथनंकृत्वा तिष्ठतीतियत्तत्रसदाचारोनाम शब्दादिविषयेभ्यो भयं भगवत् भागवतकैंकर्येष्वा सक्तिश्च एतन्नकरोतीति यत्तदेवसदाचारश्लथनमस्ति तन्निवृत्तिर्नामप्रामादिकविषयस्पर्शः प्रामादिककैंकर्यविश्लेषश्च नोदेतीति यतज्ञातृत्वेकर्त्तृत्वं नामवयंज्ञातार इतिकृत्वाखलुश्रियः पतिरस्मानंगीकृतवानिति स्वज्ञातृत्वस्य तदंगीकारे हेतुत्वकल्पनम् तन्निवृत्तिस्तु देहाभिमानिनांमध्ये त्यंतनिकृष्टो ऽहमसदात्मकल्प इंद्रियजितोहं एवंविधमामयः सुवर्णीकृत्वा आचार्याआत्म ज्ञानमुपदिश्य एवमंगीकृतवंत इतिकृतज्ञतयास्थितिः कर्त्तृत्वेकर्त्तृत्वंनामवयंनिषिद्धानिपरित्यज्य विहितान्येव कुर्वन्तः स्थिता इत्यतोऽस्मानंगीकृतवानिति स्वप्रयत्नस्यस्वांगीकारेहेतुत्वकल्पनम तन्निवृत्तिस्तुअस्मद्व्यापारः कोपिनास्ति दारु-

पुत्रिकानाटक इवनिषिद्धानित्याजयित्वा विहितानिकारय-
तीतिस्थितिः भोकृत्वेकर्तृत्वंनामवयं तुसेवांकुर्वन्तः स्थिता-
इतिस्थितिः तन्निवित्तिग्तु ॥ स्वहस्तेनस्वकेशसंस्कारेकृते-
ऽन्योऽन्यमुपकारस्मृतिर्यथानभवति तथैव वयद्भूतेनात्मनाव
यविनः श्रियःपत्युः कैंकर्येक्रियमाणेसत्यन्योऽन्यमुपकारस्मृति-
र्यथा नस्यात्तथाभगवत्कैंकर्यकुर्वन्तिष्ठतीतियतएवमात्मनः
श्रीरामतादात्म्यानुसंधानपूर्वकंषडक्षर जपोद्युक्तः सुंदरीतंत्रेश्री-
जानक्याजनकंप्रतिभूशुद्धिकृत्वा मात्राक्षरन्यासस्वमंत्राक्षर
न्यासानंतरंयहंरामोनचान्योस्मिब्रह्मैवाहंनशोकभाक् सच्चिदा-
नंदरूपोहंनित्यमुक्तस्वभाववान् इत्येवमात्मनः श्रीरामतादात्म्यं
ध्यायन्मंत्रंजपेदिति तदेवश्रुतिः स्फुटंवदतिनमस्त्वैक्यंप्रवदेदिति
ॐ योवैश्रीरामचन्द्रः सभगवान्यत्परंब्रह्मभूर्भूवःस्वस्तस्मैवै-
नमोनमः इतिरामतापनीयोपसंहारमंत्राणामंतेसर्वेषांद्वयोर्नमसो
श्रवणात् अत्रापिद्वयोर्नमसोरत्यंतसारूप्यात्तंत्रेणोपादानंस्यात्
तत्रैकंनमः पदंजीववाचि द्वितीयमुपायवाचिउपायः शरणा-
गतिः गच्छध्वंमेनंशरणं शरण्यंपुरुषर्षभं इतिमार्कंडेयोप-
दिष्टशरणपदस्थाने द्रौपद्यासहिताः सर्वेनमश्चक्रुर्जनार्दनम्
इतिनमः पदोपादानात् साधनांतर संत्यागोनमः शब्दोहिशंस-
तिअनेनशरणापत्तिः परमैकांतिनांमता इतिपंचरात्र वचनाच्च
तदुपायवाचिनमः पदमात्मपरमात्मनो रैक्यंप्रवदेत् ऐक्यंना-
मविशिष्ट विशेषेसतिसएवसन् स्वयंयथानप्रकाशते तथा-

स्थितिःइतिर्पूर्वोक्तमेव अथवात्रप्रवदतीतीदृशोपाठोनास्तिकिं-
तुप्रवदेदियेत्वम्प्रवदेदितिविधिःप्रयोगःविधिश्चोदनालक्षणोध
र्मइत्युक्तेः चोदनाविधिर्लक्षणंप्रमाणंयत्रसचोदनालक्षणः इति
तन्निरुक्तिः चोदनावेदाज्ञाजीवपरमात्मैक्यप्रवदनप्रेरण-
लक्षणातस्मान्नमस्त्वैक्यंप्रवदेदित्यस्येदृशोर्थः तुपुनःनमःजीवः
आत्मपरमात्मनोरैक्यंप्रवदेत ऐक्यंनामयथा जलसागरेपतित-
स्यजलेनवहिरंतर्व्याप्तस्यतूलकणस्यतूलरूपेणभानं नभवति
किंतुजलरूपेणैवतथैव श्रीरामेणपरमात्मनावहिरंतर्व्याप्तस्य-
जीवस्ययथास्वेनरूपेणभानंनभवेत्किंतु श्रीरामरूपेणैवतथा-
तिष्ठेत् तथैवरामोऽहम्ब्रह्मैवाहमस्मिसर्वंह्येतद्ब्रह्मअयमात्मा-
ब्रह्मतत्वमसिइत्येवंस्वयंप्रवदेत् अन्यान्नपिप्रवदेत् पाठयेत्उपदि-
शेदित्यर्थःउपनिषदिस्वाध्यायप्रवचने इति प्रवचनशब्दस्यपाठ
नार्थकत्वावगमात्प्रवदनप्रवचन पदयोरेकार्थकत्वाच्चतस्यरामो
ऽहिमितिकथनस्य तद्याथात्म्यवोधस्यचफलंवदिष्यत्युत्तरतापि-
नीयाश्रुतिः सदारामोहमित्येतत्वतः प्रवदंतियेनतेसंसारिणोनू
नंरामएवनसंशयःइत्येषाऐक्यप्रवदनेहेतुः प्राग्गुणेनेतिपूर्वोक्तेन
नजगत्प्रवेशित्वजगत्प्राणत्वजगदात्मत्वगुणेनेत्यर्थः तेनप्राणव
त्सत्तस्फुर्त्तिप्रदानेनजीवनहेतुभूतेनजगदात्मना श्रीरामेणांतर्व-
हिर्व्याप्तस्यजीवस्यरामादपृथक् सिद्ध्यारामरूपत्वोपपत्तेःआत्मा
रामयोरैक्यं वहुश्रुत्युक्तम्ब्रह्मैवाहमस्मिअयमात्माब्रह्मसर्वंह्येतद्ब
तत्वम सिइत्येवमादिश्रुत्रिभिर्वोधितंअहंरामोनचान्योस्मिब्रह्मै-

वाहंनशोकभाक् सच्चिदानंदरूपोहं नित्यमुक्तस्वभाववान् इत्ये
वंप्रवदेत् मनसा जानीयात्वचसावदेत् अन्यानप्युपदिशेदि-
त्यर्थः उपासकोब्रह्मवित्स्वोपास्यंस्वात्मतयैवोपासीतनान्यथेति-
व्यासप्रणीत ब्रह्मसुत्रादप्यवगम्यतेआत्मेतितूपगच्छंतिग्राहयं-
तिचेत्यस्मातएवंमंत्रशेषार्थमुकुत्वाथमंत्रशेषस्यपदार्थमाहजीव-
वाचिनामोनामआत्मारामेतिगीयतेतादात्मिकायाचतुर्थीतथाचा
येतिकथ्यतेइत्येषानामेति प्रसिद्धंमंत्रगतंनमः पदंजीववाच्यरित
रामेतिप्रातिपदकेन आत्मापरमात्मागीयते नमः पदस्य जीवा-
त्मवाचितया रामपदस्य परमात्मवाचकत्वोपपत्तेः तथाचनमः
रामपदयो रात्मपरमात्म परत्वेसतिया चतुर्थीआयेति कथ्यते
रामप्रात्तिपदिकात्परोच्चार्यते सातादात्मिका आत्मपरमात्मनो
स्तादात्म्यवोधिका तयोस्तादात्म्यसंवंधं वोधयतीत्यर्थः तयोः
स्वरूपमात्रेण नियंतृनियम्यत्वेन चभेदम् व्याप्यव्याप्यकत्वेन
तुव्याप्यस्यव्यापकापृथक्सिद्धेः व्याप्यस्वरूपस्थितिप्रवृत्त्योः
सर्वथाव्यापकाधीनतया व्याप्यव्यापकाभेदंच वदतिव्याप्यस्य
व्यापकरूपत्वं गीतावचनादवगम्यते सर्वंसमाप्नोषिततोसिसर्वः
इत्यस्मात्यएतत्तारकंषडक्षरं नित्यंजपति तदर्थानुसंधानपूर्वकं
तस्यवर्त्तमानस्यैवदेहस्यांते श्रीरामप्राप्तिर्भवती त्युत्तरतापिनी-
यायाः यएतत्तारकंब्राह्मणोनित्य मधीतेसपाप्मानंतरति। समृ-
त्युंतरति। सभ्रूणहत्यांतरति। सवीरहत्यांतरति ।ससर्वहत्यांत-
रति। ससंसारंतरति। ससर्वंतरति। सोविमुक्ताश्रितोभवति। सम-

ज्ञान्भवति सोमृतत्वं चगच्छतीत्यस्याः श्रुतेरर्थविचारादवगम्यते तथाहिषडक्षरतारकस्य नित्यजपपरो नतावन्नरकंगमिष्यति कुतः तस्यनरकप्राप्तिहेतुसर्वपापविनाशादित्याह सपाप्मानंतरतीत्यारभ्य सस्र्वहत्यांतरतीत्यंतेन नचसोब्रह्मलोकपर्यंतेषु पुण्यलोकेषु मध्येकस्मिंश्चिल्लोके स्वर्गादौ गमिष्यतीत्याह संसारंतरतीति नचसविरजापरंपदयोरंतरालेगमिष्यती त्याह-ससर्वंतरतीति किंतुपरिशेषात् स्वस्वरूपमनुभूयजगत्पूज्यो भूत्वामृतपदवाच्यं श्रीरामपरधामगमिष्यतीत्याह सोविमुक्तात्मेत्यारभ्यामृतत्वं चगच्छतीत्यंतेन अत्रतरति गच्छतीति वर्त्तमानप्रयोगैर्वर्त्तमानस्यैवदेहस्यांते सर्वपापराहित्यपूर्वकं श्रीरामपद प्राप्तिर्ज्ञापिताभवति अन्यथातरिष्यति गमिष्यती त्येवंवक्तव्यात् अत्रब्राह्मणशब्दो ब्रह्मबुभुत्स्वर्थकः नतुब्राह्मणजातिपरः शुचिव्रततमाः शूद्राधार्मिका द्विजसेवकाः स्त्रियः पतिव्रताश्चान्ये प्रतिलोमानुलोमजाः लोकाश्चांडालपर्यंताः सर्वेप्यत्राधिकारिणः स्वजातिकर्मनिरताभक्ताः सर्वेश्वरस्पये इत्यगस्त्यसहितायां चांडालपर्यंतस्यषडक्षराधिकारितोक्तेः हारीतेप्युक्तं तथैव ब्राह्मणा क्षत्रियावैश्याः स्त्रियः शूद्रास्तथेतरे सर्वेप्याधिकारिणो ऽस्यह्यनन्यशरणा यदि इतिगर्भजन्मजरामृत्यु तारकंसर्वदेहिनां स्वभक्तवत्सलं राममंत्रंसस्यगुपास्महे इतिसोऽयंषडक्षरस्प नित्यजापी आर्च्चिरादिमार्गस्थैस्तत्तल्लोकस्वामिभि रग्न्यादिभिः पूजितो ऽर्च्चिरादिमार्गेण परधा-

मगमिष्यतीत्याह श्रीरामोपनिषच्छ्रुतिः यएनंमंत्रराजं श्रीरामचन्द्रस्य नित्यमधीते सोऽग्निनापूजितोभवति सब्राह्मणापूजितोभवति सविष्णुनापूजितोभवति सरुद्रेणपूजितोभवति ससर्वैर्देवैर्ज्ञातोभवती त्याद्या।

येसंतिब्राह्मणाःलोकेवैष्णवाश्रोत्रियाश्चये।
ब्रह्मज्ञानायतेषांहिमंत्रार्थोयंप्रकाशितः॥ १॥
श्रुत्युक्तोहि मंत्रार्थोयं नस्मार्त्तो नापिकल्पितः,
अतोत्रप्रीतिरधिका ब्राह्मणानां भविष्यति॥ २॥

ननुजीवः श्रीरामव्याप्त्यातदपृथक्सिद्धतया तदधीनस्वस्वरूपस्थितिप्रवृत्तित्वेनात्मनः श्रीरामतादात्म्यमनुभूय रामरूपत्वं रामोहमित्येव भावयेदिति यदिराममंत्रस्यार्थस्तदा रामतन्मंत्रयोर्वाच्य वाचकत्वप्रसिद्धि र्व्याहन्येते त्यतआह

**मंत्रोयंवाचकोरामोवाच्यः स्याद्योगएतयोः**
**फलदश्चैवसर्वेषांसाधकानांनसंशयः॥२०॥**

अयंमंत्रोवाचको रामस्तु वाच्यइत्यन्वयः यथाघटमानये त्युक्तेघटत्वेनरक्ताद्यन्यतरगुणे नचविशिष्टमेवघटमानयतितेनविशिष्टार्थकोपिघटशब्दोघटस्यैववाचकउच्यतेयथाविशेषणस्यविशेष्याविनाभूतत्वात् गोत्वविशिष्टगोव्यक्तिबोधकगोशब्द स्यगोवाचकत्वंचोच्यते तथाजगच्छेषीरामइत्येतदर्थकोपिराम

मंत्रोरामस्यैववाचक इत्युच्यते तथाजीवपरमात्मनोःशेषशेपि संबंधवाचकोपिराममंत्रः श्रीरामस्यवाचकइवेत्यवधेयंननुमंत्रो जप्तव्यः किंतदर्थानुसंधानेनतदर्थोवानुचिंत्यः किंतज्जापेने-त्यतआहस्याद्योगएतयो रितिएतयोर्मंत्र जपतदर्थानु संधानयो योगःसर्वेषांसाधकानां मोक्षफलदो शब्दादकामितभोगदश्चएव शब्दात्फलदो भवत्येव यद्यप्येकैकमात्रानुसंधानं पापक्षयादि-फलकं तथापितयोर्योग एवमोक्षफलदोनान्य इतिभावः उक्त-मर्थंदृढयति नसंशयइति अथवा एतयोर्वाच्यवाचकयो योंग-वाचकोच्चारणपूर्वकं वाच्यानुध्यानरूपः वाच्यानुध्यानसहितो वाचकानुष्ठानरूपश्चसर्वेषांसाधकानांफलदोभवत्येव अनेन-वाच्यामन्यमानानांस्वोधत्यकल्पितमार्गानारूनाकलित श्रुतीति ह्यासादीनां तथावाचकामन्यमानानां स्वरूपमात्रवादिनां च्चवाच्यवाचकौ तद्योगश्चकल्पितइतिचमन्यमानानां मंत्रजप-वैफल्यंस्वरूपध्यानवैफल्यं फलांतरप्राप्तावपिमोक्षफलविधुरत्वं चसूचितंभवति विशेषशक्त्यादिमत्स्वरूपसंबंधं विनानाम्न स्तत्तफलप्रदत्वानुपपत्तेः अन्यथाततसामान्यान्नामांतरे पिता-दृशफलप्रदत्वप्रसक्तिःस्यात् स्मर्यतेचस्वरूपविशेषसंबंधादेवना-म्नःशक्तिविशेषत्वं यन्नाम संसर्गवशाद्द्विवर्णौ नष्टस्वरौ मुद्गितौ-स्वराणांतद्रामपादौहृदयेनिधाय देहीकथंनोदूर्ध्वगतिं लभेतेति यन्नामयत्सम्बन्धिनामेत्यर्थः एकांगसंगिनीगंगा पुनातिह्यखि-लंजगत् अंगप्रत्यंगसंव्यापि नामकिं कर्त्तुमक्षममितिचलो-

केपि शक्तिमत्यपदार्थ विशेषनामोच्चारणादेव भूतप्रेतादयः पलायंतेनतुशक्तिहीनपदार्थ नामोच्चारणादिति अतोनाममंत्रानुष्ठानपरस्यतद्वाच्यस्वरूपानु संधानमवश्यानुष्ठेयं नामविशेषज्ञानंविनातुवाच्यविशेष विवेका नुत्पत्या स्वरूपविशेष ध्यानासंभावात् स्वरूप सामानस्यतु ध्यानागम्यत्वात् नामोच्चारणांविना चोभयोः सान्मुख्यानुपपत्त्या फलविशेषाप्रदत्वाद्धिफलं स्वरूपमात्रवादिमतं नामविशेषसंबंधि स्वरूप विशेष ज्ञानध्यानादिभिर्देहां तेतत्प्राप्तिरिति वादिनीनांब्रह्मविद्ब्रह्मैवभवति योयद्रूपंस्मरति सतद्रूपोभवति यंयंवापिस्मरन्भावं त्यजत्यंतेकलेवरं तंतमेवेतिकौंतये सदातद्भावभावित इत्यादिश्रुतिस्मृतियुक्तीनां विरोधित्वाच्च औपाधिकनाम्न स्तूपाधिमात्रबोधकतया तेननिरूपाधिकस्वरूपज्ञानानुदयात् शाखाचन्द्रयो स्तूभयोः प्रत्यक्षत्वेन तत्रशाखया चन्द्रस्यलक्ष्यत्वेपि अग्राह्याव्यपदृश्या दृश्या तर्क्यस्या विद्याप्रत्यनीकस्य ब्रह्मणोनकथमपि लक्ष्यत्वमुपपद्यते येनतत्परोक्षज्ञानाद्युत्पतिपूर्वकं तत्प्राप्तिरिति वचनमप्युपपद्येतेति मायावादिनां कल्पितयुक्तिसमूहस्य तर्कात्मकत्वात् ब्रह्मण्युपाधिसंबंधस्य तुबहुधानिरस्तत्वात् निरूपाधिकस्य तस्यतुतर्कागम्यत्वात् वेदार्थस्यतु स्मृतीतिहासपुराणादि वाक्यप्रकाश्यत्वा त्स्मृत्यादिषु बहुशः जीवानामी

---

१. तर्कानामप्रतिष्ठानादित्यर्थः ।

श्वरनियम्यत्वश्रवणेन तच्छेषत्वावगमात् तदीयैकत्ववचसां तुतत्स्वरूपस्थितिप्रवृत्तेः सर्वथेश्वराधीनतया जीवानांतदपृथक् सिद्ध्यर्थकत्वात् अन्यथामाया प्रेरकस्येश्वरस्य तत्प्रेर्य्यत्वप्रसक्त्या तस्यासेव्यत्वप्रसंगात् विवर्त्तवादस्यतुअखिलवेदोपदेश स्मृतीतिहासादि प्रबंधगुरुशिष्योपदेशपरंपरा वैफल्यदोषग्रस्तत्वात् तदीयवादान्तराणामपिदोषांतरग्रस्तत्वान्नकथमप्यद्वैतवादउपपद्यते तस्मान्नाम नाम्यन्यतरावादिमतानुपपत्तेः श्रुतिस्मृत्यादिषुतयोर्नित्यत्वश्रवणाच्चनामोच्चारणपूर्वकंनामिस्मरणंस्वरूपानुध्यानपूर्वकंचनामोच्चारणमि त्युक्तमुपपन्नतरं तत्रतत्प्राप्यर्थंस्वरूपानुध्यानस्यावश्यकत्व प्रसिद्धेस्तस्याग्रेवक्ष्यमाणाच्च तद्हृदिनिधायात्र केवलध्यानादिनापिस्वरूपसाक्षात्कारोभवतीति वादनिरासायवाचको पासनेनैववाच्यः साक्षात्कृतोभवतीति तदवश्यमुपासनीयमित्याह यथानामीति ।

**यथानामीवाचकेननाम्नायोभिमुखोभवेत्,**
**तथा बीजात्मकोमंत्रोमंत्रिणोऽभिमुखोभवेत् ।**

॥ २१ ॥

नामास्यास्तीति नामीसंज्ञावान् यः कोपिदेवदत्तादिः सयथावाचकेन नाम्नाकीर्त्यमानेन कीर्त्यमानोऽभिमुखोभवति विमुखोपिसन्मुखो भवतितथाबीजात्मकोमंत्रः वन्हिबीजरूपः बीजंआत्मास्वरूपं यस्येतिवाबीजमात्मनिशरीरे यस्येतिवाए-

वंभूतः षडक्षरोमंत्रः कीर्त्यमानः मंत्रिणो मंत्रप्रतिपाद्यस्य तद्वाच्यस्य श्रीरामस्यमंत्रिणः इतिकर्मणिषष्ठी मंत्रिणमित्यर्थः मंत्रिणां श्रीरामं अभिमुखयति सन्मुखयतीत्यभिमुखः तत्साक्षात्कारहेतुर्भवतीत्यर्थः अत्रापूर्वज्ञातस्वरूपस्तथाऽज्ञातस्वरूपोत्रनामी यथास्वनामोच्चारणेन सन्मुखोभवति तथाज्ञातस्वरूपोपीश्वरः स्वनामोच्चारणमात्रेण साक्षात्कृतो भवतीत्युपायदशायां स्वरूपस्मरणादपि नामोच्चारणस्याधिक्यं सूचितंभवति तथाचस्मृतं रामत्वत्तोधिकंनाम यदुक्त्वैव पुमांस्तरेत् विनापिसेतुनिर्माण मपारंभवसागरमिति केवलनामवादीतुवस्तुतःस्वरूपंनमन्यते इतितन्निरास इतिविशेषोबोध्यः ॥ २१ ॥ अथवक्ष्यमाण पूजांगतयाबीजादिन्यासमाह बीजशक्तीति

**बीजशक्तीन्यसेद्दक्षवा मयोस्तनयोरपि**
**कीलोमध्योविनाभाव्यःस्ववांछाविनियोगवान २२**

बीजमाद्यक्षरं शक्तिरंत्याक्षरं दक्षवामयोः स्तनयो रनुक्रमेणन्यसेदित्यन्वयः कीलोमध्यगतमक्षरत्रयं मध्येस्तनयोरंतराले न्यसनीयमितिशेषः कीदृशःकीलः विनाभाव्यः बीजशक्तिभ्यां पृथक्त्वेनभावनीयः ज्ञातव्यः अन्यथाकीलापरिज्ञानात् सकीलोमंत्रः फलदोनस्यादित्यर्थः यद्वाअविनाभाव्य इत्यकारप्रश्लेषः अविना बीजशक्तिमध्य वर्त्तितया तत्संश्लि

परत्वात् षडक्षरस्यप्रणवकारणत्व द्वारासर्वमंत्रकारणत्व द्योतनाच्च कारणस्वरूपविज्ञानेन तत्कार्य्यस्वरूपविज्ञान- मित्र षडक्षरार्थज्ञानानंतरं तथैवरीत्यामंत्रांतराणामपि स्वस्व- रूपादिबोधकवाक्यार्थस्य स्वतोज्ञानंभविष्यतीति कृत्वानोप निषदंतरेषु कलंक्षणोमंत्रार्थः प्रकाशित इतीममर्थस्वमेव- प्रकाशयतिश्रुतिः सर्वेषामेवमंत्राणामिति तथाचमंत्रार्थ वर्ण- नद्वारापिश्रुत्याषडक्षरस्य सर्वमंत्रकारणत्वासूचनद्वारा तद्वाच्य स्यमंत्रांतरवाच्यादिकारणत्वंसूचितं भवतीत्यत्रधेयं एषःक्रमः सर्वेषामेवमंत्राणांसाधारणःसमानइत्यर्थः कारणार्थपरिज्ञानां- तर्गतत्वात्कर्यार्थपरिज्ञानस्यषडक्षरार्थपरिज्ञानेनैवसर्वमंत्रार्थपरि- ज्ञानं भवतीत्यर्थः षडक्षरस्यसर्वमंत्रकारणत्वंतु जीवत्वेनेदमों यस्येत्यत्र इत्योमितीतिचेत्यत्रचसर्वमंत्रकारणभूत प्रणवका- रणत्वंश्रवणात्तेभ्यः सहस्रगुणतदाधिक्यस्य स्मरणाच्चाव गम्यते यद्वात्रबीजादिन्यासस्यैय वसर्वमंत्रसाधारणः समान- इत्यर्थः अस्मिन्पक्षे ऋतेज्ञानानान्नमुक्ति रितिश्रुत्यास्वरूपा- दिज्ञानरहितस्य मुक्तिनिषेधात्त द्बोधकषडक्षरद्वारैव सर्वेषां मुक्तिरिति मंत्रार्थपरश्रुतिभिः सूचितंभवतीति ज्ञानमार्गंच नामतः इतिश्रुत्या स्फुटंरामनामनाम्नो ज्ञानहेतुत्वोक्तेश्चेति योऽर्वाचीनो मंत्रांतरोपासकः नसर्वेपि भगवन्मंत्रामुक्तिप्रदाः किंत्वेकअष्टाक्षर एवेत्युक्तवानतन्मतं सर्वाथानिरादरणीयं तन्मतेउपनिषत्सु तदुपास्यमंत्रार्थाश्रुत्यातदुपबृंहणीभूतपुरा-

णादिषु तदर्थवर्णानानुपपत्त्या तन्मंत्रस्यापि स्वरूपादिज्ञाना जनकत्वेन मोक्षदातृत्वानुपपत्तेः वयंतुप्रथमपक्षोक्तरीत्यासर्वेपिभगवन्मंत्राः षडक्षरवत्स्वस्वरूपादिज्ञानप्रकाशनद्वारामुक्तिप्रदाः वेदपुराणादिषु सर्वेषांमुक्तिहेतुत्वश्रवणादि त्यवोचामः तेषिपूजांगयंत्रां निरूपयितुंपूजनीयस्य श्रीरामःयरूपंदेवादि कृततत्स्तुतिंचरित्रेणसार्द्धंपंचत्रिंशद्भिराहअत्रेति अत्रलीला विभूतौरामःसीतयाप्रकृत्याभातीति द्वितीयतृतीययो रन्वयः द्वयोर्नित्यसहचारित्वेदृष्टांतः चंद्रश्चंद्रिकया यथेति स्वभूज्यो तिर्मयोऽनंतरूपी त्युक्तस्यवाचकस्य साधर्म्यंदर्शयति अनंत रूपइति अनंतंपरिछेदरहितं वक्ष्यमाणं द्विभुजादिमद्रूपं यस्य सतथोक्तः भावुकानां विभिन्न देशस्थानां उक्तविग्रहेणैव युगपदाविर्भावात् अथवानंतरूपइत्यनेन ब्रह्मणोरूपकल्पनेत्युक्तं तस्यसर्वावतारित्वं सूचितंभवति तस्याग्निरूपत्वमाह तेजसेति तेजसातेजस्स्वरूपे णैकगुणेन वन्हिनासमः अग्नितुल्यः अत्रअलंकारः जगत्प्रकाशकानामग्नि सूर्यादीना मपिप्रकाशकस्य तस्यतेजसा कोट्यग्न्याधिक्योपपत्तेः सोग्नि विभूति कइत्यर्थः अहंवैश्वानरोभूत्वेतिस्मृतेः अथास्य सोमरूपत्वमाह सत्वषणुगुइति चन्द्रविभूतिकइत्यर्थः पुष्णामिचौषधीः सर्वा सोमोभूत्वारसात्मक इतिस्मृतेः अथवा अनंरूप इत्युक्तंतस्य सर्वांतर्यामित्वेन सर्वशरीरत्वात्शरीराणां च शरीरि विशेषणैकस्वभावतया तदपृथक्सिद्धेः सर्वात्मकत्वं स्पष्टयन्

विश्वपालनार्थं मग्निसोमनिष्ठ भोक्तृत्वभोग्यत्वरूप गुण द्वयप्रधानोरामो विश्वरूपश्चे त्तदाकार्यस्य कारणगुणकत्वेन जवदप्यग्निसोमात्मकमित्याह तेजसेतिवन्हिनासमः वन्हिवि- भूतिकत्वेना नेकवन्हिसमतेज स्वित्वोपपत्तेः तेजः प्राधान्या- द्वन्ह्यात्मक इत्यर्थः ॥ २३ ॥ अथास्यसोमात्मकत्वमाह सत्व- नुष्णगुमिति ।

**सत्वनुष्णगु विश्वश्चेदग्निसोमात्मकंजगत् ।**
**उत्पन्नंसीतयाभातिचंद्रश्चंद्रिकयायथा ॥ २४ ॥**

तुशब्दोऽवधारणे योवन्हिरूपः सएवानुष्णगुरूपः इत्य- र्थः अनुष्णगुइत्यत्रविभक्तिलोपः छांदसः अनुष्णाशीताः गावः किरणाः यस्यसोऽनुष्णगुः अत्रापितस्यचन्द्रविभूतिकत्वेना- नेक चन्द्रसमं शीतवत्वोपपत्तेः शैत्यप्राधान्याच्च तदात्मकत्व- मुक्तं भवतिपरस्परं विरुद्धगुणवज्जगत्कारणत्वाच्च विलक्षण- शक्तिमत ईश्वरस्य शीतोष्णविरुद्धगुण वदग्निचन्द्रात्मकत्वेपि नक्षतिः विश्वश्चेदिति विश्वरूपोरामश्चेदग्निसोमात्म- कस्तदा तदुत्पन्नं जगदग्निसोमात्मकंभवितुमर्हतीतिशेषः।

**प्रकृत्यासहितः श्यामःपीतवासाजटाधरः।**
**द्विभुजः कुंडलीरत्नमालीधीरोधनुर्द्धरः ॥ २५ ॥**

श्यामःइंद्रनीलमणिप्रभः पीतवासा पीतांबरधारी जटाधरइत्यत्र जटाशब्दः केशसमूहोपलक्षकः केशवानित्यर्थः नतुसोत्रस्वार्थपरः कुंडलीरत्नमाली त्यादिविरोधात्कल्पतरूस्थस्तूयमानस्य तपस्विवेषवर्णनायोग्याच्च द्विभुजइति विश्वश्चेदित्युक्तस्य जगत्कारणस्य द्विभुजवत्वंवदति वाहू-राजन्य कृतइतिश्रुत्यंतरेपि कारणविग्रहस्य द्विभुजवत्वश्रवणात्धीरः विकारहेतूपस्थिता वप्यक्षोभवान्धनुर्द्धरः भुजयोरन्यत्रोपयोग्यस्य वक्ष्यमाणत्वेपि धनुर्द्धरइत्युक्ति स्तस्यायुध विशेषेषुधनुषो ऽतिप्रियत्वेननित्यसहचारित्वज्ञापनपरा अथवा आदायांकस्थितां कृत्वा स्वपुरंतैर्जगामसः ततःसिंहासनस्थः सन्द्विभुजो रघुनंदनःधनुर्द्धरः प्रसन्नात्मा सर्वाभरणभूषितः मुद्रांज्ञानमयीं यामेवामेतेजः प्रकाशनंधृत्वे त्यादिना अभिषेकानंतरं श्रीहनुमंतं प्रतितत्वोपदेशसमये भुजयोर्ज्ञानमप्यादि मुद्राधारणे उपयोगस्यवक्ष्यमाणादत्रधनुर्द्धशब्दःस्वार्थपरो स्तु।

**प्रसन्नवदनाजेताधृत्यष्टकविभूषितः ॥**
**प्रकृत्यापरमैश्वर्याजगद्योन्यांकितांकभृत्॥ २६ ॥**

सर्वदाप्रसन्नवदनःसदैवप्रियदर्शन इतिस्मृतेः जेतासर्वजिता धृष्टकेतिधृष्टिप्रमृतयो मंत्रिणोवक्ष्यमाणपरिवारभूता स्तेषामष्टकेन विभूषितः पूर्वंप्रकृतिसाहित्यमात्रमुक्तं संप्रतिविशेषतस्तदाहप्रकृत्येतिजगद्योनिपदस्य प्रधानेप्रसक्तिं वारयति परमैश्व-

येति ब्रह्मादीनामपि नियंत्राचिद्रूपया चितेतिवक्ष्यमाणात् अंकितःचिन्हित.अंकः वामांकस्तंविभर्तीति अंकितांक-भृत् इतिश्रीरामेण सीतासंश्लेषत्वमुक्तंभवति इदमपिजटा-शब्दस्य स्वार्थपरत्वंनिषेधयतितपस्विनः स्त्रीसंश्लेषस्त्वायोग्यात् प्रकृतिपदेनसीतायाः प्रधानत्वं प्रासंतन्निषेधायतस्याश्चिद्रूपत्वं विदधत्तया श्रीरामालिंगितत्वमाह ।

**हेमाभयादिभुजयासर्वालंकारयाचिता ॥**
**श्लिष्टकमलधारिण्यापुष्टःकोशलजात्मजः२७**

कीदृशोरामः कोशलजायाः कौशिल्याया आत्मजः तथाहेमाभया द्विभुजया तथासर्वाण्यलंकाराणिभूषणानि यस्यास्तयातथाचिताचिद्रूपयेतिजानकी विग्रहस्यापि चिदात्मकत्वमुक्तं भवति अन्यथास्वरूपेण जीवा-नामपि चिद्रूपत्वात् जगदीश्वरीजानकी विषयकचिते-त्युक्तेर्वैयर्थ्यापत्तेः सुंदरीतंत्रेपि प्रथमपटलस्यादौ श्रीजान-कयाश्चिदात्मकत्वमुक्तं एकांतेवहितांसीतां दिव्यरूपांमनोरमां विश्वाद्यां विश्वजननीं वर्णरूपांचिदात्मकां केवलानुभवा नंदां तेजः पुंजतनूरुहां तडित्पुंजकलाभासां कोटींदुवदन-छविमिति अनेनेदं चिदात्मकं द्विभुजमेव श्रीजानक्याः परात्परं रूपमित्यवगम्यते अगस्त्संहितोक्त जानकी स्तवराजे पि स्फुरतकृपयातस्यरूपं तस्याः परात्पर मित्यस्यानंतरं

वाहूमृणालमंदखंडन पंडितौतेभीताभयप्रदवदान्यतमौ-
जनानामि तितस्यैवपरात्पररूपस्यद्विभुजत्वोक्तेः कमलधारि-
ण्यासीतयाश्लिष्टः वामभागेआलिंगितः अनेनपुनरपितपरिव
वेषधारिणः स्त्रीलिंगतत्वायोग्यात् श्रीरामस्यधार्मिकाग्रगण्य-
त्वाच्च जटाशब्दस्यस्वार्थपरत्वं निषेधितंभवति पुष्टइतितदा-
लिंगनादेवानंदतुंदिल इत्यर्थः अत्रप्रकृतिजगद्योनिशब्दाभ्यां
श्रीसीतायाः जगत्कारणत्वं परमैश्वर्येत्यनेन ब्रह्मादिनियंतृ-
त्वं द्विभुजयेतिजगत्कारणभूताया द्विभुजवत्वं च प्रकाश्य
कारणावस्थायां साचतुर्भुजा कार्यावस्थायांद्विभुजेति मतंनिर-
स्तंभवति तथाअंकितांकभृत श्लिष्टइत्याभ्यां श्रीसीतारामयोः
परस्परं प्रेमविह्वलत्वेन परमरसिकत्वं सूचितं चिताइत्यनेन
तुतद्विग्रहस्यापि चिद्रूपत्वमुक्तं अन्यथाजीवस्या पिस्वरूपत-
श्चिद्रूपत्वात विशेषणवैयर्थ्यस्यात् केचित्तुश्रीजानक्याः प्रधान
रूपत्वं मन्यंतेतदप्यनेननिरस्तंभवति प्रधानस्या चिद्रुपत्वात्
अत्रगोलोकसाकेत समावुभौमुने कदापिभेदोनहिराघवस्ये-
त्याद्युक्तेः नित्यविभूतिस्थस्य लीलाविभूतिस्थस्य च श्रीराम
स्यलीलावर्णने ऐश्वर्यमाधुर्यबोधकोभयविधवाक्य श्रवणाच्च
लीलाविभूतिस्थ श्रीरामविषयक रमापतित्व जगज्जन्मादि-
हेतुत्वोक्ता विवनित्यविभूतिस्थ श्रीरामविषयक कोशलजा-
त्मजत्वाद्युक्तावपिनक्षतिः लीलाविभूतिस्थस्य परविभूति-
नायकत्व ज्ञापनाय कोशलजात्मजाद्युक्तेः सार्थक्यात् ॥ २७ ॥

दक्षिणे लक्ष्मणेन श्लिष्ट इत्याह ।

दक्षिणेलक्ष्मणेनाथ सधनुःपाणिनापुनः ।
हेमाभेनानुजेनैवतदाकोणत्रयंभवेत् ॥ २८ ॥

अथापरे दक्षिणेभागेसधनुः पाणिर्यस्यतेनसधनुःपाणिना सुवर्णप्रभेणा नुजेनलक्ष्मणेनपुनः श्लिष्टः संवद्धइत्यर्थः तदेतिश्रीसीताराम लक्ष्मणा स्त्रयोनिर्दिष्टा स्तदाश्रयत्वेन कोणत्रयं त्रिकोणंभवेत् त्रिकोणस्ययोन्याकारत्वात् श्रीरामशरीर भूतस्यास्य यंत्रभागस्य जगत्कारणतासूचिताभवति २८॥ लक्ष्मणस्यापि पूजांगभूतो मंत्रोऽस्तीत्याह ।

तथैवतस्यमंत्रश्चयश्चाणुश्चस्वङेंतया ।
एवंत्रिकोणरूपंस्यात्तंदेवायेसमाययुः ॥ २९

यथाश्रीरामस्य मंत्रस्तथैव तस्यलक्ष्मणस्य मंत्रोऽस्तीत्यन्वयः लक्ष्मणमंत्रमुद्धरति यश्चाणुश्चस्वङेंतयेतिग्रणुशब्दोमंत्रवाचीयोऽणुर्योमंत्रो लक्ष्मणसंवंधीसस्वङेंतया ज्ञातव्य इतिशेषः स्वशब्देनवीजनाम्नी परामृश्यतेतेङे इतिचतुर्थ्येकवचनं अंतशब्दोत्रभावप्रधानः अथवास्वङेंततयेति वक्तव्योऽक्षराधिक्यभयादेकस्य तकारस्यलोपश्छांदसः स्ववीजनामचतुर्थ्यंतत्वेन लक्ष्मणमंत्रोज्ञातव्यः चकारोनमोंतत्वसमुच्चयार्थः अत्रश्रीसीतामंत्रानुक्तेः सीतारामौतन्मयावत्रेति श्रीराममंत्रा-

स्यैव तन्मंत्रत्वसूचनाच्च श्रीसीताया अपिजगत्कारणत्वोक्तेः परमकारणत्वोक्तेः परमकारणद्वयानुपपत्तेश्च श्रीसीतारामयोः सर्वथाऽभेदत्वं सूचितंभवति तथैवोक्तं शिवसंहितायां एकंब्रह्मद्विधागत मिति अथवात्रप्रथमचकारोनमोंतत्वसमुच्चयार्थः द्वितीयश्चकारः श्रीसीतायैस्वाहेति जानकीमंत्रसमुच्चयार्थः तथापिश्रीसीतारामौतन्मयावत्रेत्यनेन श्रीराममंत्रस्य श्रीजानक्याअपि वाचकत्वनिर्देशेन केवलषडक्षरोपासनेन श्रीसीताप्युपासिता भूत्वाप्रीताभवतीत्यवधेयं अथवा रेफारूढामूर्तयः स्युरित्यारभ्यतादात्मिकायाचतुर्थी तथाचायेतिकथ्यतइत्याभ्यां श्रुतिभ्यांरामस्यरांरामायनमइति मंत्रोनिर्दिष्टस्तस्यलक्ष्मणस्याचकारात श्रीसीतायामंत्रोज्ञेयः योऽणुः श्रीबीजं ङेंतयास्वनामसीतायैइत्यर्थः द्वितीयश्चकारः स्वाहेतिसमुच्चयार्थः तेनश्रीसीतायैस्वाहा इति श्रीसीतामंत्रोपिज्ञेयः॥ यथागस्त्यसंहितायांश्रीबीजाद्योपिसीतायैस्वाहान्तोयंषडक्षरः। एवंलंलक्ष्मणायनमः इतिलक्ष्मणमंत्रः क्वचित्तुनमोन्तोपि श्रीसीतामंत्रः दृश्यते एवंरामाद्यधिष्ठितं त्रिकोणमुपसंहरति एवमितितंदेवाइति एवंत्रिकोणाधिष्ठातारं श्रीजानकीलक्ष्मणोपेतंदेवं श्रीरामंयेरावणपीडिता देवाइन्द्रादय तेशरणंययुः प्रापुरित्यर्थः २६॥स्तुत्यापिप्रभुःप्रसीदतीति वाक्यमभिप्रेत्याह।

**स्तुतिंचक्रुश्चजगतः पतिंकल्पतरौस्थितं।**
**कामरूपायरामाय नमोमायामयायच ॥३०**

कल्पतरौस्थितं तदधः रत्नसिंहासनस्थं जगतः पतिं स्तुतिंचक्रुश्चतुष्टुवुश्चेत्यर्थः स्तुतिप्रका माह कामरूपायेति हेस्वामिन्कामरूपाय कामवत्सुन्दरवपुषे कामेनस्वेछया व नि चतुरष्टषोडशाष्टदशहस्तान्त भुजावन्तिरूपाणि यस्य सकाम रूप स्तस्मैकामरूपायेति वा मायामयाय ज्ञानमयाय माया-वयुनं ज्ञानमिति ज्ञानपर्यायोत्र मायाशब्दः नैघटुकैः पठ्यते यद्वामायायास्त्रिगुणात्मिकायाः आमयाय रोवद्धिघातका य रामायसुंदरवपुषे योगिनां रमणस्थानाय नमइत्यन्वयार्थः ।

**नमोवेदादिरूपायओंकारायनमोनमः ।**
**रमाधरायरामायश्रीरामायात्ममूर्त्तये॥३१**

वेदानामादिर्वन्हिवीजं तदेवरूपं यस्य अतएवओंका-राय तत्कार्यभूतप्रणवस्वरूपाय वह्निवीजवाच्यत्वेनैव तत्का-र्य्य भूतप्रणवस्यापिवाच्यायेत्यर्थः यद्वावेदानामादाविदं दृश्य-मानंरूपं यस्य अतएव ॐ कारायवेदादिभूतस्य ॐ कारस्य-वाच्याय अथवावेदानामृगादीना मादिरूपायकारणात्मने न्निश्वासन्यायेना विर्भावकायेत्यर्थः यस्यनिश्वसितदृग्वेदेत्या-दिश्रुतेः ते न नवेदानांपौरुषेयत्वप्रसक्तिः ॐकारायवेदादिभूत-प्रणवस्वरूपाय तद्वाच्यायवानमः रेमां स्वरमयितारं राममपि रमयतीतिरमासीता तामति प्रीत्यावामांके धरतीति तथोक्त स्तस्मैरमाधरायरामाय सर्वाभिरामाय रामोलोकाभिरामोयमिति

वाल्मीकिस्मरणात् नमोस्तुरामदेवाय जगदानंदरूपिणे इति-सनत्कुमारस्मरणाच्च श्रियंरमयतीतिश्रीरामस्तस्मै आत्ममूर्त्तये स्वात्मनि चतुर्भुजाद्यामूर्त्तयोयस्य स्वेच्छया स्वस्माच्चतुर्भुजादि मूर्त्याविर्भावकायेत्यर्थः ततस्त्वमसिदुर्धर्ष स्तस्माद्भावात्सनातनात् रक्षांविधास्यन्भूतानां विष्णुत्वमुपजग्मिवानि त्यादिवाल्मीकि-स्मरणात् अथवात्ममूर्त्तयेव्यापकमूर्त्तयेविश्वव्यापीराघवोय स्त-दानीमंतर्दधेइतिवक्ष्यमाणात् भावुकानांहृदिसविग्रहस्यैवावि-र्भावाच्च अथवाय:सच्चिदानंदात्मा सएवमूर्त्तिर्यस्य सतथोक्तः स्वरूपतः विग्रहतश्च सच्चिदानंदरूपायइत्यर्थः चिन्मयेस्मिन् चिन्मयस्याद्वितीयस्ये त्येवमादिश्रुतिभ्यः सत्यंचिदानंदमयं स्वरूप मिति श्रीशार्ङ्गधारिणांरामं चिन्मयानंदविग्रहं विराम-महातेजा सच्चिदानन्दविग्रहः इत्येवमादिस्मृतिभ्यश्च ॥३१॥

**जानकीदेहभूषायरक्षोघ्नायशुभांगिने ।**
**भद्रायरघुवीरायदशस्यांतकारूपिणे।३२।**

जानकीसीतादेहएवभूषा शरीरालंकारोयस्य सः यद्वा जानकीदेहः सीताशरीरं तस्मिन्भूषाभूषणरूपः तस्मै रक्षोघ्ना-य राक्षसंहन्त्रे शुभांगिने सुंदरांगाय अतएववाल्मीकिनोक्तं रूपंसंहननंलक्ष्मीं सौकुमार्यंसुवेषतां ददृशुर्विस्मिताकाराः राम-स्यवनवासिन इति तथैवपाद्मेप्युक्तं पुरामहर्षयः सर्वेदंडकार-ण्यवासिनः दृष्ट्वारामंहरिंतत्र भोक्तुमै च्छन्सुविग्रहमिति भद्रा

यमंगलरूपाय रघूणामध्येवीराय दशास्यस्य रावणस्य विष्णवा-द्यवध्यस्याप्यंतकरूपाय अत्रप्रतिपदं श्रीरामस्यरसिकत्वं तद्विरोधिविघातकत्वं सूचितंभवती त्यवधेयं ॥ ३२ ॥

**रामभद्रमहेष्वासरघुवीर नृपोत्तम ।**
**भोदशास्यांतकास्माकंरक्षदेहिश्रियंचते ॥३३**
**त्वमीश्वर्य्यादाययाथसंप्रत्याश्वरिरमारणं ।**
**कुर्विंतिस्तुत्पदेवाद्यास्तेनसार्द्धसुखंस्थिता: ॥३४**

युग्मं भद्राणिकल्याणानियस्मात् महद्दिव्यंइष्वासं शार्ङ्गधनुर्यस्य सरघूणांमध्येवीर: रघुवीर स्तत्संबोधने हे रघुवीर नृपाउत्तमायेन दशास्यांतकेति पुनर्विशेषणम् दशास्यवधएवास्माकमाशास्यइतिद्योतनायअस्माकमितिकर्मणिषष्टीअस्मान् रक्षराव णोपद्रवातत्राहीत्यर्थ: तेइतितच्छव्दस्य स्त्रीलिंगस्य द्वितीयाद्विवचनंइदमुत्तरश्लोकेनसंबध्यते॥ ३ ३॥त्वमितिहेराम-त्वं ईश्वर्य्यानियं न्यासीतया अथअपिचतेद्वेरक्षाश्रियौदाय-तीदं वचनमन्यथा उपपद्यमानं रक्षाश्रीदाने रामादपिजानक्या अधिक्यं सूचयति सम्प्रतिवर्त्तमाने रावणोपद्रवकाले आशु-शिघ्रंअरे: रावणस्य मारणं कुरु अथस्तुतिफलमाह इतिस्तु-त्येति इति शव्देन सहस मासमभिप्रेत्यल्पप् इति स्तुतिं कृत्वादेवाद्या आदि शव्देन सिद्धचारण किन्नरादय इति स्तुतिं कृत्वा तेन सार्द्धं ध्यान विषयी कृतेन तेन स

ससुखंयथास्यात्तथास्थिताः ॥२४॥ अत्रदेवैरृषिभिश्चकृतयोः तुत्योर्देशकालयोर्भेद इत्यवगम्यते देवकृतस्तुतेः कल्पतर्वा-- धःस्थ श्रीरामविषयत्वात् समाययुः स्तुतिंचक्रुश्चेति तस्या स्तुतेः भूतकालीनत्वनिर्देशेन वनवासात्पूर्वकालीनत्व सूच- नात् वनवासिनस्तु कल्पतर्वधः स्थत्व कुंडलित्वरत्नमालित्व पीताम्बरधारित्वाद्ययोग्यात् धृष्ट्य कविभूषितत्वस्यानुपपद्य- मानत्वाच्च ऋषिकृतस्तुतेः वनस्थश्रीरामविषयत्वात् रामपत्नी वनस्थामित्युक्तेः स्तुवंतीतितस्यावर्त्तमान कालीनत्वनिर्देशा- च्चरामोलक्ष्मण एवच तदाविचेर तुरित्येवकारेण सहायांतर व्यवछेदकेन तदाधृष्ट्यकविभूषित्व प्रतिषेधाच्च तथाचदेवा- दिस्तुतेः पूर्वमुक्तोजटाशब्दोनस्वार्थ परः ॥ वस्तुतस्तु इति रामपदेनासौ परंब्रह्माभिधीयते चिन्मयस्याद्वितीयस्य ब्रह्मणो रूपकल्पनेति सर्वावतारित्वेनोपक्रमात् तथैवनैनं विनादेवः प्रसीदति सर्ववाच्यस्येति जगत्प्राणायात्मनो आत्मारामेतिगी यतेइत्याभ्यासात् पुनश्चश्रीरामचरित्रवर्णनसमये अत्ररामोऽनंत रूपस्तेजसा वह्निनासमः सत्वनुष्णगु विश्वश्वेदिति जग- त्कारणत्वे नोपक्रमात् प्रकृत्यासहितः श्यामः धृष्ट्यष्टकवि- भूषितः प्रकृत्यापरमैश्वर्या जगद्योन्यांकितांकभृदिति तथैवा- भ्यासात्स्तुतिं चक्रुश्चकल्पतरौस्थितं जगतः पतिमिति तथैवो पसंहाराच्च देवकृतऋषिकृतस्तुत्योः देशकालभेदसूचनाच्चे- त्यवगम्यते जगत्कारणभूतं सर्वावतारिणं सर्वालंकारालंकृत

द्विभुजं जगद्योन्यासर्वालंकारालंकृतया चिद्रूपया द्विभुजया श्रीजानक्या सहनित्यविहारतत्परं विहारादुपरम्यकल्पतर्वधः सिंहासनस्थं प्रसन्नवदनं ज्ञात्वास्वार्थपरारावणोपद्रवा दत्यं-पीडिताश्च देवाशरणंगत्वारावणवधाय तुष्टुवुस्ततः श्रीरामः देवादिप्रार्थित रावणवधघटनार्थं श्रीदशरथलब्धवर कैकेयि-वरयाचनादि मिषेणवनं जगामेतिवनस्थं तं रावण पीडिता ऋषयो पितद्वधार्थं तथैवतुष्टुवुस्तदा तद्वधघटनाय तत्कर्मा नुसारेण श्रीरामेणप्रेरितो रावणः सीतांजहारेति वैदिकीप्रक्रि-यातद्विरुद्धार्था काचित्पौराणिकी प्रक्रियाचेत्तदासाऽप्रमाणि-केतिवक्तव्या यद्यपितथापि वेदार्थज्ञ प्रणीतै-वसाचेत्तदा वेदार्थानुकूल्येन नेतव्या तथा च देवाद्याः क्षीराब्धितटंगत्वा स्वाभीष्टसिद्ध्यर्थं नारायणंतुष्टु-वुः स रामरूपोवभूव श्रीदशरथयज्ञेविष्णुरागत्य तं वरं दत्वा तत्पुत्रोवभूव हरिस्तद्रूपोवभूवे त्याद्यर्थकः आर्षेयवाक्यप्रवंधः श्रीरामेप्रातीतिक मनुष्यत्व बुद्धिनिरासार्थः तदीयपराक्रमाद्या-धिक्यदर्शनजन्यदेवतांशत्व बुद्धिनिरासार्थश्च न तु विष्णु-नारायणादिकार्यत्व सूचनार्थः एकस्य चेतनस्यानेकचेतन-कार्यत्वानुपपत्तेः तेषामन्यतरस्यकार्यत्वोक्तौविनिगमनाविरहाच्च विष्णुनारायणादि नाम्नां पर्यायवाचित्वस्वीकारे श्रीरामना-म्नोपि तत्पर्यायवाचित्वोपपत्तेः स्वस्वोपनिषत्सु विष्णवादीनां जगत्कारणत्व श्रवणेपि सर्वावतारित्वा श्रुतेश्चप्रत्युत उपा-

सकानां कार्यार्थं ब्रह्मरूपकल्पने त्यत्रतापिनीय चरममंत्रेषु च श्रीरामस्यैव सर्वावतारित्व सर्वरूपत्व श्रवणात् किंबहूनां विष्णवादिनामभ्यः श्रीरामनाम्नः सहस्र गुणाधिकयोक्तेस्त-द्वाच्येभ्योपि तद्वाच्यस्य सहस्रगुणाधिक्योपपत्तेः श्रीरामस्यैव सर्वकारणत्व सिद्धेश्चेत्य लमिति विस्तरेण प्रकृतमनुसरामः एवंरावणवधार्थं देवादिभिः प्रार्थितः श्रीरामोविहारभूमिस्थोपि विष्णवाद्यवध्यंतं ज्ञात्वाति कारुणिक तयादेवादीनामभीष्ट सिद्धये रावणस्यनित्यसुखप्राप्तये च तद्वधघटनार्थं कैकेयी दशरथवरयाञ्चादि मिषेण वनंजगामेति वनस्थंतं देवादिव द्दषयोपि स्तुवन्तीत्याह स्तुवंत्येव मिति।

**स्तुवंत्यवं हिऋषयस्तदारावणआसुरः।**
**रामपत्नींवनस्थांयः स्वनिर्वृत्यर्थमाददे ३५**

एवंदेवादि वत्रावणपीडिता ऋषयोपि स्तुवंतीतिवर्त्तमान-निर्देशस्तु कालभेदेनस्तुत्यो र्भेदज्ञापनार्थं अन्यथाऋषयोपि-स्तुतिंचक्रुः ऋषयोप्यस्तुवन्नेवमित्येयं चोक्तंस्यात देवादिभिः स्तुतौकृतायामपिगाढापराधं विनाशिवभक्तरावण वधस्यानौ-चित्यात् गाढापराधकरणायतत्कर्मानुसारेणातदंतर्यामि प्रेरितो-रावणः सीतांजहारेतिवदन्नेव रावणपदनिरुक्तिमाह तदारावण इतितदा ऋषिस्तुतिकाले योरावणोऽसुरएवासुरः राक्षसोराम-पत्नींवनस्थां स्वनिवृत्यर्थं स्वसंसारनिर्वृत्यर्थंनिर्वृत्यर्थमिति-

पाठश्चेत्तदा स्वमरणोत्तरकालीनभगवत्प्राप्तिजन्यानंदार्थमाददे गृहीतवान सरावण इतिख्यात इन्युत्तरश्लोकेनान्वयः अत्ररा-मपत्नीमित्यर्थकात् राशब्दात् वनस्थां जहारेत्यर्थकेवनशब्देप्र-युक्तेनिरुक्तिः रिय्थंरावरा इतिनिरुक्त्यन्तरमाह यद्वारावादिति।

सरावणइतिख्यातोयद्वारावाच्चरावणः ।
तद्व्याजेनेक्षितुंसीतांरामोलक्ष्मणएवच ॥ ३६
विचेरतुस्तदाभूमौदेवींसंदृश्यचासुरं ।
हत्वाकवंधंशवरींगत्वातस्याज्ञयातया ॥ ३७
पूजितावीरपुत्रेणभक्तेनचकपीश्वरं ।
आहूयशंसतांसर्वमाद्यंतंरामलक्ष्मणौ ॥ ३८

त्रिभिःसंवधः रावाद्रोदना द्वारावणं इत्यर्थः अथ च्चरित्रमाहसार्द्धैकादशभिः तद्व्याजेनेति रामलक्ष्मण एव सीतांदेवी मीक्षितुं तदासीताहरणोत्तरकाले भूमौविचेरतुः एवकारसहायांतरव्यवच्छेदार्थः चकारोमिथः समुच्चयार्थः तद्व्याजेनहृतसीतान्वेषणव्याजेन कवंधनामकमसुरं दृश्यहत्वा चतस्य कवंधस्याज्ञया आभिमुख्ये नविज्ञप्त्या शवरींगत्वा तयाशवर्यापूजितौरामलक्ष्मणौभक्तेन ईरयतीतिईरो वायुस्तस्य वायोः पुत्रेणहनुमताद्वारभूतेन च कपीनामीश्वरं सुग्रीवमा-हूयसर्वं वृत्तान्तं आद्यन्तावभिव्याप्यशंसतां उक्तवन्तौछान्द-

सत्वाद्दंडभावः ॥३६॥३७॥३८॥

सतुरामेशंकितः सन्प्रत्ययार्थंच दुं-दुभेः। विग्रहं दर्शयामासयोरामस्तमचि-क्षिपत् ॥ ३९ ॥

सतुकपीश्वरो रामविषयेशंकितः वालिवधलक्षणं महत्कार्यंकर्त्तुमयंक्षमोनवेति संशयितः सन्प्रत्ययार्थं च वालि-वधसामर्थ्यं श्रीरामेनिर्णेतुं वालिव्यतिरेकेणावध्यस्य दुंदुभे-र्दैत्यस्य विग्रहंशरीरं वालिनिष्पिष्टं अस्थिकूटावशेषं पर्वत-प्रायंदर्शयामासेत्यर्थः योरामइतियः सुग्रीवजिज्ञासितः सरा मस्तंदुंदुभिविग्रहं अचिक्षिपत् दशयोजनमितिशेषः अत्रचौ-रादिकत्वात् स्वार्थेणिच ॥ ३९ ॥ तथापिवालिसमएवायंनतु तदधिक इतिसुग्रीवभ्रमंनिरासार्थं कृतंतद्भुतं कर्मदर्शयति।

सप्ततालान्विभिद्याशु मोदते राघव-स्तदा । तेनहृष्टः कपींद्रासौसरामस्त-स्यपत्तनं ॥ ४० ॥

आशुशिघ्रं सप्ततालान् तालवृक्षान् विरुद्धदिक्स्थाने केनेषुणाविभिद्य राघवोमोदते इत्यर्थः छंदसिकाला नियमात् भूतेलट् तदादुंदुभिशरीरप्रक्षेपतालभेदोत्तरकाले तेनाद्भुत

कर्मणा हृष्टोसौकपींद्रः सुग्रीवो वालिनोनुजः सरामः तस्य वालिनः पत्तनंकिष्किंधोपलक्षितं जगाम अगंजदित्युत्तरश्लोकेनान्वयः ॥४०॥

**जगामागंजदनुजोवालिनो वेगतोगृहात् । वालीतदानिर्जगाम तंवालिनमथाहवानिहत्यराघवोराज्ये सुग्रीवंस्थापयेत्ततः ॥ ४१ ॥**

जगामागंजदनुजइत्यादिभिः त्रिभिःसंबंधः तदासुग्रीवगर्जनकाले वालीवेगतो गृहान्निर्जगाम अथ राघवस्तंवालिनमाहवे निहत्य सुग्रीवं राज्येस्थापयेत् अस्थापयदित्यर्थः छांदसत्वाल्लडर्थेलिङ् ॥ ४१ ॥

**हरीनाहूय सुग्रीवस्त्वाहचाशाविदोऽधुना । आदायमैथलीमद्यददताश्वाशुगच्छत ॥ ४२ ॥**

सुग्रीवस्तु हरीन्वानरानाहूयाह चकिमाहेतिचेत्तत्राहहे आशाविदःदिशांज्ञातारोवानराः यूयंअधुना इदानीमेवक्षणे आशुवे गातिशज्ञापनाय वीप्सागच्छत अद्यदिनेमैथिलीमादायआनीयराघवस्यददत ॥ ४२ ॥

ततस्ततार हनुमानब्धिंलंकां समा-
ययौ। सीतांदृष्ट्वाऽसुरान्हत्वापुरंदग्ध्वा
तथास्वयं ॥ ४३ ॥
आगत्यरामेणसहन्यवेदयत्तत्वतः ॥४४॥

ततस्तदनंन्तरं हनुमानब्धिं ततारलंकां चसमाययौ सीतांदृष्ट्वा ऽसुरान्राक्षसान् हत्वापुरंलंकां दग्ध्वातथास्वयं रामेणसहागत्य संवंधंप्राप्यतत्वतः याथातथ्येन सर्वंरामायन्य वेदय दित्यन्वयः ॥४३॥४४॥

तदारामः क्रोधरूपीतानाहूयाथवान-
रान्। तैःसार्द्धमादायास्त्रांश्चपुरींलंकां-
समाययौ ॥४५॥

तदाहनुमन्निवेदनोत्तरकाले क्रोधेनरावणादुर्विनय-श्रवणजनितेना विष्कृतंरूपंयस्यस रामःक्रोधरूपी अथतान् वानरानाहूय अस्त्रानअस्त्राणिआदाय तैर्वानरैः सार्द्धंलंकां-समाययौ ॥ ४५ ॥

तांदृष्ट्वात्तदधीशेनसार्द्धंयुद्धमका-
रयत् । षटश्रोत्रसहस्राक्षाजिह्वायुक्त-
तमाहवे ॥ ४६ ॥

हत्वाविभीषणंतत्रस्थाप्याथजनका-
त्मजाम् । आदायांकस्थितांकृत्वास्व-
पुरंतैर्जगामसः ॥४७॥

रामस्तांलंकांदृष्ट्वातदधीशेनलंकाधीशेनरावणेन सार्द्धं युद्धमकारयत् अकरोत्स्वार्थैरणेच घटश्रोत्रःकुम्भकर्णः सहस्राक्षजित् इंद्रजित् ताभ्यांयुक्तंतंरावणं आहवेयुद्धेहत्वा तत्र-लंकायां तदाधिपत्येन विभीषणंस्थाप्यस्थापयित्वा अथ जनकात्मजामादायांकस्थितांकृत्वा इत्यनवसरेपिश्रीजानक्याः श्रीरामांकस्थितत्वोक्त्या श्रीराघवस्यपरमरसिकत्वंसूचितंभवति तैःविभीषणसुग्रीवादिभिः सःरामः स्वपुरंजगाम ॥४६॥४७॥

ततः सिंहासनस्थःसन् द्विभुजोरघु-
नंदनः । धनुर्द्धरःप्रसन्नात्मासर्वाभरण-
भूषितः ॥ ४८ ॥

ततोराज्याभिषेकानंतरं सिंहासनस्थःसन् द्विभुजोरघुनंदनः धनुर्धरः भुजस्थितचापः द्वयोर्भुजयोर्मुद्राधारणस्यानंतरंवक्ष्यमाणत्वेपि धनुर्धर इत्युक्ति स्तदायुधविशेषेषुधनुषः तन्नित्य-संयोगित्वं सूचयति प्रसन्नात्मा सर्वाभरणभूषित आसीदिति शेषः ॥४८॥

मुद्रांज्ञानमयींयामेवामे तेजः प्रकाशनं । धृत्वाव्याख्याननिरतश्चिन्मयः परमेश्वरः ॥ ४९ ॥

कीदृशोरामः यामेदक्षिणभुजे ज्ञानमुद्रांधृत्वा कनिष्ठाद्यंगुलित्रयंप्रसार्य्य हृदयाधिमुखतर्जन्यं गुष्टाग्रसंयोगो ज्ञानमुद्रा वामेतेजः प्रकाशनंधृत्वा वामजानुमंडलं वामभुजयावलेनापीड्येत्यर्थः व्याख्याननिरतः इतितस्यशास्त्रोपदेष्टृत्वंदर्शितं भवति हनुमंतं च श्रोतारमिति वक्ष्यमाणात् एतेनहनूमतः श्रीरामशिष्यत्वं सूचितं शासनार्हस्यैव शिष्यत्वात् तस्यतुशासनार्हत्वेनैवाग्रतोधृत्वा श्रोतृत्वकरणात् अतएवतन्मालामंत्रेतस्य सकलमंत्रागमाचार्येति सकलमंत्रागमाचार्यत्वस्मरणेन संप्रदायप्रवर्त्तकत्वावगमात् ततस्तु श्रीहनुमदनुयायिनां हनुमतइव श्रीरामानन्यभक्तानां श्रीरामसंप्रदायित्वेन श्रीरामगोत्रत्वंबोधव्यं चिन्मयः इति तद्विग्रहस्यापि चिद्रूपत्वमुक्तंभवति अन्यथास्वरूपतोजीवस्यापिचिद्रूपत्वेन चिन्मयत्ववचनंनिरर्थकंस्यात परमेश्वरः ब्रह्मादीमपि नियंतेत्यर्थः ४९ । तदेवमत्रश्रीरामचरित्रोपक्रमे अत्ररामोऽनंतरूप स्तेजसांवन्हिनासमः ॥ सत्वनुष्णगुविश्वश्चे दग्निसोमात्मकंजगत् । द्विभुजः कुंडलीरत्नमालीधनुर्धरः ॥ इत्यादिनाजगतकारणस्य द्विभुजत्वंधनुरायुधत्वं चोक्त्वापुनस्तदुप-

संहारे द्विभुजोरघुनंदनः धनुर्धरःप्रसन्नात्माचिन्मयःपरमेश्वरः इत्युक्त्यातस्यपरमेश्वरस्य द्विभुजत्वंधनुर्धरत्वंचस्वभाविक-मितिस्फुटीकृतं नचदाशरथिमात्रस्यद्विभुजत्वमुक्तमितिवाच्यं जगत्कारणावस्थायां तस्यद्विभुजत्वानंगीकारे अनंतरूपः विश्वश्चेदग्निसोमात्मकंजगत् चिन्मयः परमेश्वर इत्यादि विशेषणवैयर्थ्यापत्तेः बाहूराजन्यकृत इतिकारणवाचकश्रुत्यं-तरश्रुतद्विभुजत्व विरोधाच्च ननुपूर्वतापिनीयांते गदाब्जशं-खादिधरंभवारिं तथा शंखचक्रेगदाब्जेधृत्वांतर्दधे इतिचतु-र्भुजस्यापिलिंगमुक्तं तेनेदंज्ञायते लीलाविभूतौद्विभुजोधनुर्ध-रोपिसन्स्वर्गारोहणसमये चतुर्भुजः सन्शंखादिकंधृत्वास्वधामा-गमदितिचेन्नअभ्यासलिंगसहकृतयाद्विभुजश्रुत्याअभ्याससहा-यस्यचतुर्भुजलिंगस्यबाधात् लिंगाच्छ्रुतिर्बलीयसीतिमीमांसको-क्तेश्चतदाशंखचक्रादिधारणोक्तेःद्विभुजधनुर्धराच्छ्रीरामात्परमे-श्वरात्शंखचक्रादिधरः परमेश्वरः कश्चिदन्योसएवायंइत्यादि-शंकानिवृत्यर्थकत्वेनान्यथासिद्धेः तापिनीयोपबृंहणभूतेवाल्मी-कीयेपिभ्रातृभिः सहदेवाभैः प्रविशस्वस्वकांतनुं विवेश वैष्णवंतेजः सशरीरः सहानुजः इतितथाशरानानावि-धाश्चैव धनुरायत्तमुत्तमंपंचायुधाश्चतेसर्वेययुःपुरुषविग्रहाःइति-चद्विभुज विशिष्टस्यस्वार्गारोहणोक्तेः शंखादिपंचायुधानांमू-र्त्तिमतांच तेनसहगमनोक्तेश्च तापिनीयदृष्टचतुर्भुज लिंगस्या-न्यथा सिद्धेः तत्रत्यस्यगदाब्जशंखादिधरं भवारिंयोध्यायेदि-

त्यस्यवाक्यस्य गदाद्युपलक्षितं सयोध्याये दित्यर्थकत्वोपपत्तेः तथाशंचचक्रेगदाब्जेधृत्वाइत्यस्य शंखादीन्स्वेनसहनीत्वात्ते-षांस्वसमीपेऽतर्धानतयास्थितानां प्रकटीकृत्यान्तर्दधे इत्यर्थक त्वोपपत्तेश्चेतिसंक्षेपः अथयंत्रमुद्धरति उदग्दक्षिणयोरिति ।

## उदग्दक्षिणयोः स्वस्यशत्रुघ्नभरतौधृतः ।

पुनः कीदृशोरामः स्वस्यउदग्दक्षिणयोः भागयोःशत्रु-घ्नभरतौधृतः धृतवान्कर्त्तारिक्तः ।

## हनूमंतं च श्रोतारमग्रतः स्यात्त्रि-कोणकं । भरताधस्तुसुग्रीवं शत्रुघ्नाधो-विभीषणं ॥५०॥

स्वस्याग्रतः हनूमंतंचधृतः धृतवान् अत्राग्रतइतिपदं श्रीरामस्याग्रभागे हनुमत्स्थितिं सूचयन् तत्स्थिति देशं पूर्व देशंशूचयति तद्देशस्य श्रीरामस्याग्रतनदेशत्वात् पूजकस्यतु श्रीरामसन्मुख स्थित्यौचित्यात् पूज्यपूजकयोर्मध्यं पूर्वस्यादिति स्मृतेश्च पुनः पश्चिमे लक्ष्मणंधृत्वेति हनुमत् सन्मुखस्थलक्ष्म-णस्य श्रीरामपश्चिम देशस्थत्ववचनानुरोधाच्च कीदृशंहनुमंतं श्रोतारं वक्ष्यमाणषट्कोणावयवभूतमुपपादितं त्रिकोणमुप-संहरति स्यात्त्रिकोणकमिति षटकोणावयवभूतं त्रिकोणांतरं निरूपयति ।

भरताधस्तुसुग्रीवं शत्रुघ्नाधोविभीषणमितिधृतवान् । ५१ ।

पश्चिमे लक्ष्मणं धृत्वा धृतच्छत्रं सचामरं । तदधस्तौ तालवृंतकरौ त्र्यस्रं पुनर्भवेत् ॥ ५२ ॥

पश्चिमेबीजस्यस्वस्यपश्चिमभागे पश्चिमदिक्स्थे द्वितीयं त्रिकोणस्यकोण इत्यर्थः लक्ष्मणंधृत्वाधृतवान् कीदृशंतंधृतछत्रं सचामरं चामरछत्रधृतवंतमित्यर्थः सुग्रीवविभीषणौतुव्यजनहस्तावित्याह तदस्ताविति तदधः तयोर्भरतशत्रुघ्नयोधस्तौ सुग्रीवविभीषणौतालवृंतकरौ व्यजनहस्तौधृतवानित्यर्थः द्वितीयत्रिकोणमुपसंहरति त्र्यस्रंपुनर्भवेदिति त्र्यस्रंत्रिकोणं ।

एवं षट्कोणमादौस्वदीर्घांगै रेफसंयुतः द्वितीयंवासुदेवाद्यैराग्नेयादिषुसंयुतः ॥ ५३ ॥

एवंत्रिकोणद्वयस्यमेलने षट्कोणंभवेदितिपूर्वेणौवक्रियापदेनान्वयः अत्रेयंव्यवस्था प्रथमंषट्कोणंलिखित्वा तन्मध्यगेकोष्ठेश्रीरामरूपंवह्निबीजंलिखेत् तस्यबीजस्यदक्षिणभागे-

प्रथमत्रिकोणस्यदक्षिणकोणवहिर्भागे भरतमंत्रवीजंलिखेत् वीजस्योत्तरदिक्स्थेतस्यैवत्रिकोणस्योत्तरकोण वहिर्भागेशत्रुघ्नवीजंलिखेत् वीजस्यपूर्वदिक्स्थे तस्यैवत्रिकोणस्यपूर्वकोणे वहिर्भागेहनुमद्वीजंलिखेत् पुनः वीजस्यदक्षिणादिक्स्थेद्वितीयत्रिकोणस्य दक्षिणकोणे भरतकोणादधस्तातलिखिते सुग्रीववीजंलिखेत् तस्यैवोत्तरदिक्स्थे द्वितीयत्रिकोणेस्योत्तरकोणेवहिर्भागेविभीषणवीजंलिखेत्वीजस्य पश्चिमदिक्स्थे तस्यैवत्रिकोणस्यपश्चिमकोणे वहिर्भागेलक्ष्मणवीजंलिखेत्एवं तत्तद्वीजसहितंषट्कोणंकुर्यात् अथपूज्यस्यश्रीरामस्यपौर्वापर्येनांगाद्यावरणानिवक्ष्यन् प्रथमषट्कोणांतर्गतमंगावरणमाह आदौस्वदीर्घांगैरिति आदौप्रथमावरणेहनुमदादीनांचतुर्थावरणेपूज्यत्वविधानात् एवंकर्णिकास्थितोरामः षटकोणेषुस्वशब्देनरांवीजंतेनयोजिताः दीर्घा आ ई ऊ ऐ औ अः तेषट् रां रीं रूं रैं रौं रः इत्येवंरूपाः भवन्ति तैर्युक्तानिअंगानिहृदयादीनिषट्तैर्युक्तः पूज्यइतिवक्ष्यमाणपंचमेनान्वयः अंगानांपूजास्थानक्रमः आग्नेयनैरृत्यवायव्येशानकोणेषु हृदयादिकवचांतंपुरतोनयनं पश्चिमेअस्त्रायफडितिद्वितीयमावरणमाह द्वितीयमिति अत्रयद्यपिवासुदेवाद्यावरणंद्वितीयमुक्तं तथापिषट्कोणानंतरं वर्त्तुलाकारां रेखांकृत्वा क्रियमाणाष्टदलमूले आग्नेयीमारभ्य आत्मनेनमः अंतरात्मनेनमः परमात्मनेनमः ज्ञानात्मनेनमः प्राचीमारभ्यनिवृत्त्यैनमः प्रतिष्ठायै विद्यायै शांत्यै

इति द्वितीयंवोध्यं अगस्त्यसंहितायां तथोक्तत्वात् अत्रवासुदेवादीनां यद्द्वितीयत्वमुक्तं तत्रावरणापेक्षयाअन्यत्रात्मादीनां द्वितीयावरणत्वोक्तेः किंतुद्वितीयथानापेक्षयाषट्कोणापेक्षयाष्टदलस्यद्वितीयत्वात् यद्वाष्टदलमध्योक्तानामावरणानांद्वितीयत्वापेक्षयेतिवोद्धव्यं ततस्तस्यैवाष्टदलस्य पत्रेषुआग्नेयीमारभ्यवासुदेवायनमः संकर्षणाय प्रद्युम्नाय अनिरुद्धाय प्राचीमारभ्यश्रियैनमः सरस्वत्यै प्रीत्यैरत्यै तृतीयावरणेवासुदेवाद्यैः संयुतोरामः आग्नेयादिषुपूज्यइत्यर्थः । ५३ । चतुर्थावरणमाह ।

**तृतीयंवायुसूनुश्च सुग्रीवंभरतंतथा ।**
**विभीषणंलक्ष्मणंच अंगदं चारिमर्दनं ॥**
**५४ ॥**

ततस्तस्यैवाष्टदलस्य पत्राणामंतर्भागेषुप्राचीमारभ्य वायुसूनुं सुग्रीवंभरतंविभीषणं लक्ष्मणंअंगदंशत्रुघ्नंजामवंतमिति चतुर्थावरणंविन्यसेत तैःसंयुतः श्रीरामस्तत्रपूज्यइत्यर्थः अत्रापिवायुसून्वादीनां यत्तृतीयत्वमुक्तंतदष्टदलोक्ततृतीयत्वापेक्षयेतिज्ञेयं सुंदरीतंत्रप्रथमाष्टदलमूलदेशे आत्मादीनांदलमध्यभागेवासुदेवादीनांदलांतभागे वायुसुन्वादीनामावरणानामुक्तत्वात् ।

पट्कोणेप्रथमावृत्तिः स्यादंगैरग्नितःक्रमात् द्वितीया-त्मादिकैर्देवै रष्टाब्जेमूलकेतथा तृतीयावासुदेवाद्यै रष्टपत्रेतथै-वच चतुर्थीवायुपुत्राद्यैः पत्राग्रेपूर्वतः क्रमादिति पंचमावरण माह ।

जामवंतंचतैर्युक्त स्ततो धृष्टिर्जयं-तकः । विजयश्च सुराष्ट्रश्च राष्ट्रवर्द्धन एवच ॥ ५५ ॥

अकोपोधर्मपालश्चसुमंत्र स्त्वेभिरा-वृत्तः । ततःसहस्रदृक्वन्हि धर्मरक्षोवरु-णानिलाः ॥ ५६ ॥

इंद्रीशधात्रनंताश्च दशभिस्त्वेभिरा-वृत्तः । बहिस्तदायुधैः पूज्योनीलादिभिर लंकृतः ॥ ५७ ॥

पंचमावरणमाह ततोधृष्टिरिति जामवंतश्चतुर्थावर-णांतर्गत्वात् ततः प्रथमाष्टदलानंतरंवर्त्तुलाकारांरेखांकृत्वा तद्बहिःपुनरष्टदलंकुर्यात्त स्यैवाष्टदलस्यपत्रेषु प्राचीमारभ्यधृ-ष्टयादीनविन्यस्य तैरावृत्तः श्रीरामःपंचमावरणेपूज्यः इत्यर्थः

षष्टावरणमाह ततःसहस्रदृगिति अक्षराधिक्यंछांदसं पूर्वादि दिक्षुक्रमादिंद्रादीन्विन्यस्य पूर्वैशानयोर्मध्येधातारं नैर्ऋत्यप- श्चिमयोर्मध्येऽनंतंशेषंचविन्यस्यैभिर्दशभिरावृत्तोरामः षष्टाव- रणेसंपूज्य इत्यर्थः सप्तमावरणमाह बहिरितिषष्टावरणाद्बहि- स्तदायुधैर्वज्रशक्तिदंडखड्गपाशध्वजगदा शूलपद्मचक्रैरिंद्रा- दिदशायुधैःसंयुतोरामः सप्तमावरणेपूज्यइत्यर्थः ततः षोडश दलेनीलनलसुखेनमैंदद्विविद सरभचंदनगवाक्षकिरीटकुंडल श्रीवत्सकौस्तुभ शंखचक्रगदापद्मैरलंकृतोरामोऽष्टमावरणेपूज्य इत्यर्थः नवमावरणमाह।

## वशिष्ठवामदेवादिमुनिभिः समुपासितः।

ततोद्वादशदलेवशिष्ठाय वामदेवाय जावालिने गौत माय भरद्वाजाय विश्वामित्राय वाल्मीकिने नारदाय सनकाय सनंदनाय सनातनाय सनत्कुमाराय एभिरुपासितोरामोनवमा- वरणेपूज्य इत्यर्थः नचात्रषोडशदलस्यानंतरंद्वादशदलोक्ति- र्नोपपद्यते क्रमविरोधादित्याशंकनीयं श्रीयंत्रादौचतुर्दशदलाद्य नंतरमष्टदलादीनांदृष्टत्वादितिअग्रेवक्ष्माणयंत्रोद्धारानुरोधेना त्रद्वावाद्यावरणंदशमाभिप्रेतंतद्यथा द्वात्रिंशद्दले ध्रुवाय धराय सोमाय अद्भ्यः अनिलाय अनलाय प्रत्यूषायप्रभासायइत्य- ष्टौवसवः वीरभद्राय शंभवे गिरीशाय अजैकपदे अहिर्बु- ध्न्याय पिनाकिने भुवनेशाय कपालिने दिक्पतये स्थाणवे-

भर्गायइत्येकादशरुद्रावरणाय सूर्यायवेदांगाय भानवेइन्द्राय-
रवयेगभस्तये यमाय हिरण्यरेतसे दिवाकराय मित्रायविष्णवे-
नमः इतिद्वादशादित्याद्वात्रिंशत्पमेपत्रे धात्रेनमः इत्येवमे-
भिर्ध्रुवादिभिर्युतो रामोदशमावरणपूज्यः सम्प्रदायस्तु अङ्गा-
वरणंप्रथमं आत्माद्यावरणं द्वितीयं वासुदेवाद्यावरणं तृतीयं
हनुमदाद्यावरणं चतुर्थं धृष्ट्याद्यावरणं पञ्चमं वशिष्ठाद्या-
वरणंषष्टं नीलाद्यावरणंसप्तमं ध्रुवाद्यावरणमष्टमं द्वात्रिंश-
द्दलस्थं इन्द्राद्यावरणं तु प्रथम भूगृहस्थं नवमं दशमं तु
वज्राद्यावरणंद्वितीयभूगृहस्थं इत्थमेवोक्तंसुन्दरीतन्त्रे तृती-
यदले षट्कोण प्रथमावृत्तिः स्यादङ्गैरग्नितःक्रमात् द्वितीया
त्मादिकैर्देवैरष्टाब्जमूलके तथा तृतीया वासुदेवाद्यैरष्टपत्रे
तथैवच चतुर्थी वायुसून्वाद्यैः पत्राग्रेपूर्वतः क्रमात्धृष्ट्याद्यैः
पञ्चमावृत्तिः द्वितीयाष्टदलेतथा षष्टीद्वादशपत्रेषु वशिष्ठाद्यै-
र्महर्षिभिः सप्तमीषोडशाब्जेस्यान्नीलाद्यैः कपिपुङ्गवैः ध्रुवाद्यै
रष्टमीज्ञेयाद्वात्रिंशदलपद्मकेइन्द्राद्यैर्भूगृहेनित्यं नवमावरणं
भवेत्तदस्त्रैर्वज्रशक्त्याद्यैर्दशमावरणं शुभ मिति द्वितीये भूगृहे
जानीयात्श्रीमत्परपार्षदेभ्योनमःइतितृतीयेभूगृहेततोबहिर्नाके-
भ्यः पुष्पांजलिंदत्वा सपरिवाराय श्रीरामायभगवतेधूपाद्युपचा-
रान्कल्पये दित्यावरणपूजेति एतावांस्तुविशेषः अत्रवशिष्टाद्या-
द्यावरणेयत्रगौतम भरद्वाजविश्वामित्रवाल्मीकिनः पूज्यत्वंनो-
क्तंसुंदरीतंत्रेतत्रगौतमादिस्थानेषुकात्यायनमार्कंडेयपर्वतकश्य

पःपूज्यत्वेनोक्ता इंद्राद्यावरणेच सोमस्थानेकुबेर उक्तः अनंत-स्थाने विष्णुरिति अन्यतसर्वमत्रतत्रचसमानं तत्रप्रत्यावरणां तैस्तैर्युतं श्रीरामंसंपूज्यानंतरं अभीष्टसिद्धिंमेदेहि शरणागत-वत्सलभक्त्यासमर्पयेतुभ्यं प्रथमावारणार्चनम् अभीष्टसिद्धिंमेदे-हिशरणागत वत्सल भक्त्यासमर्पयेतुभ्यं द्वितीयावरणार्चनम् एवंतृतीयावरणपूजनं एवंचतुर्थावरणपूजनमित्येवं विधंमंत्रमु-च्चार्योच्चार्य प्रत्यावरणपूजानंतरं तत्फलं श्रीरामायसमर्प्या नं तरंपुष्पांजलिंदद्यादित्याहु र्यंत्रपूजाविधानज्ञाः अपरं चां गुष्ठ-तर्जनीभ्यांपुष्पंगृहित्वा तत्पुष्पमंगुलीभ्यांसहितंयंत्रराजस्य-मध्येनिधाय चतुरो यंत्रप्राणप्रतिष्ठा मंत्रान्दशवारं त्रिवारवापठित्वाएकवारंतुनैवरामस्यप्राणाइत्यादिस्थलेषु सावरणस्यरा-मस्यप्राणाइहप्राणाः तथासावरणस्य रामस्यजीवइहस्थितः तथा सावरणस्यरामस्येन्द्रियाणि तथा सावरणस्य रामस्य वाङ्मनश्चक्षुःश्रोत्रंघ्राणप्राणइहागत्यसुखंचिरंतिष्ठंतुस्वाहाइत्ये-वंपठित्वासावरणस्य रामस्य तत्रप्राणप्रतिष्ठांकृत्वापश्चाद्यंत्रराजंपूजयेदित्यपितेवदंति मंत्रास्तु ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हं हं सः रामस्यप्राणाइहप्राण १ ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हं हं सः रामस्यजीवइहस्थितः ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं हं सः रामस्यसर्वेन्द्रियाणि ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं हं सः रामस्य वाङ्मनः चक्षुः श्रो-त्रघ्राणप्राणा इहागत्यसुखंचिरं तिष्ठंतुस्वाहे त्येतेचत्वारोविज्ञे-

याः पूजायंत्रमुपसंहरतिएवमिति ।

एवमुद्देशतः प्रोक्तं निर्देशस्तस्य-
चाधुना ॥ ५८ ॥

एवंपूर्वोक्तप्रकारेणपूजायंत्रं संक्षेपतः प्रोक्तं अथधारणा यंत्रप्रकारंप्रतिजानीतेति निर्देशइतितस्यप्रसिद्धस्यधारणायं- त्रस्य निर्देशोऽधुनोच्यते धारणायंत्रंनाम पूर्वोक्तरीत्यापूर्वोक्तै- र्मंत्रै र्वक्ष्यमाणस्ययंत्रस्यप्राणप्रतिष्ठादिकंकृत्वा कंठादिषुधार्य तेयस्मात्तस्मादुच्यते धारणायंत्रमिति ।

त्रिरेखापुटमालिख्य मध्येतारद्वयं-
लिखेत् । तन्मध्येबीजमालिख्यतदधः
साध्यमालिखेत् ॥ ५९ ॥

द्वितीयांतंचतस्योर्द्ध्वं षष्ठ्यं तंसाधकं
तथा । कुरुद्वयंच तत्पार्श्वेलिखेद्बीजां-
तरेरमां ॥ ६० ॥

तत्सर्वंप्रणवाभ्यांच वेष्टयेच्छुद्धबुद्धि-
मान् ।

त्रिरेखांतित्रिरेखापुटं पट्कोणं पूर्वोक्तरीत्याथालिख्य-मध्येकर्णिकायांतारद्वयंलिखेत् तन्मध्येप्रणवद्वयमध्ये बी-जंशंबीजमालिख्य तदधः बीजाधोभागे साध्यंसाधनीयमर्थं द्वितीया विभक्त्यंतमालिखेत् तस्यबीजस्योर्ध्वउपरिभागे षष्ठीविभक्त्यं तंसाधकं च लिखेत् कुरुद्वयमितितत्पार्श्वेबीज-स्थपार्श्वयोः कुरुद्वयंलिखेदित्यन्वयः बीजांतरेबीजस्योदरेरमां श्रीबीजंलिखेत् तत्सर्वमितिसाध्यादिसहितंबीजं प्रणवाभ्यां परस्परसन्मुखाभ्यां वेष्टयेत् शुद्धबुद्धिमान् ।

**दीर्घभाजिपडस्रेषु लिखेद्बीजंहृदा-दिभिः ॥ ६१ ॥**

हृदयशिरः शिखाकवचनेत्रास्त्रैःसहितं बीजंलिखेत् कीदृशंबीजं दीर्घभाजित्र्याकारादिभिः षडभिर्दीर्घैर्युक्तमित्यर्थः आग्नेयनैर्ऋत्यवायव्येशानेषुहृदयादीनिपूर्वतोनेत्रंअस्त्रंचपृष्ठतः ॥ ६१ ॥।

**कोणपार्श्वेरमामाये तदग्रेऽनंगमा-लिखेत् । क्रोधंकोणाग्रान्तरेषुलिखेन्मंत्र्य भितोगिरम् ॥ ६२ ॥**

कोणपार्श्वेइतिषण्णांमपिकोणानांपार्श्वयोः वामेह्रीमि-

तिमायाबीजं दक्षिणेश्रीरमाबीजं विलिख्य तदग्रेकोणानाम-
ग्रेक्लीमित्यनंगबीजंलिखेत् क्रोधंकवचबीजंहुंकारं कोणाग्रांतरे-
पु कोणेपुयान्यग्राणितेषामंतरेपुअभ्यंतरभागेपु लिख्येतिछांद
संलिखित्वा अभितःकोणानांसमंततः गिंगेंमितिवाग्बीजं
लिखेत् अत्रतांत्रिकाः रांबीजस्यसमीपेदक्षिणेभागे इतद्वाम-
भागेई इतिद्वेनेत्रेलेखनीये तथैवउऊइतिद्वौकर्णौलेखनीयाविति-
तिवदन्ति तन्न तथैवानुक्तानां ऋ ॠ ऌ ॡ इत्यादीनांमदे-
षांमात्रिकाक्षराणां नासिकाकपोलादिरूपत्वेन नासिकाकपो-
लादिस्थानेपुलेख्यत्वात् वस्तुतस्तु अनयोपनिपदारांबीजस्य
रामरूपत्वेन अतएवनेत्रकर्णनासिकाकपोलाद्य शेषावयवव-
त्वंमत्वाषट्कोणे इकारोकाराद्यक्षराणां लेखनस्यानुक्तत्वात् ।

**वृत्तत्रयंसाष्टपत्रंसरोजेविलिखेत्स्वरा**
**न् । केशरेचाष्टपत्रेचवर्गाष्टक मथालि-**
**खेत् ॥ ८३ ॥**

वृत्तत्रयमिति षट्कोणस्योपरिभागे वर्त्तुलरेखात्रयं
अष्टपत्रेणसहितंसाष्टपत्रंलिखित्वा स्वराणांमपिकोणानांपरितो
बहिर्भागे वर्त्तुलरेखात्रयंलिखित्वात्तस्य रेखात्रयस्योपरिभागे
समंततःअष्टदलं लिखित्वेत्यर्थः तस्मिनष्टदलेसरोजे केसर-
स्थानेकेसरवन्नैरंतर्येणषोडशस्वरेपुमध्ये प्रतिदलंद्विर्द्विःस्वरौ

विलिखेदित्यर्थः तेषुमालामनोर्वर्णान्विलिखेदुर्मिसंख्यया अष्ट पत्रे अष्टानांपत्राणांमध्येवर्गाष्टकं क चटतपयशल वर्गाणा-मष्टकंक्रमयालिखेत् अष्टपत्रस्यपूर्वादिदिक् क्रमतःप्रतिपत्रंलि-खितयोः स्वरयोरुपरिभागेएकमेकंवर्गंलिखेदित्यर्थः ।

तेषुमालामनोर्वर्णान् विलिखेदूर्मि-संख्यया । अन्त्येपञ्चाक्षरानेवं पुनरष्ट दलंलिखेत् ॥ ६४ ॥

तेषुमालेतितेष्वेवाष्टतत्रेषुमालामंत्रस्य वक्ष्यमाणस-प्तचत्वारिंशदक्षरस्य वर्णान्प्रतिपत्रं ऊर्मिसंख्ययालिखेत प्रतिपत्रंलिखितानां वर्णानामुपर्युपरिभागे मालामंत्रस्यषट् षट्वर्णान् अन्तिमेपंचवर्णानलिखेदित्यर्थः तदेवस्फुटयति-अन्तेपंचाक्षरानिति अन्तेचरमपत्रेअवशिष्टान्मालामंत्रस्यपंचा-क्षरानविलिखेदितिपूर्वेणान्वयः पुनरितिपूर्वलिखिताष्टदलो परिवृत्तंकृत्वा तदुपरि पुनरष्टदलंलिखेत् ।

तेषु नारायणाष्टार्णं लिखेत्तत्केसरे-रमाम् । तद्बहिर्द्वादशदलं विलिखेद्वा-दशाक्षरम् ॥ ६५ ॥

तेष्वष्टदलेषु नारायणमंत्राष्टवर्णान्यथासंख्यं लिखेत् तत्केसरे तस्मिन्नेवाष्टपत्रे केसरस्थाने प्रतिपत्रं रमां श्रीवीजं केसरवदेव लिखेदित्यनुवर्त्तनीयं तद्बहिर्द्वितीयाष्टदलाद्बहिर्वृ-त्तंकृत्वा तदुपरिद्वादशदलं लिखेत् तथा पूर्वां दिशमारभ्य

पत्रेपु यथाक्रमं द्वादशाक्षरं लिखेत द्वादशाक्षर मुद्धरति।

**तथों नमोभगवतेवासुदेवाय इत्ययम्।**
**आदिक्षान्तान्केसरेषु वृताकारेण संलि-**
**खेत् ॥६६॥**

तस्यैव द्वादशदलस्य केसरेषु अ आदिर्येषां क्ष अन्ते येषां ते च ते च आदि क्षान्ता स्तानादि क्षान्तान् अकारमारभ्य क्षकारपर्यन्तानेकपञ्चशब्दार्णान् लिखेत तत्रापिचतुर्षु दलेषु क्रमेण चतुश्चतुःसंख्यया षोडशस्वरान् लिखेत् तदनन्तरेषू पञ्चसुपत्रेषु क्रमेण पञ्च पञ्च संख्ययाकादिमावसानान्वर्णान् लिखेत दशमेपत्रे य र ल व इति चतुर्वर्णान् एकादशमे पत्रे शषसह इति चतुर्वर्णान् द्वादशमेपत्रे लं क्षं इत्यवशिष्टं वर्णद्वयं वृत्ताकारेण संलिखेदित्यर्थः

**तद्बहिः षोडशदलं लिखेत्तत्केसरे ह्रि-**
**यम्वर्म्मास्त्रनति संयुक्तं दलेषुद्वादशा-**
**क्षरम् ॥६७॥**

तद्बहिः द्वादशदलाद्बहिर्द्वादशदलोपरिवृत्तं कृत्वा तदुपरि षोडशदलं तत्केसरस्थाने ह्रियं ह्रींबीजं लिखेतदलेषु-

षोड़शाक्षरलेखनमाह वर्मास्त्रेति वर्म हुंकारः अस्त्रंफटकारः नतिर्नमश्शब्द एतैरन्त्य भागसंयुक्तं द्वादशाक्षरं दलेपुषोड़श पत्रे यथासंख्यमालिखेत् द्वादशपत्रेषु वासुदेवमंत्रस्य ओमारभ्य यकारपर्यन्तान्द्वादशाक्षरान् लिखेत् अवशिष्टेषु चतुर्षु पत्रेषु यथा संख्यं

हुंकारं फट्कारं नकारं मकारंच लिखेदित्यर्थः

**तत्सन्धिष्वीरजादीनां मन्त्रान्मन्त्री समालिखेत्। हं स्रं भ्रं व्रं ल्रं श्रं ज्रं चा लिखेत्सम्यक् ततोवहिः ॥६८॥**

तत्संधिष्विति तेषां षोड़श दलानां सन्धिविभागेषु षोड़शदलस्योपरिवृत्तं षोडशदलस्योपरिभागे बृत्तस्याधोभागे षोडश्सुसन्धिविभागेषु ईरजादीनां हनुमदादीनां मन्त्रान्वीजरूपान्समा लिखेत् हनुमत्सुग्रीवभरतविभीषणलक्ष्मणशत्रुघ्नजाम्ववतां वीजानि चकारादङ्गदधृष्ट्यादीनां च वीजानि लिखेत आद्यं वीजं हनुमतः द्वितीयं सुग्रीवस्य तृतीयंभरतस्य चतुर्थं विभीषणस्य पञ्चमं लक्ष्मणस्य षष्ठं लक्ष्मणवीजानन्तरं अं इति अङ्गदस्य वीजं वोधव्यम् विभीषणं चाङ्गदं चारिमर्दनमिति प्रागुक्तत्वात् श्रं शत्रुघ्नवीजं ज्रं जाम्ववतावीजं चकारात् धृष्ट्यादि मन्त्रिणां वीजानामपिग्रहणं तानि लिखेत् तत्र धृमिति धृष्टिवीजं जमिति जयन्तीवीजं वि मिति

विजय वीजं सुमितिसुराष्ट्रवीजंरामितिराष्ट्रवर्द्धनवीजं अमिति अकोपवीजम् धमिति धर्मपालवीजं सुमिति सुमंत्रवीजं ज्ञेयं तत्तन्नामाद्यक्षराणां विन्दुशिरस्कानामेव वीजत्वं हं हनुमते नमः भं भरतायनमः लं लक्ष्मणायनमः शं शत्रुघ्नायनम इत्यादि मंत्रेषु तत्तद्वीजत्व दर्शनात् ततोवहिर्हनुमदादिषोड़शवीजेभ्योवहिरित्यर्थः

द्वात्रिंशारं महापद्मं नादविन्दुसमायुतम् । विलिखेन्मन्त्रराजार्णांस्तेषु पत्रेषु यत्नतः ॥६९॥

द्वात्रिंशारं द्वात्रिंशत्पत्रं महापद्मं नादविन्दुसमायुतं सम्यक्स्पष्टतयाऽलिखेत् महापद्मत्त्वमस्य मंत्रराजलेखनयोग्यत्वात मंत्रराजश्चात्ररामभद्रमहेष्वाश रघुवीरेत्यादि श्रीरामाऽनुष्टुभं ज्ञेयं प्रतिपत्रमेकैकाक्षरतया द्वात्रिंशद्दलेषु द्वात्रिंशदक्षराणि पूर्वादिक्रमतः स्थाप्यानि दलस्य केसरभागे नादविन्दुं च लिखेत् तत्राऽर्द्धचन्द्राकारोनादस्तस्योपरिविन्दुश्च यत्तुनादः प्रणवस्य चतुर्थोऽवयव इत्युक्तं तन्नोपपद्यते नादः षष्ठोक्षरोभवतीति प्रणवावयववोधक श्रुतिविरोधात् अर्द्धमात्राश्चतुर्थाक्षरोभवतीतिअर्द्धमात्रयास्तच्चतुर्थावयवत्वश्रवणाच्च अर्द्धमात्रात्मकोरामो ब्रह्मानन्दैक विग्रह इत्यत्राप्यर्द्धमा-

त्रायास्तच्चतुर्थावयवत्वोपपत्तेः "अर्द्धमात्रात्मकः कृष्णोयत्र-विश्वं प्रतिष्ठितमिति" गोपालतापनीयेऽप्यर्द्धमात्राया एव प्रणवचतुर्थावयवत्वावगमाच्च—

सायावसानेऽस्यचतुर्थ्यर्द्धमात्रेति नृसिंहतापनीयेऽप्य-र्द्धमात्रायास्तच्चतुर्थावयवत्व श्रवणाच्चेतिअतोविन्दुःप्रणव-स्य पञ्चमावयवोनादः षष्ठस्ताभ्यां समायुक्त मितिज्ञेयं ना-देत्यादिव्यत्ययेनशक्त्यनङ्गरमायुतमिति क्वचित्पाठःतत्रशक्तिः ह्रीं वीजं क्लीमिति अनङ्गवीजं श्रीमिति रमा वीजमेतैर्युत-मित्यर्थः ॥ ६९ ॥

**ध्यायेदष्टवसूनेकादश रुद्रांश्च तत्र वै ।**
**द्वादशेनांश्चधातारं वषट्कारंततोवहिः ॥७०॥**

तेषु वृत्ताकारेण लिखितेषुपत्रेषु मंत्रराजस्यश्रीरामा-ऽनुष्टुभस्य द्वात्रिंशद्वर्णान्विलिख्य तत्रचैवपत्रेषुध्रुवादीन्य-त्नतोध्यायेदितिसंवंधः तेच " ध्रुवोधरस्तथासोम आपोवायु-स्तथाऽनलः । प्रत्यूषश्चप्रभासश्च वसवोऽष्टौप्रकीर्तिताः " वीरभद्रशंभुगिरीशाजैकपादाऽहिर्वुध्न्यपिनाक्यपराजितभुवना-धीशकपालिदिक्पतिस्थाणवइत्येकादशरुद्राः तापश्रेणिविदा-रणोदक्षाः तथा " वरुणः सूर्यवेदाङ्गौभानुरिन्द्रोरविस्तथा । गभस्तिश्चयमः स्वर्णरेतास्चैवदिवाकरः । मित्रोविष्णुरिति

तत्रतुरा शिवल्याचंतमेवदीक्षाकालेषु पूजायांतुफणिसंयुतमिति संप्रदायःअत्रादौपूर्वोक्तमंत्रैःप्राणप्रतिष्ठांपूजांचकृत्वापश्चाद्यंत्र कंठादौधारयेदितिज्ञेयं फणिसंयुतमिति फणिभिःअष्टकुल- नागैः संयुतंतेच नागाःशेषवासुकितक्षक शंखश्वेतमहापद्म कंबलाश्वतरे लापत्रकर्कोटकाख्याः विष्णुपुराणस्यप्रथमेंशेतेषां प्रधानभूतास्तेशेषवासुकितक्षकाः शंखःश्वेतोमहापद्मकंबलाश्व तरास्तथा एलापत्रस्तथानागःकर्कोटकधनंजयौ ॥ इतिप्रसिद्धः ७१ ॥

**एवं मंडलमालिख्य तस्यदिक्षु विदि- क्षुच । नारसिंहंवाराहंच लिखेन्मंत्रद्वयं तथा ॥ ७२ ॥**

एवमुक्तप्रकारकंमंडलमालिख्य तस्यमंडलस्यदिक्षुप्रा- गादिचतुर्दिक्षुनारसिंहंबीजं विदिक्षुआग्नेयादि चतुःकोणेषुवा- राहबीजं एतन्मंत्रद्वयंलिखेत् ॥ ७२ ॥ तत्र नृसिंहबीजमुद्ध- रति कूटरेफेति ।

**कूटरेफानुग्रहेंदुनादशक्त्यादिभियु- तः । योनृसिंहः समाख्यातो ग्रहमारण कर्मणि ॥ ७३ ॥**

कूटः चकारः रेफोरवर्णः अनुग्रह औकारः औकारस्य श्रीकंठादि न्यासस्थानुग्रह देवतावत्वात् इंदुविंदुः नादः प्रणवस्य षष्ठोऽवयवः शक्तिः सप्तमः आदि शब्देन शान्ताख्यस्तदवयवः यो नृसिंहइति यः एवंभूतः स एषनृसिंहः समाख्यात इति नृसिंहवीजमुक्तं कीदृशो नृसिंहः ग्रहाणां उपलक्षणाया कृत्याग्रहभूतप्रेतादीनांमारणकर्मणि प्रशस्तः ॥७३॥

अथ वाराहवीज मुद्धरति ।

**अन्त्याधीशवियद्बिन्दुनादैर्वीजं च सौकरं । हुंकारं चात्र रामस्य माला मंत्रोधुनेरितः ॥७४॥**

अन्तेस्थितः अधीशेश्वर सम्वन्धी उकारो यस्मिन् ईदृशोवियत् हकारस्तेन विन्दुना नादेन च सौकरं वराहवीजं समाख्यातं उद्धारेणाभिज्ञानां स्फुटीभूतेपि वीजे अज्ञानामपि तज्ज्ञानाय तत्स्वरूपं स्फुटयति हूंकारस्वरूपमेव सौकरं वीजमित्यर्थः मालामंत्रोद्धारं प्रतिजानीते अत्र रामस्येति अत्र शास्त्रे अधुना रामस्य मालामन्त्रः ईरितः कथितः ॥७४॥

**तारोनतिश्चनिद्रायाः स्मृतिर्मेदश्च कामिका । रुद्रेणसंयुतावन्हिर्मेधामरविभूषिता ॥ ७५ ॥**

दीर्घाक्रूरयुताल्हादिन्यथोदीर्घा स-
मानदा। क्षुधाक्रोधिन्यथामोघा विश्व-
मप्यथमेधया॥ ७६॥

युक्तादीर्घाज्वालिनीच ससूक्ष्मामृत्यु
रूपिणी। सप्रतिष्ठाल्हादिनोत्वक्क्ष्वेतनः
प्रीतिश्चसामरा॥ ७७॥

ज्योतिस्तीक्ष्णाग्निसंयुक्ता श्वेतानु-
स्वारसंयुता। कामिकापंचमोलांतस्तां
तांतोधांतइत्यथ॥ ७८॥

ससानंतोदीर्घयुतोवायुः सूक्ष्मायुतो-
विषः। कामिका कामिकारुद्रयुक्ताथो-
थस्थिरासए॥ ७९॥

तापिनीदीर्घयुक्ता भूरनिलोनंतगो-
नलः। नारायणात्मकः कालः प्राणोऽभो
विद्ययायुतः॥ ८०॥

पीतारतिस्तथालांतो योन्यायुक्तस्त तोनतिः। सप्तचत्वारिंशद्वर्णोगुणांतःस-गणुस्त्वयं राज्याभिषिक्तस्यतस्यराम-स्योक्तक्रमाल्लिखेत् ॥ ८१ ॥

तारोनतिश्चेत्यादि सगुणा स्त्वयमित्यंतंश्लोकसप्तकं तारः प्रणवो नतिर्नमः शब्दः निद्रायाः निद्राख्यकलारूपात्मकारादनंतरंस्मृतिकलासंबंधीगकारः मेदोधातुसंबंधीवकारःकामिकाकलासंबंधीतकारः सचरुद्रेणौकादस्वरेण संयुतासंयुक्ताकामिकाशब्दस्य स्त्रीलिंगत्वात्संयुतेतिस्त्रीनिर्देशःवन्हिःरेफःमेधाख्यकलासंबंधी धकारः सचामराख्यश्रीकंठादिईश्वरसंबंध्युकारेणसंयुतइत्यर्थः दीर्घाख्यकलासंबंधीनकारःसचाक्रूरयुतःअक्रूरोऽनुस्वारः अक्रूरस्यानुस्वारमूर्तित्वात् ल्हादिन्याख्यकलासंबंधीदकारः दीर्घाख्य कलासंबंधीनकारः सचमानदा कलातत्संबंध्याकारेणसहितः क्षुधाकलासंबंधीयकारःक्रोधिन्याख्यकलासंबंधीरकारः अमोघाख्यकलासंबंधीजकारः विश्वंविश्वात्मा वासुदेवस्तत्संबंधीकेशवादिन्यासस्थओकारः मेधाख्यकलासंबंधीधकारेणयुक्तादीर्घानकारः ज्वालिनीकलासंबंधीवकारः सचसूक्ष्माख्येश्वरदेवताइकारेणसहितः मृत्युरूपिणीनामकलातत्संबंधीशकारः स प्रतिष्ठेति ल्हादिन्याख्यकलासंबंधीदकारः सप्रतिष्ठाख्यकलासं

वंध्याकारेणसहितः त्वग्धातुसंवंधीपकारः द्वेलोविपरततसंवंधी मकारः प्रीतिकलासंवंधीधकारः सचामरेश्वर संवंध्युकारेण सहितः ज्योतिरग्निःरेफः तीक्ष्णाख्यकला संवधीपकारः स चाग्निनारेफेणसंयुतः श्वेताख्यकलासंवंधीसकारः सचानुस्वार संयुक्तः कामिकाख्यकलासंवंधितकारस्यपंचमोनकारः लांतोव कारस्तांतांतःतस्यांतःथकारःतस्याप्यन्तोदकारःधांतोनकारःस-चसानंतःअनंतआकारस्तेन सहितोवायुर्यकारः दीर्घयुतःदीर्घः अकारस्तेनयुतः अत्रव्याकरणानुरोधेन याकारोद्धारः अक्षरगण नायांतु यकारः अकारश्चेतिद्वौसंधिमकृत्वैवगणनीयौ तेनव-क्ष्यमाण सप्तचत्वारिंशद्वर्णत्वमविरुद्धं विषोमकारः सचसूक्ष्मा ख्येश्वरदेवता इकारस्तद्युतः कामिकातकारः पुनरपिकामिका तकारः सचरुद्रेणैकादशस्वरेणयुक्तः अथोथेत्यत्र प्रगृह्यसंज्ञा याअभावःछांदसः स्थिराख्यकलासंवंधीजकारःसइतिएइतिद्वा-भ्यांमिलित्वासेइत्यर्थः तापिन्याख्यकलासंवंधीवकारः अष्टत्रिं शत्कलान्यासेवकारवकारयोस्तापिनी संवंधप्रसिद्धेः भूःलका रः दीर्घेणआकारेणयुक्तः अनिलोयकारः अनंतगोनलअनं-तआकारस्तद्गः तत्स्थोऽनलः रेफइत्यर्थः नारायणात्मकःकाल इति आकारसहितोमकारः प्राणोवायुःयकारः अंभःउदकंवका रः विद्ययाइकारेणयुक्तःपीताख्यकलासंवंधीषकारः रतिकलासं वंधीणकारः षश्लिष्टःलांतोवकारः योन्या एकारेणयुक्तः ततोऽ नंतरंनतिर्नमःशब्दः ॐनमोभगवतेरघुनंदनाय रक्षोघ्नविश

द्वायमधुरप्रसन्नवदनायामित तेजसेवलायरामाय विष्णवेनमः इति सप्तश्लोकार्थः सप्तचत्वारिंशदिति अथराज्याभिषिक्तस्य तस्यरामस्यसगुणोमालामंत्रः सप्तचत्वारिंशदक्षर इत्यर्थः कीदृशोयं गुणांतोगुणाः सत्वरजस्तमोरूपाअंतः स्वरूपेयस्यासौगुणांतः त्रिगुणात्मकइत्यर्थः सात्विकादीनामुपासकानां सात्विकादिफलदातृत्वात तुशव्दोमंत्रांतरेभ्यउत्कर्षद्यो तनार्थः अयंमंत्रोराज्याभिषिक्तस्यैवरामस्य नतुवनवासिन इति द्योतयितुमुक्तं ॥ ८१ ॥

इदंसर्वात्मकंयंत्रं प्रागुक्तमृषिसेवितं । सेवकानांमोक्षकरमायुरारोग्य वर्द्धनं ॥ ८२ ॥

अपुत्राणांपुत्रदंच वहुनाकिमनेनवै । प्राप्नुवंति क्षणात्सम्यगत्र धर्मादिकानपि ८३

यंत्रलेखनप्रकारमुपसंहरति उक्तक्रमादिति इदंसर्वात्मकमिति इदंउदग्दक्षिणयोः स्वस्यशत्रुघ्नभरतौधृत इत्यादिनाप्रागुक्तं यंत्रंसर्वात्मकं तत्रतत्रावरणे तेषां तेषां च सर्वेषां पूजनात् इदंयंत्रंसर्वदेवमुन्याद्यात्मकमित्यर्थः ननु पुरुषः सपरः पार्थभक्त्यालभ्यस्त्वनन्यये त्यनन्यभक्तानामोक्षस्मृतेः नैतद्यंत्र सेवकस्यमोक्षोभविष्यति तस्यदेवतांतरपूजनेनानन्यत्वभंगा-

दित्याशंक्याह सेवकानांमोक्षकरमिति स्वातंत्र्यबुद्धया देवतां-तरपूजनप्रतिषेधात् अंगबुद्धयातु तत्पूजाविधानात् प्रकृतेतु सोभयस्यास्यदेवस्य विग्रहोयंत्रकल्पनेति यंत्रस्य श्रीरामशरीर-त्वश्रुत्यातदा वरणादेवतानां तदंगत्वोपपत्तेः पुनश्चतदावरणादे-वतानां तत्परिकरत्वेन तत्सेवकबुद्धया तत्प्रीत्यर्थं च पूजनात् तत्फलस्यापितस्मै समर्पणाच्चनोक्त दोषापत्तिः तथाच महर्षि-वचनं स्त्रियोवृद्धास्तरुणयश्चसायंप्रातः समाहिताः सर्वान् देवान् नमस्यंति रामस्यार्थेयशश्विन इति अस्यसेवने सदा चारंप्रमाणयति ऋषिसेवितमि तिऋषिभिर्वशिष्ठादिभिः सेवितं न केवलदेहांते मोक्षप्रदमिदं किंतु जीवतोपि तदाधिव्याधि विनाशकत्वेन सुखप्रदमित्याह आयुरारोग्यवर्द्धनं अपुत्राणां पुत्रदंचेति ननुभवत्वेवं नतु त्रिवर्गदमिदंयंत्रमित्याशंक्याह वहुनेति वहूक्तेन किं अनेनयंत्रेण वैनिश्चितंतक्षणात् सम्यक्-समीचीनानुष्टानात् धर्मादिकांश्च अत्र अत्रैव जीवत्येवेत्यर्थः प्राप्नुवंति इदंचयंत्र मतिगोप्यमित्याह ।

**इदंरहस्यंपरमभीश्वरेणापिदुर्गमं । इदंयंत्रं समाख्यातं नदेयंप्राकृतेजन इति ॥ ८४ ॥**

इदंयंत्रंसम्यगाख्यातंगुप्तं च यतईश्वरेणापि दुर्गमंदुर्बोध्य मित्यर्थःइदंयंत्रं प्राकृतेजनेसमान्य नीचेनदेयंइतिशब्दश्चतुर्थो-

पनिपत्समासर्थः ।

इति चतुर्थोपनिषत्समाप्ता ।

पूजांगंयंत्रंचतुर्थोपनिषद्युक्तमंप्रतिप्रधानभूतांपूजानिरूपयितुं पंचमोपनिषत्प्रवर्त्तते तत्रापिविघ्नादीन्देवतांतरान् श्रीरामपूजांगत्वेनतच्छेषत्वेन तत्पूजने दोषाभावात्वंच संभावयन्तत्रतत्रतदंगत्वेनतत्पूजनमपि विधास्यतीतिज्ञेयं ।

**भूतादिकंचसोधयेद् द्वारपूजांकृत्वा-पद्माद्यासनस्थः प्रसन्नः । अर्घाविधावस्य-पीठाधरोध्वं पार्श्वार्चनं मध्यपद्मार्चनंच ॥ ८५ ॥**

भूतादिकंशोधयेदित्यादि पृथिव्यब्जेस्वासनाधः प्रकल्प्येत्यन्तयुग्मं भूतंपृथिव्यादिपंचकं आदिशब्देनात्माप्रतिमापूजाद्रव्यंक्षितिश्चेतिग्राह्यं तत्रभूतशुद्धिः यं रं यं वं लं हमित्यैतैर्यथा क्रमंवाय्वाग्निजलपृथिव्याकाशवीजैः क्रमेणशोषणादाहननिःसारणप्लावन पिंडीकरणामूर्द्धादि पादपर्य्यंतांगप्रत्यंग । निष्पादनादिभिः मंत्रमहोदध्युक्तैर्ज्ञेयातत्रयमितिवायुवीजेन पूरकेषोडशवारजप्तेन शरीरपापपुरुषयोः शोषणंकृत्वा रमित्यग्निवीजेनकुम्भकेचतुः षष्ठिवारजप्ते नोभयोः दाहनंकृत्वा पुनः यंवीजेनरेचकेनद्वात्रिंशद्वारजप्तेन केवल पापपुरुषभस्मनासिकाद्वाराद्वहिः निःसार्य्य वमितिजलवीजेन-

पूरके षोडशवार जप्तेनस्वशरीरभस्मप्रसिच्य लमितिपृथिवी वीजेनकुम्भकेचतुः षष्टीवारजप्तेनतत्पिण्डीकृत्य हमित्याकाशवीजेनरेचकेद्वात्रिंशद्वारजप्तेन तस्मिन्पिंडेमूर्द्धादि सर्वानवयवान्निष्पाद्य तस्यनिष्पन्नस्यशुद्धशरीरस्य प्राणप्रतिष्ठामंत्रेण प्राणप्रतिष्ठांकृत्वा तंप्रतिष्ठितप्राणंस्वशरीरं करन्यासहृदयादिन्यासराममंत्रवर्णादिन्यास राममंत्रान्तरन्यासैः श्रीरामशरीरं निष्पाद्य श्रीरामसदृशोभूत्वा पश्चाद्राममर्च्चयेदित्यत्र देवोभूत्वादेवंयजेन्नादेवोदेवमर्च्चयेदित्ये वमादीनिवचनान्तराण्यपि प्रमाणानिसंति इत्थमेवोक्तं मंत्रमहोदधिकारेण देवार्चायोग्यताप्राप्त्यैभूतशुद्धिंसमाचरेत मूलाधारस्थितांदेवींकुंडलींपरदेवतामित्यादिकमुक्त्वाह एवंभूतानिसंचिंत्यप्रत्येकंप्रविलापयेत भुवंजलेजलंवन्हौ वन्हिंवायौनभस्यमुम् विलाप्यतमहंकारे महत्तत्वेप्यहंकृतिंमहांतंप्रकृतौमायामात्मनिप्रविलापयेत्² शुद्ध सच्चिन्मयोभूत्वाचिंतयेत्पापपूरुषं दक्षिणकुक्षिस्थितंकृष्णमंगुष्ठ परिमाणकम्³ विप्रहत्याशिरोयुक्तंकनकस्तेयवाहुकं मदिरापान हृदयंगुरुतल्पकरद्वयं⁴ पापिसंयोगपदद्वन्द्वमुपपातकरोमकं खड्ग चर्मधरंदुष्टमधोवक्त्रंसुदुःसहम्⁵ वायुवीजंस्मरन्वायुंसम्पूर्यैनंविशोषयेत स्वशरीरयुतंमंत्रीवन्हिवीजेननिर्दहेत्⁶ कुम्भकेपरिजप्तेनततः पापनरोद्भवं वहिर्भस्मसमुत्सार्य्य वायुवीजेनरेचयेत्⁷ सुधावीजेनदेहोत्थंभस्मसंप्लावयेत्सुधीः भूवीजेनघनीकृत्यभस्मतत्कनकाण्डवत् विशुद्धमुकुराकारं चपन्वीजंविहायसः मूर्द्धा-

द्विपादपर्य्यंतान्यङ्गानिरञ्चयेत्सुधीः आकाशादीनिभूतानिपुनरु-
त्पादयेच्चितः सोहंमंत्रेणचात्मानमानयेद्धृदयाम्बुजे कुंडली
जीवमादाय परसंगात्सुधामयम् संस्थाप्यहृदयाम्भोजे मूलाधार
गतांस्मरेत्[११] भूतशुद्धिंविधायैवप्राणस्थापनमाचरेत् प्राणप्रतिष्ठा
मंत्रस्यमुनयोऽजेशपद्मजाः छंदःस्यादृग्यजुःसामप्राणशक्तिस्तु
देवता आंबीजं ह्रीं शक्तिचक्रौंतथाकीलकंस्मरेत्[१३] भूतशुद्धिं
सुधीःकुर्यात् विनियोगःसुसंस्थितः ऋषीन्शिरसिवक्त्रेतु छंदां
सिहृदिदेवतां गुह्येबीजंपदोः शक्तिंसर्वांगेकीलकंन्यसेत् कृत्वा
ऋष्यादिकंन्यासंततःकुर्यात् षडंगैक मित्यादि शेषणादा-
हनप्लावनैर्भूतशुद्धिः । आत्मशुद्धिर्वैराग्येनप्रतिमाशुद्धिः
अनुलेपनक्षालनेन पूजाद्रव्याणांशुद्धिः केशकीटाद्यपाकर्षेण
क्षितिशुद्धिः उपलेपनरंगमालादिनाज्ञेया पूजकोभूतादिकंशो
धयेदित्यन्वयः कीदृशःपूजकः द्वारपूजां चतुर्ष्वपिद्वारेषुविहि-
तांपूजांकृत्वा पद्मस्वस्तिकासनस्थः प्रसन्नः चित्तनैर्मल्यवान्
अस्यप्रकृतस्यरामस्यपूजाविधौकर्त्तव्येसतिविघ्नंदुर्गामित्यादीन-
र्च्चयेदिति तृतीयश्लोकेनान्वयः किंकृत्वापी ठाधरोधर्मर्चनं-
कृत्वापार्श्वार्च्चनंकृत्वा मध्यपद्मार्चनंचकृत्वा प्रयोगस्तुपीठस्या-
धोभागायनमः पीठस्योर्ध्वभागायनमः पीठस्यपूर्वपार्श्वायनमः
पीठस्यदक्षिणपार्श्वायनमः पीठस्यपश्चिमपार्श्वायनमः पीठ-
स्योत्तरपार्श्वायनमः इतिपीठाधरादिपूजा अथपीठमध्यगत-
कमलायनमः ।

कृत्वामृदुश्लक्ष्णसुतूलिकायांरत्नासने देशिकंचार्चयित्वा । शक्तिंचाधाराख्यकांकूर्मनागौपृथिव्यब्जेस्वासनाधः प्रकल्प्य ॥ ८६ ॥

मृदुश्लक्ष्णेति पीठाद्बहिरेवास्यवामभागे मृदुकोमलाश्लक्ष्णास्निग्धासुतूलिकाशोभनासूलपुटीतस्यांभावितेरत्नमिश्रित सिंहासने भावितंदेशिकमाचार्य्यं चार्चयित्वा स्वासनाधः स्वशरीरित्वेनपूर्वोक्तरीत्यास्वाभिन्नतयाध्यातस्य रामस्यासनंपूजा पीठंतस्याधोभागे आधाराख्यशक्त्यादि पंचकंप्रकल्प्य अत्रायं प्रयोगः पूजापीठस्याधोभागे आधारशक्त्येनमः तदुपरिकूर्मायनमः तदुपरि शेषायनमः तदुपरि पृथिव्यैनमः तदुपरि कमलायनमः॥ ८६ ॥

विघ्नं दुर्गांक्षेत्रपालंच वाणींवीजादिकांश्चाग्निदेशादिकांश्च । पीठस्यांघ्रिस्वेषु धर्मादिकांश्च नञ्पूर्वांस्तांस्तस्यदिक्ष्वर्चयेच्च ॥ ८७ ॥

अग्निदेशादिकानाग्नेयनैर्ऋत्यवायव्यैशानदेशिकान् वीजादिकान् गं दुं क्षं सं तद्बीजपूर्वकान्गणेशदुर्गाक्षेत्रपाल

सरस्वतीदेवानर्चयेत् अत्रायंप्रयोगः पीठस्याग्नेय्यांदिशिगं-
गणपतयेनमः नैऋत्यां दुं दुर्गायैनमः वायव्यां क्षं क्षेत्रपाला
यनमः इशान्यां सं सरस्वत्यैनमः पीठस्यांघ्रिष्वितिएषु आग्ने
य्यादिदिग्स्थेषु आग्नेयादिकोणक्रमेणैवधर्मादिकान् धर्मज्ञान
वैराग्यैश्वर्य्याण्यर्चयेन् तान्धर्मादिकान् नञ्पूर्वान् अधर्माज्ञा-
नावैराग्यानैश्वर्य्याणीत्यर्थः तस्यपीठस्यपूर्वादिदिक्ष्वर्च्चयेत्८७

मध्येक्रमादर्कविध्वग्नितेजांस्युपर्यु-
पर्यउमैरर्चितानि। रजःसत्वतमःएता-
निवृतत्रयंबीजाढ्यंक्रमाद्भावयेच्च॥८८॥

कमलमध्ये उपर्युपरिक्रमादर्कविध्वग्नि तेजांसि-
अउमैः अकार उकार मकारैः प्रणवांशभूतैः अर्चि-
तानि समन्वितानि अर्चयेदित्यनुकर्षः रजःसत्वतमः एता-
निसत्वादिक्रमेण सबीजान्येवसंरतं एतत्पूर्वकंयथास्यात्तथा-
वृत्तत्रयत्वेनभावयेत् चकारादर्चयेदपि अत्रायंप्रयोगः कमल
मध्ये अं अर्कायनमः तदुपरि उं उडुपतयेनमः तदुपरि मं
अग्नये सं सत्वायरंरजसे तं तमसेनमः ॥ ८८ ॥

आशाव्याशास्वप्यथात्मान मंतरा-
त्मानंच परमात्मानंमंतः। ज्ञानात्मानं

चार्चयेत्तरयदिक्षुमाया विघ्नयेकलापार-
तत्वे ॥ ८९ ॥

अंतःकर्णिकायांमध्येआशासुपूर्वादिदिक्षु आत्मादींश्च-
तुरः पूजयेत् व्यासास्वपिविदिक्ष्वपि अग्नेयादिषुतानेवपूजयेत
तच्चावरण पूजादिवद्दिदिक्ष्वात्मादीन्दिक्षुच निबृत्यादिकाः
संपूजयेदित्युत्तरेणान्वयः परमेवपारंपारंचत्तत्वं चेतिपारतत्त्व
मित्यत्रस्वार्थेऽणप्रत्ययः ॥ ८९ ॥

संपूजयेद्विमलादींश्च शक्तीरभ्यर्चये-
द्देवमावाहयेच्च ।

विमलोत्कर्षणी ज्ञाना क्रिया योगा प्रव्ही सत्याई-
शानानुग्रहाख्याः नवशक्तीः पूर्वादिदिक्षु आवाहयेदर्चयेच्च
देवं श्रीराममावाहयेच्चकारादर्चयेच्च आवरणपूजामाह ।

अंगव्यूहानिलजाद्यैश्चपूज्य धृष्ट्या
दिकैर्लोकपालैस्तदस्त्रैः ॥ ९० ॥

अंगादीनिव्यूहशब्दे नात्मादयः सशक्तिका वासुदे-
वादयश्च अनिलजाद्यैरिति अनिलजोहनुमांस्तदादि भिरष्ट-
भिःसहपूज्यपूजयित्वा धृष्ट्यादिकैरष्टभिः मंत्रिभिः लोकपालै
रिंद्रादिभिः तदस्त्रैरिंद्राद्यायुधैर्वज्रादिकैः सहितमाराधयेदि-

त्युत्तरश्लोकेनान्वयः ॥ ६७ ॥

वशिष्ठाद्यैर्मुनिभिर्नीलमुख्यैराराधयेद्राघवं चंदनाद्यैः । मुख्योपहारैर्विविधैश्च पूज्यतस्मै जपादींश्च सम्यक् समर्प्य ॥ ९१ ॥

वशिष्ठादिभिर्द्वादशभिर्मुनिभिः प्रागुक्तैः नीलमुख्यैः षोडशैर्वानरैःपरिवृत्तं राघवंचंदनाद्यैः पूजयेत् आदिशब्देन पुष्पधूपादयः मुख्यैः श्रेष्ठैः पवित्रैः उपहारैः नैवेद्यैः विविधैः अनेकधास्वादुमद्भिः पूज्यपूजयित्वा तस्मैराघवायजपादीन्सम्यक्समर्प्य राघवमाराधयेदित्यन्वयः जपादीनित्यादिपदं यंत्रपूजनप्रधानपूजादिसंग्रहार्थंसम्यक्समर्प्येति साधुवासाधु वाकर्मयद्यदाचरितंमया तत्सर्वंभगवन् रामगृहाणास्मत्कृतं जपं गुह्याद्गुह्यस्यगोप्तात्वंगृहाणास्मत्कृतंजपं सिद्धिर्भवतुमेदेव त्वत्प्रसादात्कृपानिधे इतः परंप्राणबुद्धिमनोदेहधर्माधिकारतः जाग्रत्स्वप्नसुषुप्त्यवस्थासुमनसावाचाहस्ताभ्यां पद्भ्यामुदरेण शिश्नायत्स्मृतंयदुक्तं यत्कृतंतत्सर्वंब्रह्मार्पणमस्तुस्वाहेतिब्रह्मसमर्पणमंत्रेणतथामांमदीयंच सकलमस्मत्स्वामिने श्रीरामचन्द्रायसमर्पयामि ॐ तत्सत् आत्मानं श्रीरामचन्द्रायसमर्पयामिस्वाहेत्येवमादिमंत्रैश्च मंत्रजपादीन्तथात्मीयान्सर्वानैहि-

कान्पारलौकिकान् तथात्मानंचसम्यक्मनसावाचा समर्पयेदि-
त्यर्थः ॥ ९१ ॥ अथपूजांगध्यानमाह ।

एवंभूतंजगदाधार भूतंरामंवन्देस-
च्चिदानन्दरूपं । गदाऽब्जशंखारिधरंभ-
वारिंसयोध्यायेन्मोक्षमाप्नोतिसर्वः॥९२

इयंपूजा कायिकमानसिकभेदेनद्विधा तत्रैवंभूतं रामं-
वंदेइत्यंतेनकायिकींसमापयन् मानसीमाह सयोध्यायेदिति
एवंभूतं अनिलात्मजाद्यैः सहरामंपूजयित्वातथाभूतंयोध्यायेत
अथवा बाह्यपूजायांसर्वजनाधिकारत्वानुक्तेस्तदनधि कारिणा-
मपि श्रीरामप्राप्तये सर्वजनसाधारणीं पूजांविवक्षन् राघवमा-
राधयेदित्यंतेनकायि कींसमाप्य वंदेइत्यंते न तथा पूजितं-
तंस्वयं नमस्यन्मानसींविधत्ते सयोध्यायेदितिएवंभूतः ततः
सिंहासनस्थः सन्द्विभुजोरघुनंदनः धनुर्धरः प्रसन्नात्मासर्वा-
भरणभूषित इत्युक्त लक्षणमुक्तप्रकारेणानिलजाद्यैः सहपू-
जितं रामंयोध्यायेत् तथा चमानसोपचारैस्तथातत्पूजनं विना-
तादृशध्याना नुपपत्तेस्तत्रमानसीपूजाप्यर्थादुक्ताभवतिशास्त्रां-
तरे तस्याअप्युक्तेः साप्यन्यत्रोक्तान्यथा नुपपद्यमाना अस्या-
मुपनिषद्युक्तां स्वमूलभूतां मानसींसूचयतीत्यवधेयं सयइति-
तत्रसर्वजनाधिकारं ज्ञापयतिसुरा सुरनरा नरेषुमध्येयः कश्चि

दित्यर्थः सुरासुरोवाप्यथ वानरोनरः सर्वात्मनायः सुकृतज्ञ-
मुत्तमं भजेतरामंमनुजाकृतिंहरिं य उत्तराननयत्कोशला-
न्दिवमिति तथैवस्मरणात् तदानींतनानामनालोचित विशे-
षणां सर्वेषामयोध्यावासित्व मात्रेणतच्छरणगतानां तद्वाम-
गमनत्व श्रवणाच्च एतदेवस्फुटयन् ननुतथातद्ध्यातृपुमध्येक-
श्चिद्विघ्नहतश्चेत्तदासनमोक्षतीत्यप्याशंक्याह मोक्षमाप्नो-
तिसर्व इतिविघ्नहतोपिद्ध्यातान देवतांतरभक्तवत्संसरति
किंतु तद्ध्यानेनैवविघ्नं तज्जातंपापंवाविनाश्य देहांतेतंप्राप्नो-
तीत्यर्थः बाध्यमानोपि मद्भक्तोविषयैरजितेंद्रियः प्रायः प्राग-
ल्भयाभक्त्याविषयैर्नाभिभूयते इत्येवमादि वचनेभ्यः ननुशां-
तत्वादिगुणसंपन्नं विनान्यस्यमोक्षाधिकारो नास्तीतिचेन्न
योयंस्मरेतिसतद्रूयोभवति यंयंवापिस्मरन्भावंत्य जत्यंतेकलेवरं
तंतमेवेतिकौंतेयेति केवल तत्स्मरणपरस्यापि तत्प्राप्तिस्मर-
णात् नन्वमानित्वादं भित्वादि ज्ञानसाधनविहीनः कथंमो-
क्ष्यतीतिचे त्त त्राहभवारिमिति भवहेतुकामक्रोधादिविनाश-
पूर्वकंमोक्षहेतुशांत त्वदान्तत्वाद्यमानित्वा दंभित्वादिगुणो
त्पादनद्वारास्वभक्तमोक्षप्रदमित्यर्थः तेषांसततयुक्तानांभजतां-
प्रीतिपूर्वकं ददामिबुद्धियोगंतं येनमामुपयांतिते तेषामेवानु-
कंपार्थमहमज्ञानजंतमः नाशयाम्यात्मभावस्थो ज्ञानदीपेन-
भास्वतेतिभगवद्वचनात् अथवा तथाध्यानेन वैराग्यमिति-
श्रुते स्तद्ध्यानजन्याऽब्रह्मलोकवेतृ तृष्त्वमस्य कामादिनाशं-

विनास्वतः निष्पन्नो रात्यंतिकवैराग्येनांतरी कनयैवमोक्षविरो-
धितद्धेतुगुणयोर्विनशोत्पत्तिनिष्पत्तेः ससाधनमोक्षैकसाधनेन
ध्यानेनैवमोक्षमाप्नोतीत्यर्थः श्रूयते च कामनानाशानंतरंम-
र्त्यस्यमोक्षाप्तिः यदासर्वेप्रमुच्यंते कमायेऽस्यहृदिस्थिताः
अथमर्त्योमृतोभवत्यत्र ब्रह्मसमश्नुते इतिननुतथापि कथंदाश-
रथेर्मनुष्यस्यध्यानेन मोक्षमुपपद्यते इतिचेत्तत्राह जगदाधारं
गदाब्जशंखादिधरमिति चाइदंतद्विषयिक प्रातीतिकमनुष्यत्वा
दिवुद्धिनिरासार्थकं नायंमनुष्यः किंतुजगदाधारभूतो गदाब्जा
दिधरोनारायणश्च अयमस्तीत्यर्थः अस्फुटयामासेममेवार्थं
भगवान्वाल्मीकिः आत्मानंमानुषंमन्यै रामंदशरथात्मजमि-
त्यात्मनिष्ठमानुषत्व बुद्धिदृढीकुर्वंतंराघनमुद्दिश्य परमेश्वरत्व
विधायकैर्भवान्नारायणोदेवः सीतालक्ष्मी एकश्रृंगवराहत्वं
कृष्णोवृहद्बलस्त्व मित्यादिवचनैः एतदर्थप्रकाशनपराणि
रामोनारायणः साक्षाजज्ञेविष्णुःसनातनइत्यादीनि पुराणादि
वचनानि नन्वत्रभवान्नारायणोदेवइतिवाक्यं रघुनाथनिष्ठ
नारायणावतारत्वप्रकाशकमितिचेन्न तथासतिनारायणसहप-
ठितैकश्रृंगवराहादीनामपितुल्य युक्त्याराघवकारणत्वप्रासौयु-
ग्यद्बहुचेतनानां मिलित्वैकरूपत्वेनस्थित्यनुपपत्तेः क्रमेणतुत-
न्निष्ठत्तत्तदवतारत्वप्रकाशकानि तानिवाक्यानीत्यपिनोपपद्यते
इदानींतेषुमध्येकस्यायमवतार इतिनिर्णेतुमशक्यतयामहर्षिव
चनेषून्मत्तप्रणीतत्वप्रसक्तेः अपरंच तत्रविनिगमनाविरहादन्य

नरस्यापि रघुनाथकारणत्वनिश्चयेन महर्षिवचनेषुपरस्परविरु-
द्धार्थकत्वेनाप्रामाण्यत्वप्रसक्तेः रघुनाथनिष्ठनारायणकार्यत्व
मुकश्रृंगादिकारणत्व प्रकाशकानितानित्यपिनोपपद्यते विनिग-
मनाविरहात् नारायणपक्षे रामोनारायणःसाक्षादित्यादिकंपु-
राणादिवचनं विनिगमकमस्तीतिचेन्न जज्ञेविष्णुःसनातनः
अवताराह्यसंख्याताहरेः योधत्तेसर्वभूतानामभवायोशतीःकलाः
इतितत्तत्पक्षेपि विनिगमकसत्वात पुनर्बहूनामवतारित्वानुपप-
त्त्याविनिगमक वाक्या नामपिपरस्पर विरोधेना प्रमाण्यापत्तेः
तेषामितरवाक्यमूलत्वेनानुमित श्रुतिबलात्तद्वाक्यस्य बली-
यस्त्वस्वीकारे तुल्ययुक्त्यातत्तद्वाक्य मूलत्वेनानुमितानांता-
सांश्रुतीनामपिबलेन सर्वेषामपि वाक्यानां तुल्यबलत्वोपपत्या
तत्प्रतिपाद्यानांबहुत्वेनैकस्याप्यवतारित्वानिष्पत्ते स्तासांश्रुती-
नामपिपरस्परविसंवादित्वे नोन्मत्तप्रणीतवेदस्या प्रमाणत्वापत्ते-
अतस्मात्ब्रह्मणोरूपकल्पनेत्यादिश्रुतेःभवान्नारायणोस्तिनाराय-
णोभवानस्तीत्येकस्मिन्वाक्ये श्रीरामनारायणपदयोरुभयोःक्रि
यान्वयित्वेनतदितरनिष्ठप्रकृतित्वानिश्चयेपि एकश्रृंगवराहस्त्वं
कृष्णस्त्वमित्यादि पुनारायणवाक्यसहपठितवाक्येपुत्वमेक
श्रृंगोसि इत्येवंत्वंपदस्यैव क्रियान्वयित्वोपपत्तेःएकश्रृंगादिस्त्व-
मसीत्येवमेक श्रृंगादीनां क्रियान्वयित्वानुपपत्तेश्च प्रकृतेर्विकृ-
तेर्वापियत्रोक्तिः स्याद्वयोरपिवाचकः प्रकृतेः संज्ञांगृह्णाति-
विकृतेर्नत्वित्युक्तरीत्यापि त्वंपदवाच्यस्यश्री रामस्यैव

प्रकृतित्वोपपत्यैक श्रृंगादिकारणत्व सिद्ध्या तत्सह पठितनारायणस्यापिकारणत्वनिष्पत्तेः इतिहासपुराणादि दृष्टविष्णु नारायणादि कारणत्व वाक्यानां वहुत्वेन परस्परं विसंवादित्वात तद्द्वारानुमिति श्रुतीनामपिवहुत्वेनपरस्पर विसंवादित्वोपपत्तेः कल्पिताभ्यस्ताभ्यः क्लृप्ताया ब्रह्मणोरूप कल्पनेतिश्रुते र्वलीयस्त्वात् अस्याविरोधेनतेषांवाक्यानांतद्-नुमित श्रुतीनांचाशिष्टप्रणीत वदप्रमाणत्वेवक्तव्येपिशिष्ट प्रणीतत्वेन सर्वथाऽप्रमाणीकर्त्तुमयोग्यात् तानिमुख्यार्थ परि-त्यागेन गौणार्थ परतयार्थांतर परत्वेननेतव्यानि आर्थांतरश्च मनुष्यत्ववुद्धि निरासः प्रकृतेऽवगम्यते आत्मानंमानुषंमन्ये तत्रमानुषवुद्धिरेवा भवदितीदृश वचनैर्मनुष्यवुद्धेः प्राप्तत्वात् तथाचभवान्नारायणो एकश्रृंगश्च नामानुषइत्युक्त्या वहूना-मेक कारणत्वानुपपत्तेः एकस्यतुयुगपत्सौभरीवदनेकशरीरधा-रित्वोपपत्तोः तापिनीय श्रुतिमंत्रेभ्यश्च श्रीरामस्यैव कारणत्व निष्पत्तेः जगदाधारभूतं सच्चिदानंदरूपं रामंवंदे इत्युक्ते सति ननुजगदाधारत्वंचक्रधारिणः उपपद्यते यच्चकिंचिज्जग-त्यस्मिन्दृश्यते श्रूयतेपिवा अंतर्वहिश्चतत्सर्वंव्याप्यना रायणस्थितश्रुतेरित्याशंक्याह गदाब्जशंखादिधरमितिअयमे-वगदादिधारीनेतोन्योसोस्तीत्यर्थः ॐयोवैश्रीरामचन्द्रः सभग वान्योब्रह्मांडस्यांतर्वहिर्व्याप्नोतियोविराडितिमंत्रात् श्रीराम-स्यैवगदादिधरत्वमुच्यते चेत्तदागदादिधरंगदाद्युपलक्षितमित्य-

र्थः नन्वत्रयथाश्रुतंकिंनोच्यतेइतिचेन्न पूर्वत्रधीरोधनुर्धर इति धनुर्धरत्वश्रुतेः द्विभुजयोर्धनुर्बाणधारणत्वोपपत्तेश्च वेदोपबृंहणभूतेष्वितिहासपुराणादिषु हनुमदादिपरिवृतस्य रामस्यगदादिधरत्वानुक्तेश्चास्यवचनस्य धनुर्बाणयोरिवगदादीनामपि श्रीरामायुधत्वज्ञापनमात्रपरत्वोपपत्तेः ननुशंखचक्रेगदाब्जेधृत्वेत्युत्तरत्र स्वर्गारोहणसमये तस्यापि शंखचक्रादिधरत्वंश्रूयते तदनुरोधेनात्रापितथात्वमुच्यतेइतिचेन्न तत्रापि चतुर्भुजाविष्करणत्वाश्रुतेः द्विभुजयोरायुधचतुष्कधारणानुनरूपाच्चधृत्वेत्यस्यतदुपलक्षितः तत्सहितइत्यर्थकत्वोपपत्तेः ननुशंखादिधारणत्वोक्तेरन्यथानुपपद्यमानत्वात् शंखादिधारणत्वलिंगतया तस्यचतुर्भुजाविष्करणत्वंकल्पनीयमितिचेन्न क्लृप्तकल्पितयोःक्लृप्तस्यबलीयस्त्वात् लिंगात्श्रुतिर्बलीयसीति मीमांसकोक्तेः द्विभुजश्रुतिविरोधेन शंखादिलिंगस्य स्वार्थपरत्वबोधेन शंखादिधारणत्वोक्तेर्लक्षितार्थकत्वेनान्यार्थपरत्वोपपत्तेः तस्मादत्रशंखचक्रेगदाब्जेधृत्वेति श्रुतेरुपबृंहणभूतात् शरानानाविधाश्चैव धनुरायतमुत्तमं पंचायुधाश्च तेसर्वेययुःपुरुषविग्रहा इत्यादि महर्षिवचनात् शंखचक्रादिसहितः सदावृतःसन्स्वधामजगामेतिबोध्यं नचात्रावताराणामैहिकविग्रहत्वेनयावत्पृथिव्यांस्थितिस्तावद्विभुजःसन्स्वर्गारोहणसमये पारमेश्वरंचतुर्भुजरूपमाविष्कृत्यपरंपदंजगामेतिवाच्यं ऐहिकविग्रहत्वेवतारत्वस्यहेतुत्वे स्वीकारेनारायणोपनिषन्महोपनिषत्प्रतिपाद्यस्यनारायणस्य पुराणोक्तपुरुषावतारस्य च समान

धर्मकत्वेन नारायणस्यापिक्षीराब्ध्यादाववतीर्णत्वात् तद्विग्रह स्यार्य्यैच्छिकत्वोपपत्याऽनित्यत्वप्रसक्तेःनच चतुर्भुजपदेहेतुरस्तु समास्त्विति वाच्यं द्विचत्वारिषडष्टेत्यत्रचतुर्भुजस्यार्य्यैच्छिकत्व श्रुतेः अन्यथा सर्वेनित्याशाश्वताश्चेति भगवद्विग्रहमात्रस्य नित्यत्वशाश्वतत्वादिनैच्छिकत्वस्मरणाच्च नापिपृथिवीतलाव तीर्णत्वमैच्छिकविग्रहत्वेहेतुर्वाच्यः तथासतिचतुर्भुजस्यपृथिवीत लावतीर्णत्वात्श्रीकृष्णस्यार्य्यैच्छिकत्वेनानित्यत्वप्रसक्तेः भगव द्विग्रहत्वंहेतुकृत्यश्रीकृष्णदृष्टांतेनपृथिवीतलानवतीर्णस्यापिभ गवद्विग्रहमात्रस्यैच्छिकत्वेनानित्यत्वप्रसक्तेः नचचतुर्भुजस्याव तारत्वेय्यैच्छिकविग्रहत्वा भावादनित्यत्वंमास्त्विति वाच्यं द्विच- त्वारीत्यत्रतस्यापि कल्पितत्व श्रुत्यैच्छिकत्वोपपत्तेः अन्यथा- वाराहवाक्यतः सर्वेषांभगवद्विग्रहाणामनैच्छिकत्वसिद्धेः नतु पारमेश्वरंरूपंतर्कगम्यं तर्काप्रतिष्ठानादितिसूत्रात् किंतुवेदैक- गम्यंतंत्वोपनिषदंपुरुषंपृच्छामइतिश्रुतेः तथाचवेदपुराणादौचतु र्भुजंपारमेश्वरं रूपंश्रूयतेइतितदनुरोधेनैव विग्रहांतरस्यैच्छिकत्वं वदामइतिचेन्न द्विचत्वारिषडष्टासांदशद्वादशषोडश अष्टा- दशामीकथिताहस्ताः शंखादिभिर्युतासहस्रांता इतिश्रुतेः- श्रुत्यंतरेषुचपुराणादिषुच द्विहस्तादिसहस्रहस्तपर्य्यंतेष्वन्यतर हस्तवत्वस्यपारमेश्वर रूपत्वंतुल्यंश्रूयते तत्रविनिगमनविरहान्न कस्याप्यधिकत्वमुपपद्यते नापिन्यूनत्वंननुतथापि पुराणेषुचतु

१ सर्वेपच्छिकविग्रहाः भगवद्विग्रहत्वात् श्रीकृष्णविग्रहवत् ।

भुजस्यैववहुशः आधिक्यंश्रूयतेइतिचेन्न तत्रापिसहस्रशीर्षादि
पुरुषस्यैववहुशआधिक्योक्तेः संख्ययापितदवयवाधिक्येन लो
कस्यापितत्राधिकपारमेश्वरत्वप्रतीतेः किंचास्यैवक्षीराब्धि-
शयानस्यनाभिहृदयाम्बुजाद्ब्रह्मोत्पत्तिपूर्वकं विश्वसृष्टिरभू-
दित्याह श्रीभागवतपुराणे जगृहेपौरुषंरूपमादौलोकसृक्षया
यस्यांभसिशयानस्ययोगनिद्रामुपेयुषः नाभिहृदांबुजादासीद्ब्रह्मा
लोकपितामहः यस्यावयवसंस्थानैः कल्पितोलोकविस्तरः
पश्यंत्यदोरूप मदभ्रचक्षुषासहस्रपादादिभुजानाद्भुतमि त्यादि
नातथाचजगत्कारणस्य क्षीराब्धिशायिनः सहस्रभुजत्वोक्ते
स्तत्रैश्वरत्वबुद्धिं विहायकेनविशेषेण चतुर्भुजविग्रहे एवतव-
पारमेश्वरत्वबुद्धिर्जातानन्वेदार्थस्यातिगूढत्वात् तदर्थर्षि-
प्रणीतवाक्यार्थविचारेणतन्निश्चेतुं शक्यमितीतिहासपुरा-
णादि पूर्वापरवाक्याविरुद्धार्थ विचारेणचतुर्भुजस्यैव पार-
मेश्वरूपत्वमवगम्यतेइतिचेन्न स्वपरंपरोपदिष्टार्थ भावना-
भावितानांशास्त्रार्थविचारसमयेपि स्वोपास्यार्थएववोत्कृष्टत्वेन
भासतेतत्रैवतद्रुचिविशेषात् शास्त्रतत्वंतुकश्चिदधिकारी
विशेषश्चेष्ट देवतानुग्रहीतोजानातिसतुसर्वेनित्याशाश्वताश्च
देहास्तस्यपरात्मनःइत्यादिकंनिर्विरुद्धवाराहवचनमवलंव्येयादृशा
कृत्यादिमंतस्तास्तादृशानेव नित्यपरमेश्वररूपत्वं मन्यते
अनुभूयते चभावुकैस्तथैव तेतच्चसर्वेषामुपासकानां तथैव-
मंतव्यं अन्यथाभगवद्विग्रहेष्वन्यतरस्यैच्छिकत्वा नित्यत्वप्रस-

क्तिर्दुवारा किमुतवहूनामैच्छिकत्वा नित्यत्वस्वीकारेण एकत्र सादुं वारितिवक्तव्यं ननुवहूनांकारणत्वासंभवे नयदेकं सर्वकारणंतच्चतुर्भुजमेवेतिचेन्न भगवता श्रीमुखेनैव चतुर्भुजस्यमुख्यरूपत्व निषेधात्तथाहितेनैवरूपेण चतुर्भुजेन सहस्रवाहोभव विश्वमूर्ते इतिवचनाद्गीतोपदेष्टा चतुर्भुजश्रीकृष्णः नतुमांशक्यसे द्रष्टुमनेनैवस्व चक्षुषा दिव्यंददामितेचक्षुः पश्यमेयोगमैश्वरमि त्युक्त्वार्जुनस्यदिव्यांदृष्टिंदत्वा स्वमीश्वरं रूपं चदर्शयित्वाह नाहंवेदैर्नतपसानदानेनचेज्यया शक्यएवं विधोद्रष्टुं दृष्टवानसिमांयथा भक्त्यात्वनन्ययाशक्योह मेवंविधोर्जुन ज्ञातुंद्रष्टुंचतत्वेन प्रवेष्टुंचपरंतप इतिपुरुषः सपरमार्थभक्त्या लभ्यस्त्वनन्येतिच तथाच श्रीमुखेनैव विश्वरूपस्य चतुर्भुजादुत्कृष्टत्वं अनन्यभक्तिज्ञेयत्वं दृश्यत्वंमुक्तप्राप्त्वं चोक्त्वातत्रतत्रमत्तः परतरंनान्यत् मयि सर्वमिदंप्रोतं मत्कर्मकृन्मत्परमो मद्याजीमां नमस्कुरु मामेष्यसि सत्यंतेप्रतिजानेप्रियोसिमे सर्वधर्मा न्परित्यज्यमामेकंशरणंव्रजेत्यादि वचनैस्तस्यैवोत्कृष्टत्वं ज्ञापितमित्यवगम्यते एतदेवाभिप्रेत्यपौराणिकाः व्यासादयो पिस्वयंत्वसाम्यातिशयस्त्र्यधीशइत्यादि वचनैस्तद्दृष्ट्यैव श्रीकृष्णस्योत्कृष्टत्वंवोधयंतीतिचावगम्यते नचात्रचतुर्भुजे एवविश्वरूपत्वंदर्शितं भगवतापुनश्चतुर्भुजरूपेणातत्स्थित्युक्तेर्विश्वरूपाधिकरणं चतुर्भुजंतत्कारणत्वेन वास्तवंरूपंभाव्यमितिवाच्यं दिव्यंददामिते चक्षुः पश्यमेयोगमैश्वरम

तथा नाहंवेदैर्नतपसाभक्त्यात्व नन्ययाशक्योहमेवं विधो-
द्रष्टुंमि त्यादिवचनैर्विश्वरूपस्यदिव्यचक्षुदृश्यत्वं मुक्तप्राप्य-
त्वं च प्रकाश्य चतुर्भुजस्यचरमदृश्यादिसूचनेनततो वहुन्यू-
नत्वसूचनात् नचायमर्थस्तर्केणापनेयः यतः सच्छास्त्रप्रमाण-
वतांयथाशास्त्रं वर्त्तितव्यं शास्त्रंतुबोधयतिसर्वेषां भगवद्विग्र-
हाणां दिव्यत्वंनित्यत्वं च तथा त्वेष्टंशास्त्रंगीताख्यं विश्वरू-
पस्योत्कृष्टत्वं बोधयति निषेधयति च चतुर्भुजस्य तत तत्किं-
नस्वीक्रियते शास्त्रैकप्रमाणवतापित्वयाकस्माद्दाग्रहविशेषा-
च्छ्रुतिवचनंस्वेष्टदेववचनं चानादृत्यवर्त्तसे ऽर्थांतरेकोवास्वार्थ-
प्रतिपादने प्रमाणांतर निर्पेक्षत्वेनस्वतः प्रमाणभूताभ्यः
श्रुतिभ्यः स्वभाविकसर्वज्ञेभ्यः श्रीकृष्णावाराहादिभ्यश्चा
धिकतरः यद्बलेनतदुक्तवैपरीत्येतवाग्रहविशेषः शास्त्रप्रमाणवं
तस्तु बेदविरुद्धभगवद्वचनमपिनमन्यंते किमुततत्सृज्यकोटि-
गतान्यवचनं वेदेतुयथासहस्रशीर्षा पुरुषस्यमहत्वंश्रूयतेन
तथा चतुर्भुजस्य भगवतापितस्यैवोत्कृष्टत्वंप्रकाशितं विश्व-
रूपंपरंज्योतिः स्वरूपंरूपवर्जितं हृदामांसंस्मरन्ब्रह्मन्मत्पदं-
यातिनिश्चित मितिगोपालतापिनीयोपनिषद्यपि तस्यैवो-
त्कृष्टत्वंश्रूयते मान्यंचतद्भक्तानामवश्यंतद्वचनं अन्यथास्व-
स्वामिवचनविरोधःश्रुतिविरोधश्चभविष्यतीत्यतः स्वस्वाग्रहं
विहायश्रीकृष्णोपासकैश्चतुर्भुजोपासकैरन्यैश्चापिविश्वरूपमेव
तद्रूपमुपासनीयं इदानींतस्यानुपासने पितद्भक्तानांदेहांते

विश्वरूपप्राप्त्युपपत्तेः तच्चतद्वचनादेवज्ञायते भक्त्यात्वनन्या शक्यः पुरुषसपरपार्थभक्त्यालभ्यस्त्वनन्ययेत्यादेः ननुयंयं-वापिस्मरन्भावंत्यजंत्यंतेकलेवरतंतमेवेतिकौंतेयसदातद्भवभावित इत्यादिवचनादेव वसुदेवनन्दनंस्मरताम स्माकंतस्यैवप्राप्ति भविष्यतीतिचेन्न तत्रेश्वरत्वबुद्धिशैथिल्येन विश्वरूपएवेश्वर त्वबुद्धिदार्ढ्यपूर्वकं तत्प्राप्त्युपपत्तेः कुतः इतिचेत् विष्णु-पुराणीयवाक्य मवलंब्य त्वादाचार्यैर्भगवद्ध्यानवतांतन्ना मोच्चारकानामपितत्रदृढेश्वरत्व बुद्धिंविनामोक्षाभावत्वसूच-नात् ईश्वरत्वानीश्वरत्वज्ञानंतुशास्त्रैकजन्यमिति तदर्थशास्त्रा र्थावलोकनस्यावश्यकतयात्वयाविशेषतः स्वेष्टदेवप्रणीतं गीताशास्त्रं गोपालतापिनीयोपनिषदं चेत्युभयंविचारनीय मिति तदर्थविचारसमये नतुमांशक्यसेद्रष्टुं नाहंवेदैर्न-तपसा भक्त्यात्वानन्ययाशक्यतथाविश्वरूपं परंज्योतिहृदामां-संस्मरन्ब्रह्मन्मत्पदंयातीत्यादि वाक्यार्थ विचारेणावश्यं विश्वरूपएवनिर्बाधितेश्वरत्वबुद्ध्युत्पत्ते रन्यत्रजातपूर्वापीश्वर-त्वबुद्धिः शैथल्यंयास्यतीति कृत्वायावन्नतत्रेश्वरत्वबुद्धि दार्ढ्यपूर्वकं तद्भजनंतावन्नसंसृति निवृत्तिः किन्तुचतुर्भुजरूप श्रीकृष्णभजनप्रभावात्परमैश्वर्यंप्राप्स्यसीतित्वदाचार्य्यैर्भागवता मृताख्यग्रंथे विष्णुपुराणीयवाक्यमवलंब्य श्रीरामनृसिंहमूर्तिं ध्यायतोस्तन्नामोच्चारकयोरपि तत्रतदीश्वरत्वबुद्धिंविना राव-णहिरण्य कश्यपादीनां मोक्षाभाव परमैश्वर्याप्राप्त्येः प्रतिपा-

दनात् श्रीरामनृसिंहमोक्षप्रदत्व प्रतिपादनद्वारा तत्रानीश्व-
रत्वसूचनपरस्य तवस्वेष्ट देवपरत्व प्रतिपादनाय तवेष्टदेवेन
भगवता श्रुतिभिश्चकारितां विश्वरूपे परमेश्वरत्त्वबुद्धिविहाय
चरमदृष्टिदृश्येचतुर्भुजे तस्मिन् अर्वाचीनपुरुषप्रणीत वाक्य
मवलंव्येश्वरत्वमुक्तप्राप्यत्व बुद्ध्युत्थननस्या युक्तत्वाच्चानु-
त्पन्नायां तत्रपरमेश्वरत्व मुक्तप्राप्यत्वबुद्धौ नंदनंदन वसुदेव
नंदनोपासने कृतेपितवांतःकरण आविष्टविश्वरूप निष्ठेश्व
रत्वमुक्तप्राप्यत्वस्यांतकाले अवश्यस्मृति संभवेन देहांतेतव
तत्प्राप्ते दुर्वारात् जीवतोपितव सदाविश्वरूपस्यैवोपासन
मुचितं यतश्चवभौभूः पक्कसस्याढ्याकलाभ्यांनितरांहरेः अंशां
शेनावतीर्णस्यशितकृष्णकेशा वित्यादिवाक्य जन्यनंदनंदन
वसुदेवनंदन विषयिकांशत्वबुद्धिनिराशाय मत्तःपरतरंनान्यत्
किंचिदस्तिधनंजय कृष्णस्तुभगवान्स्वयमित्येवमादिक
विश्वरूपविषयिक वाक्याश्रयणमवश्यं कर्त्तव्यंत्वया आश्र
यंति च तद्विषयकानि वाक्यानि स्वेष्टदेवपरत्व प्रतिपाद-
नावसरे द्वयोर्विग्रहयोरेकत्वबुद्ध्यास्वाधिशांतये त्वदर्थाः नतु
विविच्यैवमुभयोः स्वरूपभेदमवधारयंति येतुतथातज्जानंति
तेपितद्दृष्ट्या द्वयोरेकत्वबुद्ध्यावास्वपरं परोपास्यतयातमेवो-
पासंते नतुसाक्षाद्विश्वरूपं दिव्यचक्षु विषयं स्वेष्टदेवेनकृपया
नन्यभक्तिलभ्यत्वेनज्ञापितं तथाप्युपायांतरेण भगवत्प्राप्त्यनु
सर्वेषांभगवद्विग्रहाणां परमेश्वर नित्यरूपत्वं स्वीकरणीयं

क्तेरनन्यभक्त्याप्रपत्त्यावा चरमचक्षुर्दृश्यत्वे नच तत्प्राप्ति रित्यभियुक्तवचनाच्चजातायां तादृशभक्तौप्रपत्तौ वा नंदनंदन वसुदेवनंदन द्विभुज चतुर्भुजविग्रह भजतामवश्यं तस्यैव प्राप्तिर्भविष्यतीतियं श्रीमुखेनानन्यभक्तिप्राप्यतयोक्तवान् "भक्त्यात्वनन्ययाशक्योयोहमेवंविधोर्जुन। ज्ञातुंद्रष्टुंचतत्वेन प्रवेष्टुंचपरंतप॥ पुरुषःसपरःपार्थ भक्त्यालभ्यस्त्वनन्यये"त्यादि ना नचतत्र पाद्मिकीतत्प्राप्तिरुक्तेतिवाच्यं ऋतेज्ञानान्नमुक्ति रितिश्रुत्या वस्तुयाथात्म्यज्ञानं विनामुक्तेर्निषेधात् अर्जुनंप्रति दर्शितस्यैव विश्वरूपस्य दिव्यरूपत्वाच्च गीतायां विश्वरूपं विनाप्राप्यांतरस्यानुक्तेश्च गोपालतापनीयोपनिषद्यपि विश्वरूपंपरंज्योतिः स्वरूपैरूपवर्जितं हृदामासंस्मरन्ब्रह्मन्मत्पदंया- तिनिश्चितमिति ब्रह्मणं स्वकीयकृष्णरूपसेवाविदधता श्रीनारायणेनापिकृष्णसे विनोपि हृदा विश्वरूपस्मरणपूर्वकं तत्प्राप्त्युक्तेः नचतत्रस्वविग्रहस्यैव विश्वरूपत्वेनस्मर- णंविधत्तमितिवाच्यं तथाप्यन्यत्रविश्वरूपत्व विधानात्तस्यैवा धिक्योपपत्तेः तस्मात्तदेवरूपमुपास्यं विद्वन्मुमुक्षूणांयुष्माकं यत्स्वानन्यभक्तिप्राप्यत्वेनोक्तवानखिलपरंपराप्रवर्त्तकत्वेनापि जगद्गुरुर्भगवान्वासुदेवो विस्मृततत्त्वस्मारकः तथाचसति पूर्वोपास्योपासनात्यागेन तवसंप्रदायविच्छित्तिरित्यवश्यं त्वयापि। सर्वेनित्याशाश्वताश्चेत्यादि वाराहवचनमवलंब्य तथाचसति श्रीरामनृसिंहयोः स्वभाविकेश्वररूपत्वाभावात्त-

दर्शनस्मरणादिना रावणादीनांमुक्तिर्नाभूत श्रीकृष्णस्य चतुर्भुजत्वेन स्वाभाविकेश्वररूपत्वात्तद्दर्शनस्मरणादिना शिशुपालोमुक्तः इत्यभिप्रायवतात्वदाचार्येणयद्व्याख्यातंतत्त्सर्वमसंगतंयातं सर्वेषांनृसिंहादीनांपरमेश्वर नित्यस्वरूपत्वेपियावन्नविप्रशापावसानं तावन्नतत्रहिरण्यकशिप्वादीनामीश्वरत्व वुद्धिर्जाता नचतेमुक्तायत्तेदवसानेतु तत्रशिशुपालस्येश्वरत्व वुद्ध्युत्पत्तिपूर्वकंतद्वधेनमोक्षइत्येवं विष्णुपुराणीयवाक्यव्याख्यानस्ययोग्यत्वा त्तत्रयैः चतुर्भुजस्यैवपरमेश्वरस्वाभाविकविग्रहत्वंमन्यते तन्मते तद्विग्रहांतराणामनित्यत्वमर्थसिद्धं यैस्त्ववतारत्वसमयेदृष्टद्विभुजस्यापिस्वर्गारोहणसमयेचतुर्भुजत्वंस्वीक्रियते तन्मतेभगवत्यवताराणामनित्यत्वं चतुर्भुजस्यैव वास्तविकत्वेनतद्विग्रहांतराणामर्थादैच्छिकत्वसिद्धेः तच्चभगवद्विग्रहमात्रनित्यत्ववोधकवाराहवचनविरुद्धं। "योयंस्मरतिसतद्रूपोभवति" यंयंवापिस्मरन्भावंत्यजंत्यंतेकलेवरमित्यादिवचनविरुद्धं च अन्यरूपस्मर्त्तुर्देहांतेभगवद्रूपांतरप्राप्तेरनुपपत्तेः किंच विष्णुत्वमुपजग्मिवान् महार्णवेशयानोप्सुमांत्वंपूर्वमजीजन इत्यादिना विष्णुनारायणादी नामप्यवतारत्वोक्तेरुक्तरीत्या तद्विग्रहस्याप्यनित्यत्वंतुल्यं प्रसक्तमिति कृत्वासाकारत्वपक्षविघातेन निर्विशेषवादप्रसक्तिः यदितु न-

१ विप्रशापत्व।

चसविष्णुर्नारायणोत्रास्माकमुपास्यः किंतुनारायणपरःसाक्षा-
द्वैकुंठनिलयोहरिः अर्चावतारतांप्राप्तो भक्तानां हितकाम्य-
येत्यादिवाक्यविषय इत्युच्यते तदा नारायणोपनिषदि महोप-
निषदिच नारायणाद्ब्रह्मरुद्राद्युत्पत्तेः श्रवणात्त त्समानार्थ-
केषु ॥ "यस्यांभसिशयान स्य योगनिद्रामुपेयुषः नाभिहृदा-
म्बुजादासीद्ब्रह्म" त्यादिपुराणवाक्येषु क्षीराब्धिशायिनो
ब्रह्मादिकारणत्वोक्तेः शास्त्रांतरेपिकारणवाक्यगतस्यनाराय-
णशब्दस्य सर्वशाखाप्रत्ययन्यायेन क्षीराब्धिशायिनिपर्यव-
सानात् "जगृहेपौरुषंरूपंभगवान्" इति तस्यापि च हरि-
प्रथमावतारत्वोक्तेरुक्तरीत्यातद्विग्रहस्याप्यनित्यत्वंसमानंननुनव
यमवतारभूतं चतुर्भुजमुपास्महे किंत्ववतारिणमतोनतत्रा
नित्यत्वप्रसक्तिरितिचेन्न द्विचत्वारि षडित्यत्र चतुर्भुजस्याप्य-
वतारत्वश्रुतेः उपनिषदंतरेपुतस्यावतारित्वा श्रुतेश्च ननु
"नारायणः परः साक्षाद्वैकुंठ निलयोहरिः अर्चावतारतांप्रा-
प्त" इत्यस्यवाक्यस्य मूलत्वेनतादृशीश्रुतिः कल्प्यतेइतिचेन्न
द्वयोरवतारित्वानिष्पत्तेः बलात्साकल्प्यते चेत्तदाक्लृप्तक-
ल्पितयोः क्लृप्तस्यबलीयस्त्वात् "उपासकानांकार्यार्थं ब्रह्म-
णोरूपकल्पनेतिक्लृप्त श्रुतिविरुद्धार्थ कत्वेनकल्पितायास्तस्याः
स्वार्थपरत्वबाधेनतद्गतवैकुंठशब्दस्य क्षीरार्णवपरत्वेनरमावैकुं-
ठपरत्वेनवानेतव्यत्वात्तद्गतपरशब्दस्यतु अर्चावताराऽपेक्षया-
स्वार्थलाभात् क्षीराब्धिशाय्यवतारित्वस्यान्यथा सिद्धिवत्वै-

कुंठनिलयावतारित्वस्याप्यन्यथासिद्ध्यातद्भक्तस्याप्यवतारत्वो-
पपत्ते रुक्तरीत्यातत्राप्यनित्यत्वप्रसक्तेरवश्यंत्वयापि श्रीवाराह
वाक्यानुरोधेनसर्वेषांभगवद्विग्रहाणां नित्यत्वंस्वीकरणीयं
स्वीकृते च सर्वेषांनित्यत्वेपुनर्बहूनांमूलकारणत्वा नुपपत्तेरव-
श्यमेकेनमूलकारणेन भाव्यमिति पुनस्तज्जिज्ञासायां पूर्वापर
वाक्यानांपरस्परमविरोधेन वेदार्थविचारणासमये भगवद्विग्रहां-
तराणांमूलकारणभेदेन जगत्कारणत्वश्रुतेरपितेषां मन्यतरस्या
पिस्फुटमवतारित्वाश्रुतेः क्वचिच्छ्रुतस्यापिजगत्कारणत्वस्यो-
क्तरीत्यान्यथासिद्धेः श्रीरामचन्द्रस्यतु " उपासकानांकार्यार्थं
ब्रह्मणोरूपकल्पने " तिस्फुटमवतारित्वश्रुतेः तत्रचान्यथा
सिद्धिवचनानवकाशेन तद्वास्तवत्वोपपत्तेश्च इतिहासपुरा-
णादिवाक्यानांश्रुत्यनुयायित्वेन तदनुरोधेनैवनेतव्यत्वात्
पुराणादिपठित विष्णुनारायणादिकारणत्वस्य श्रीरामकृष्णा-
दिविषयकप्रातीतिकमनुष्यत्वादि बुद्धिनिरासार्थपरत्वेनान्यथा-
सिद्धेः गीतायांस्वानन्यभक्तिलभ्यत्वेनोक्तस्यसहस्रबाह्वादि-
विशिष्टस्य तथाभागवते नानावतारकारणत्वेनोक्तस्यसहस्र-
बाह्वादिविशिष्टस्य तथा सहस्रशीर्षापुरुष इतिश्रुतस्य च तथा
विश्वरूपंपरंज्योतिर्ब्रह्मरूपमिति श्रुतस्यच तथाशंखादि-
धारिणश्चतुर्भुजस्य च द्विचत्वारिषडष्टादश द्वादशषोडश
अष्टादशामीकथिताः हस्ताःशंखादिभिर्युताः सहस्रांताइत्यत्र
श्रीरामावतारत्वश्रुतेः "श्रीरामस्यकलांशाद्वै अवताराभवन्तिहि

कोटिकोटिश्चकार्यार्थेसिंधौवीचीववैमुने”इत्यादीनांउपासकानां कार्यार्थं ब्रह्मणोरूपकल्पनेत्यादि श्रुतिसमानार्थत्वेन समूलकत्वनिष्पत्तेःश्च तथाद्विभुजोरघुनंदनः द्विभुजः कुण्डलीरत्न माली धीरोधनुर्द्धरइत्यत्र तस्यद्विभुजत्वधनुर्धारित्व श्रुतेः तथापदंपरमंयांतितेचेत्यत्रमुक्ता मांप्राप्नुवंतिते इत्यत्र च तस्यैव मुक्तप्राप्यत्व श्रुतेश्चसिद्धं श्रीरामस्यनित्यद्विभुजत्वं सर्वावतारित्वं मुक्तप्राप्यत्वं च अथवाकिंवहूक्तिभिर्धृत्वा व्याख्याननिरतश्चिन्मयः परमेश्वरः अर्द्धमात्रात्मकोरामोब्रह्मा नंदैकविग्रहः रामचन्द्रश्चिदात्मकः रमंतेयोगिनोऽनंतेसत्यानंदेचिदात्मनि एवंभूतंजगदाधारभूतंरामं वंदेसच्चिदानंद रूप मित्येवमादि श्रुतिभिः श्रीशार्ङ्गधारिणांरामं चिन्मयानंदविग्रहं विररामममहातेजाः सच्चिदानंदविग्रह इत्येवमादि स्मृतिभिश्च सच्चिदानंदरूपित्वेनोक्तस्य श्रीरामद्विभुजविग्रहस्य अवाधितस्वरूपत्वं सत्यत्वमिति लक्षणस्य सत्यत्वस्य सर्वदाह्यवाधित्वनिष्पत्तेः तथास्वप्रकाशज्योतिर्मयंत्वं चित्त्वमिति लक्षणस्य चित्त्वस्या विकारित्वोपपत्त्या विनाशित्व निष्पत्तेश्च द्विभुजत्व विनाशपूर्वकं चतुर्भुजत्वंनोपपद्यते अतोयः श्रीदशरथगृहे द्विभुजआसीत्सस्वर्गारोहण समये चतुर्भुजोवभूवेति वादिनांद्विभुजचतुर्भुजयोरौपाधिकत्व निरुपाधिकत्वाभिप्रायवतां वैष्णवमता नभिज्ञानां स्वपरंपरा ग्रहाभिनिवेशेनाविचारित श्रुतिस्मृति सिद्धांतानां मतमुक्तंतच्च श्रुतिस्मृति विरोधि-

त्वेन नादरणीयं सर्वासां श्रुतिस्मृतीनांपरस्पर विरोधपरिहारेण तदेकवाक्यता निष्पादनद्वारा सर्वशास्त्रसारार्थ निर्णयनिपुणैः पंडितशिरोमणिभिरितोप्य नादरणीयं तन्मतञ्चतुर्भुजस्यापि भगवद्वास्तव रूपत्वेनोपपद्यते नतुमांशक्यते द्रष्टुमनेनैव स्वचक्षुषेति चतुर्भुजस्य विग्रहस्य प्राकृतचक्षुर्दृश्यत्वे नावास्तववत्वंज्ञापयित्वा तेनैवभगवता दिव्यंददामितेचक्षुपश्यमेरूपमैश्वरमिति विश्वरूपस्य सहस्रभुजवतः वास्तव परमैश्वर विग्रहत्वं ज्ञापितंभवति तस्यसहस्रभुजस्यतुब्रह्मणो रूपकल्पनेत्यारभ्यद्विचत्वारिसहस्रांताः हस्ताइत्यंताभिः श्रुतिभिःद्विभुज रामाख्यस्यपरब्रह्मणोऽवतारत्वं ज्ञापितंभवति तस्मात्सर्वावतारिणो रामाख्यस्य ब्रह्मणोद्विभुज विग्रहस्यनित्यत्वनिष्पत्ते र्नतद्बाधपूर्वक चतुर्भुजत्वमुपपद्यते किंत्वौपाधिक नीलपीतादि रूपेणभास्यमानस्यवैदूर्यमणेरिवतस्य द्विभुजत्वेनवर्त्तमानस्यैवतत्तदुपासक कार्यार्थं चतुर्भुजादिरूपेण भास्यमानत्वमेव उपासकानां कार्यार्थं ब्रह्मणोरूपकल्पनेतिश्रुतिर्मणिर्यथाविभागेनेतिस्मृतिश्च तस्माद्द्विभुजत्वविग्रहस्यैव वास्तवत्वनिष्पत्तेः शंखादिधरशंखादिकं धृत्वाइत्यादीनां तद्धारणेतात्पर्य्यानुपपत्तेः शंखादीन्प्रकटीकृत्यतान्स्वसार्द्धं नीत्वापरपदंजगामेत्यर्थकत्वमुपपद्यते पंचायुधाश्चतेसर्वेययुः पुरुषविग्रहा इतितथैवस्मरणाच्चेत्येषादिक् ध्यान फलंसदृष्टांतमाह ।

विश्वव्यापीराघवोयस्तदानीमन्तर्दधेशंख-चक्रेगदाब्जे। धृत्वारमासहितः संवृतश्चसपत्त-नःसानुजःसर्वलोकी ॥ ९३ ॥ तद्भक्तायेलब्धकामाश्चमुक्तातथापदंपरमंयांतितेच ।

अत्रविश्वव्यापी अंतर्दधेइत्याभ्यांसविग्रहस्यैव राघवस्यसर्वव्यापकंसूचितं अशरीरिणः सर्वव्यापकस्यपरमपद गमनानुपपत्तेः पुनः सपत्तनः सर्वलोकीत्याभ्यां श्री अयोध्यापत्तेः सर्वलोकेश्वरत्वं सर्वलोकेश्वरस्यापितस्यायोध्या वासिमात्रप्राणिनांस्वधामप्रापकत्वेन स्वशरणागतानामेव परंपदप्राप्तियोग्यत्वंचसूचितंभवति विश्वव्यापी सर्वेलोकाः संत्यस्येतिसर्वलोकीराघवे रघुवंशेआविर्भूतोरामोयः सतदानीं-स्वर्गारोहणसमये शंखादिकांन्धृत्वा तदुपलक्षितस्तत्सहित इतियावत् द्विभुजयोरायुधचतुष्कधारणानुपपत्तेः वाल्मीकिनापिशंखादीनां तत्सार्द्धगमनत्वस्मरणाच्च शरानानाविधाश्चैवधनुरायत्तमुत्तमं पंचायुधाश्चतेसर्वेययुः पुरुषविग्रहा इतिअत्रविश्वव्यापी अंतर्दधेइतिपरमपदगमनसमये विश्वव्यापित्वोक्त्येतिसूचितंभवति श्रीरामः स्वर्गारोहणसमये विश्वव्यापकत्वेनसूचित सर्वशरीरित्वेनसर्वशब्दवाच्यार्हं सर्वनियंतृसर्वप्रकाशकंमहातेजसं स्मरेन्नमध्येदाशरथिं सहस्रादित्यतेजसं द्रष्टुमिच्छसियद्रूपंमदीयं भावनस्येदमित्याद्युक्तं

स्वभक्तस्मरणीयंरूपंप्रत्यक्षीकृत्य स्वधाम अगमत्इत्येवस्फुटय ति सर्वलोकी सर्वलोकस्वामी प्रत्यक्षीकृतसर्वलोकस्वामित्वद्योतकरूपइत्यर्थः एतदभिप्रायकानि आगच्छविष्णोभद्रंते दृष्ट्याप्राप्तोसिमानद ! अथविष्णुर्महातेजाः पितामहमुवाचहे त्यादिकानिमहर्षिवचनानिसंति तत्र विष्णुशब्दः विश्वव्यापकत्ववचनः वेवेष्टीतिविष्णुरिति निरुक्तेः महातेजः शब्दस्तु तदाविष्कृततेजस्त्वस्यतत्रैव-" ततः प्रतिष्ठितोविष्णुः स्वर्गे लोके यथा पुरा येन व्याप्तमिदंसर्वंत्रैलोक्यंसचराचर" मितितद्व्यापकत्वनिर्वचनेन तस्यचतुर्भुजविष्णुतः पार्थक्यसूचनान्नचतत्रविष्णुनामश्रुतेः अत्रापिशंखचक्रेगदाब्जेधृत्वेतितल्लिंगश्रवणात् स्वर्गारोहणसमये वैष्णवंचतुर्भुजं रूपंप्रकटीकृत्यस्वधाम्निगतइतिवाच्यं अत्रचतुर्भुजत्वाश्रवणात् तदानींचतुर्भुजाविष्करणत्वानुक्तेश्च प्रत्युतविवेशवैष्णवंतेजः सशरीरः सहानुज इतिसशरीरस्य व्यापकतेजोदधानत्व सूचनात् अथवासभ्रातृकस्यशरीरस्यतस्यतेजः शब्दोपलक्षिततेजोमयविष्णुधामप्रवेशत्वोक्तेश्च महानुजइत्युक्तानुजानांविष्णुरूपधारणत्वानुपपत्त्या तत्साहचरितस्यतस्यापि विष्णुरूपधारित्वानुपपत्तेश्च अत्रोपनिषदि वाल्मीकीये च लक्ष्मणादीनांशेषशंखचक्ररूपधारणत्वानुक्तेस्तत्सहचारिणोरामस्यापि विष्णुरूपधारित्वानुपपत्तेः पुनश्चशरानाना विधाश्चैवधनुरायत्तमुत्तमं पंचायुधाश्चतेसर्वेययुः पुरुषविग्रहा-

इतितत्रैवशंखादीनांतत्सार्द्धगमन त्वोक्त्यात्राप्युक्तस्य शंखादि-
लिंगस्य तत्सार्द्धगमनोत्वोपपत्त्यार्थांतरपरत्वोपपत्तेः पुन-
श्च "महार्णवे शयानोप्सु मांत्वंपूर्वमजीजन रक्षांविधास्यन्
भूतानां विष्णुत्वमुपजग्मिवानि ति"राघवमुद्दिश्य विष्णवादि-
कारणत्वं विधाय पुनस्तमुद्दिश्य विष्णवादि कार्य्यविधाय-
कस्य महर्षेर्वचनेषून्मत्तप्रणीतत्ववदप्रमाणत्वप्रसक्तेश्च वेदे
वाल्मीकीये चराघवस्य द्विभुजत्व श्रुतेस्तत्रतच्चतुर्भुजत्वाश्रुतेश्च
अहंतवगृहेऽवतरिष्यामीति श्रीदशरथंप्रति विष्णूक्तेः मदव-
तारीतवगृहेऽवतारिष्यत्येवंतदनुक्तेश्चब्रह्मणोरूपकल्पनेत्यादि
श्रुतिविसंवादित्वेनाप्रमाणीकर्त्तुमयोग्यतयार्थांतरपरत्वेननेतव्य-
त्वात्तथा चाहमवतरिष्यामीति विष्णुवचनस्य आत्मा-
नंमानुषंमन्ये इतिवचनप्राप्ताया राघवेप्रातीतिक मनुष्यत्वादि
बुद्धेर्निरासार्थकत्वेनान्यथा सिद्धेर्मदवतार्यवतरिष्यतीत्यनु-
क्तेश्च भगवद्विषयिक कार्यकारणभेद निरासार्थकत्वोपपत्तेः
जगत्पालकस्यैवविष्णोः स्वभागग्रहणायावश्यं तद्यज्ञागमन-
त्वोपपत्तेश्च तदागमनानंतरं पुनस्तत्र तत्कारणस्या गमनात्
आकाशवाणीश्रवणाद्वा भगवद्विषयक कार्यकारणयोर्भेदत्व
प्रसक्तेश्च "अथविष्णुर्महातेजा आगच्छ विष्णोभद्रंते इत्यादि
कानिवचनानितु उक्तार्थं पराणीतिमंतव्यं द्रष्टुमिच्छसि
यद्रूपंमदीयंभावनास्पद मित्यादिकंवाक्यं तु नतदाकृत्यंतर-
सूचकं किंतुदिव्यदृष्टिविषयतदपाररूपलावण्यादि-

विषयकं "तावत्कथंतरुणिमौलिमणे ! जनानांज्ञानंदृढ़भवति भामिनिरामरूपे" इतितत्रैव श्रीजानकीचरणरतेः श्रीराम-रूपज्ञानदार्ढ्यमात्र हेतुत्वोक्तेः तस्यास्तद्रूपांतरप्रापकत्वा नुक्तेश्च यदितुभावनास्पदं रामरूपमन्याकारं स्यात्तदातत्र-जानकीचरणरतेस्तद्दर्शनहेतुत्वमुक्तंस्यात् पुनश्च स्फुर-त्कृपयातस्यस्वरूपंतस्याः परात्परमिति जानकीपरात्पर रूप दर्शनानंतरं वाहू मृणालमंदखंडनपंडितौ ते इतितत्रोक्त-द्विभुजया जानक्या सहविहर्तूराघवस्यापिद्विभुजत्वोपपत्तेश्-चेतिसंक्षेपः तदेवमुक्तरूपाविष्कारीराघवः रमासहितः रमयति-स्वरमयितारमपिराममितिरमाजानकी तत्सहितइत्त्यादीना-मप्युपलक्षकरमाशव्दस्तासामपि श्रीरामसार्द्धगमनत्वोक्तेः संवृतः परिवारसहितः सपत्तनः नगरनिवासिसर्वप्राणि-सहितः सानुजोभातृसहितः भ्रातृभिः सहदेवाभैः प्रविशस्वेतिस्मरणात् यथांतर्दधेस्वधामजगाम। तथापदंपरमं-यान्तीति द्राष्टांतवाक्ये अन्तर्धानपदस्थाने परपदप्रयोगात् किंचात्रसंवृतः सपत्तनइत्यादिश्रुतिः स्वनगरनिवासित्वेन स्वशरणागतानांस्वधामप्रापकत्वेन राघवस्य स्वशरणागत-प्रापकत्वं प्राप्यत्वं च स्फुटंवदति यथानतथाक्वापिश्रुतिर्भग-वत्स्वरूपांतरस्य स्वशरणागतानांस्वधामप्रापकत्वंवदती त्यतः स्वशरणागतोपायत्वं तदुपेयत्वंचराघवेप्रतिष्ठितं तद्भक्तेति-तथातेनप्रकारेणयेकिंचिदनालोचितविशेषास्तद्भक्ताः जग-

व्योमंत्रिणोत्याद्युक्तरीत्या तन्मंत्रजपतद्यंत्रपूजनतत्प्रधान-पूजनादिभिस्तदेकभजनतत्परास्तेपि लब्धकामान् आकांक्षां विनापि श्रीरामोपासनाप्रभावेणस्वतएवप्राप्तान् कामानभुक्त्वा-अनेनश्रीरामभक्तानामिहापिभोग प्राप्तिरुक्ताभवति परमंपदं-यांति तेचेतिचकारस्तद्भक्तसमुच्चयार्थः श्रीरामस्यभक्तेभ्योपि स्वभक्तानुभक्तानुभक्तेषुप्रीत्याधिक्योक्तेः ममभक्तभक्तेषु-प्रीतिरभ्यधिकायतइति तथा त्वद्भृत्यभृत्यपरिचारक भृत्यभृत्यभृत्यस्यभृत्यइतिमांस्मरलोकनाथ अर्चयित्वा-तुगोविन्दंतदीयान्नर्चयंतिये न तेविष्णुप्रसादस्यभाजनंदां-भिकाजना इतिकिंचयथायोध्यानिवासिनःश्रीरामेण-सरयूमवगाहयित्वा स्वसार्द्धं परमंपदंनीताः तथेदानींतना-अपितद्भक्ता विश्वव्यापित्वसूचितेन हार्दपुरुषरूपेण रामेण-सार्द्धंसुषुम्नयानाड्यातत्परंपदंयांतीत्ये तदपिविश्वव्यापिपदेन-सूच्यते सरय्वासुषुम्नारूपत्वंतु ब्रह्मसंहितायामुक्तं सरयूः सुषु-म्नैववहतीति किंचतद्भक्तायेलब्धकामाश्च मुक्ताह्यंतेपदंपर-मंयांतितेचेत्येवमुक्तेपितद्भक्तानां देहांतेपरपदप्राप्तिनिष्पत्तेस्तथे-तिदृष्टांतपदेनतेषां तत्सार्द्धंसुषुम्नैवतत्परमपदप्राप्ति सूचिता भवतीत्यवधेयं चिन्मयइत्यारभ्य एतदंतऋक्पाठस्य फलंद-र्शयन्कैमुतिकन्यायेनतत्सर्वांगभक्तानां प्राप्तकाममुक्तिपूर्वकं श्रीरामधामप्राप्तिंद्रढयंति ।

✽ श्रीजानकीवल्लभोजयति ✽

श्रीसीतारामाभ्यांनमः

# श्रीरामतापनीयोपनिषद्

## उत्तरार्द्ध



"तत्र काये लब्धकामांश्च भुक्त्वातथापदंपरमंयांतिते चेति" पूर्वतापिनीयान्ते श्रीराम भक्तानां परमपदप्राप्तिरुक्ता सा तेषां किं वर्त्तमानस्य देहस्यान्ते भविष्यति अथवादेहान्तरस्येति सन्देहे वर्त्तमानस्यैव देहस्यान्ते इतिज्ञापनाय "अत्रहिजन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्मव्याचष्टे येनासावमृत्तीभूत्वामोक्षीभवति। यएतत्तारकं ब्राह्मणोनित्यमधीते सपाप्मानं तरतिसोमृतत्वंचगच्छती" त्येवमादीनामुत्तरतापिनीयश्रुतीनां प्रवृत्तिरभूदिति ता सामर्थ विचारादेवावगम्यते तत्कथमितिचेत् काश्यांदेहत्यागकाले यस्य षडक्षरत्तारकस्य सकृच्छ्रवणमात्रेण प्राणिनोऽमृताभवन्ति सर्वदा तन्मन्त्रजपपरस्य देहावसाने मुक्तिर्भवतीति किंवक्तव्यमित्येवं कैमुत्यन्यायेन च काश्यामुपदेष्टुः रुद्रस्य प्रभावात्तदुक्तिमात्रेण सिद्धाअपि तन्मुक्तिः श्रौतप्रमाण।

दन्ते देहाकान्तैर्वैति वाच्यं "श्रीरामस्यमनुं काश्यां जजाप वृषभध्वज" इत्यारभ्य "मणिकर्ण्यां वामत्क्षेत्रे गंगायां वा तटे पुनः म्रियतेदेहितज्जंतोर्मुक्तिं नातोवरांतर" मित्यन्ता-नां वाक्यानामर्थ विचारेण तत्रोपदेष्टृरुद्रप्रभावस्याकिंचित् करत्वावगमात् अन्यथातन्मंत्रजपवरयांचयोर्वैयर्थ्यापत्तेः अतः षडक्षरप्रभावेनैव तन्मुक्त्युपपत्तेः श्रीरामवरदानस्य तु "क्षेत्रे तवास्मिन्देवेश यत्र कुत्रापिचामृताः कृमिकीटादयो प्याशु-मुक्ताः सन्तु न संशयः" इत्यस्य काशीजीव विषयकत्वेपि "त्वत्तोवा ब्रह्मणोवापियेलभन्ते षडक्षरं जीवन्तोमन्त्रसिद्धाः स्युरन्ते मांप्राप्नुवन्तिते" इत्यस्य तु ब्रह्मरुद्रसम्प्रदायद्वयान्य तर सर्वदेशीय षडक्षरजपपरप्राणिविषयकत्वावगमात् तत्कुतः उक्तसम्प्रदायद्वयान्यतर द्वारैवतेषां तन्मंत्रप्राप्त्युपपत्तेः "जान कीरुद्रागस्त्यपरं परया यं तारकमवनीतले प्रकाशयामासे" त्यभियुक्तैराचार्यैरपि जानकीरुद्रागस्त्य परम्परयैव षडक्षरस्या वनीतलेप्राप्त्युक्तेः तदन्यसम्प्रदायिनां स्व सम्प्रदायरीत्या-वर्त्तमानानां शास्त्रद्वारात्तान्मन्त्रज्ञाने जातेपि स्वसम्प्रदायप्राप्त मंत्रजपपरत्वदृष्टेः तेषांषडक्षरजपपरत्वादृष्टेश्चयेत्वन्यसंप्रदायि-नःषडक्षरजपपरास्तेषांययाकयापिरीत्याब्रह्मरुद्रसंप्रदायद्वारैवषड क्षरप्राप्त्युपपत्तेः तदन्यद्वारात्तत्प्रभृत्य श्रुतेस्तदनुक्तेश्च अन्य-था "त्वत्तोवा ब्रह्मणोवापी" त्यादिश्रुतेः जानकीरुद्रागस्त्य-परंपरयेत्याद्यभियुक्त वचनस्य च वैयर्थ्यापत्ते रित्यलमतिवि-

स्तरेण तद्वं " य९८. ।रकंब्रह्मणोनित्यमधीते सपाप्मा नंतरति सोमृतत्वंचगच्छतीति" जीवन्तोमंत्रसिद्धास्युरंतेमांप्राप्नुवंतिते " इत्तिलब्धषडक्षरतारकानांवर्त्तमानदेहांते श्रीरामप्राप्तिश्रुतेः निसंदेहैव श्रीरामभक्तानांदेहान्ते श्रीरामप्राप्तिः किंचात्र श्रीराममंत्रादिमाहात्म्यवर्णनपरे शास्त्रे काशीमाहात्म्यवर्णनस्य नकिंचित्प्रयोजनमस्ति तत्प्रकरणाभावात्किंतुत्तारकमंत्रमाहात्म्यप्रकाशनाय तदुपोद्घातत्वेन काशीपरंवाक्यं "यदनुकुरुक्षेत्रंदेवानांदेवयजनमि" त्यादिप्रश्नात्मकं "अविमुक्तंवैकुरुक्षेत्रमि त्यादितत्प्रतिवचनात्मकं च प्रक्षिप्य तत्रच "अत्रच हिजन्तोःप्राणोपूत्क्रममाणे पुरुद्रस्तारकं ब्रह्मव्याचष्टेयेनासात्रमृतीभूत्वामोक्षीभवतीति" श्रुत्याकाशीजीवादेहान्ते रुद्रोपदिष्ट तारकेन मुक्ताभवंतीत्यर्थं प्रकाशेन तत्रत्यजीवमोक्षकारणंतारकमितिस्पष्टीकृत्यानंतरं "यत्तारकंरुद्रउपदिशति तत्किं स्वरूपंकस्माच्चतारयति तत्तारकंजीवान्निति" किंतारकंकिंतरतीति" भरद्वाजेनपृष्टोयाज्ञवल्क्यआह "तारकंदीर्घानलंविंदुपूर्वकंपुनर्मायनमः " इत्येवंत्तारकस्वरूपंस्फुटीकृत्य तदनंतरं इत्योमिश्रुत्याइत्युक्तप्रकार कंतारकंषडक्षरं ॐ मिति ॐ कारात्मकंभवतीति तारकस्यप्रणवकारणत्वेनसर्ववेद सर्वमंत्रकारणत्वंप्रकाश्यानंतरं "ब्रह्मात्मकाः सच्चिदानंदाख्याइत्युपासितव्यमि" त्यनयातारकाक्षराणां ब्रह्मरूपत्वेनसच्चिदानंदाख्यात्वेन चोपासनंविधायतदनंतरं "अकारःप्रथमाक्षरोभवती"

त्यादिकं " तारकत्वात्तारको भवतीति च तदेवतारकंब्रह्मत्व विद्धीति " चोक्त्वानन्तरं " तदेवोपास्यमितिज्ञेयमि " त्येषा यद्गर्भजन्मादिभ्यस्तारकत्वात्तारकसंज्ञां प्राप्तंतदेवतारकमुपास्य मितिज्ञेयमिति गर्भजन्मादितरणाकांक्षिभिः न तु तारकसंज्ञा हीना अन्येमन्त्रा उपासितव्याज्ञेयाश्चेत्येवकारार्थः इत्ती-ममर्थंविधायानन्तरं तारकपदनिर्वचनपरा श्रुति रुक्तार्थंस्फुट-यामास " गर्भजन्मजरामरण संसारमहद् भयात् संतारयती-ति यस्मादेवं तस्मादुच्यतेतारकमिति " अत्रयदगर्भ जन्मादि-भ्योनत्तारयति तत्तारकसंज्ञांन प्राप्नोतीति मंत्रान्तराणांवेद पुराणादौ तारकसंज्ञात्वाश्रवणेन तेषां गर्भादितारकत्वानुपपत्ते र्न गर्भजन्मादितरणकांक्षिभिरन्येमन्त्राउपास्याज्ञेयाश्च किन्तु षडक्षरं तारकमेवेत्यर्थादुक्तंभवति एवं तारकस्यैकस्योपास्यत्वं ज्ञेयत्वंविधाय अथकिंतरतीत्यस्योत्तरंवदन्न तारकजपपरस्य सर्व पापविनाशाय प्रायश्चितान्तरमपेक्षितं न वा संसारत्तारणार्थ मुपायांतरं नवामन्त्रान्तरजपश्च यतएतत्सर्वं तारकजपेनैव भ-विष्यतीत्याहश्रुतिः "यएतत्तारकंब्राह्मणोनित्यमधीते सपाप्मानं तरति स मृत्युंतरतिसभ्रूणहत्यांतरति सब्रह्महत्यांतरति सवीरह त्यांतरति ससर्वहत्यांतरतिससंसारंतरतिमसर्वंतरतिसोविमुक्ता त्माश्रितोभवतिसमहान्भवतिसोमृतत्वंचगच्छती"त्येषाश्रुतिःता-रकजपपरस्य सपाप्मानंतरतीत्यारभ्यसोमृतत्वं चगच्छतीत्यंतेन तरति भवति गच्छतीति वर्त्तमानकालीन प्रत्ययैर्वर्त्तमानस्यैव

देहस्यान्ते संसारनिवृत्तिं वदति नचात्रसंसार निवृत्तिरुक्ता न तुवर्त्तमानस्यैव देहस्यान्ते इत्याशंकनीयं विचारादुक्तार्थोपपत्तेः तथाहिनायं तारकजपपरः देहान्ते नरकंगमिष्यति सपाप्मानं तरतीति तस्य नरकहेतु सर्वपापविनाशश्रवणात् न वायंपुण्य वशात् ब्रह्माण्डान्तर्वर्त्तिनि कस्मिंश्चिदिंद्रादिलोके गमिष्यति संसारं तरतीति तस्यसंसारसुखदुःख निवृतिश्रवणात् न चायं-पुनर्ज्जनित्वादेहांतरंप्राप्स्यतिइत्युक्तं ससर्वंतरतिसमृत्युंत रतीति तस्यजन्ममरणादिनिवृत्तिश्रवणात् तदेवंतस्य नर्कस्व-र्गपुनर्ज्जन्मप्राप्त्यनुपपत्ते रर्थात्परिशेषाच्चवर्त्तमानस्यैवदेह-स्यांते मुक्तिर्भविष्यतीत्युपपन्नमर्थमाह समृत्युंतरति सोऽमृतत्वं च गच्छतीति एवं सोऽमृत्तोभूत्वा कुत्रगत्वाकिंप्राप्स्यतीतिचेत् "तथापदंपरमंयांति तेच" जीवंतो मंत्रसिद्धास्यु रन्तेमांप्राप्नु वंतिते "इतिश्रुतिभ्यां श्रीरामधामगत्वा श्रीरामंसंप्राप्स्यती-तिब्रूमः "यंयंवापिस्मरन्भावंत्यजंत्यंतेकलेवरं तंतमेवेतिकौंतेय सदातद्भावभावितः" इतिभगवद्वचनादपिसदास्मृतं तारक-वाच्यं रामाख्यं परंब्रह्मैवप्राप्स्यति नातोऽन्यमिति यत्प्रतिज्ञातं श्रीरामभक्तानांपरमपदप्राप्ति र्वर्त्तमानस्यैव देहस्यान्तेभविष्य-तीति तदुपपन्नतरं एवं श्रीरामपूर्वतापिनीये अधिकारिणां चतुर्वर्गप्राप्त्युपायंनिरूप्य देहान्तेश्रीरामभक्तानांपरमपदप्राप्ति निरूपिता इदानीमधिकारिणामनधिकारिणांचसर्वेषां श्रीराम-प्राप्त्युपायं श्रीरामोत्तरतापिनीयोपनिषदानिरूप्यते राज्ञामेव

श्रीरामतापिनीयोपनिषद्मविद्यापनोदनींप्रकटयितुं कदाचित् मिथिलोपवने जनकोवैदेहआसांचक्रे तत्रयोगीश्वरः शिष्यसंघैर्मुनिगणैश्च परिवृत्ताआसीत् तत्रानेकैर्मुनिवरैस्तत्सर्वज्ञत्वमसहमानैः याज्ञवल्क्यः पृच्छ्यतेतत्रादौवृहस्पतिप्रश्नः।

वृहस्पतिरुवाचयाज्ञवल्क्यंयदनुकुरुक्षेत्रं।
देवानांदेवयजनंसर्वेषांभूतानांब्रह्मसदनम्॥१॥

वृहस्पतिः देवगुरुरुवाच याज्ञवल्क्यंयज्ञवल्क्यस्यापत्यंयत्प्रसिद्धं अनुपश्चात् सर्वत्रविहरतां विहारार्थंपरंसर्व तीर्थेभ्यउत्कृष्टतमं भूमेरुत्तमांगमितियावत् कुरुक्षेत्रं कुरुणाराज्ञापालितं अनादिसिद्धंक्षेत्रं देवानां देवयजनं देवैरिंद्रादिभिरपि देवः परमेश्वरोरामः इज्यतेयस्मिन्सर्वेषांभूतानांब्रह्मसदनंसर्वेषां ब्रह्मादिस्थावरांतानां ब्रह्मावाप्तिहेतुभूतंतत्किमितिशेषः विशेषणाद्वयविशेषितंकुरुक्षेत्रंप्रसिद्धमेव कुरुक्षेत्रमन्यद्वेत्तिसंदेहेउत्तरमाह।

अविमुक्तंवैकुरुक्षेत्रंदेवानांदेवयजनं।
सर्वेषांभूतानांब्रह्मसदनम्॥२॥

तस्माद्यत्रक्कचनगच्छतितदेवमन्येत।इदंवै-

कुरुक्षेत्रंदेवानांदेवयजनंसर्वेषां भूतानांब्रह्म-
सदनम् ॥ ३ ॥

अविमुक्तंकदाचिदपिविशेषेश्वरेणाविमुक्तं काश्यभिधंवैनिश्चयेन कुरुक्षेत्रंदेवानां देवयजनं सर्वेषांभूतानांब्रह्मसदनं अविमुक्तत्वात्तदुत्कृष्टतमं नास्तियस्मात् अथवा विशेषणद्वयविशेषितंकुरुक्षेत्रं अविमुक्तसंज्ञकमेवभवतियस्मात्तस्मात्यत्रकूचनगच्छति पंचकोशेषुयत्रकुत्रचिद्विचरति तत्रतत्रातदेवमन्येत देवानांदेवयजनंसर्वेषांभूतानां ब्रह्मसदनमेवजानीयात् कथमिति अमुनाप्रकारेण प्रकारमाह इदंवैइदमेवपंचकोशांतर्भूप्रदेशमेवकुरुक्षेत्रं देवानांदेवयजनं सर्वेषांभूतानां ब्रह्मसदनमिति अथावासोविमुक्तः कस्मिन्प्रतिष्ठितोभवतीति प्रश्नस्योत्तररूपायाः वर्णायांनाश्यांचमध्ये प्रतिष्ठितइतीत्यस्याः श्रुतेः नाशीवर्णायोर्मध्ये भूप्रदेशस्याविमुक्तंसंज्ञकत्वावगमात उक्तभूप्रदेशेयत्रक्कचनगच्छति विचरतितंतंभूदेशंतदेवदेवानांदेवयजनं सर्वेषांभूतानांब्रह्मसदनमेवमन्येत जानीयात् "अविमुक्तेतवक्षेत्रेयत्रकुत्रापिवामृताः कृमिकीटादयोप्यासुमुक्ताःसंतुन संशयः" इत्युत्तरत्राविमुक्तस्यब्रह्मप्राप्तिस्थानत्वश्रवणात कथंइतिकेनप्रकारेणामन्येतेतिपृष्ट "इदंवैकुरुक्षेत्रंदेवानांदेवयजनंसर्वेषांभूतानां ब्रह्मसदनमिति" इदमेवनाशीवरणायोर्मध्यमेवकुरुक्षेत्रंदेवानांदेवयजनं सर्वेषांभूतानां ब्रह्मसदनंभवतीति-

जानीयादित्यर्थः ।

अत्राहिंजन्तोः प्राणोषूत्क्रममाणेषु रुद्र स्तारकंब्रह्मव्याचष्टेये नासौअमृतीभूत्वामोक्षी भवति । तस्मादविमुक्तमेवनिषेवेत अविमुक्तंनविमुञ्चेदिति एवमेवैतद्भगवन्निति याज्ञवल्क्य ॥ ४ ॥

इतिप्रथमकण्डिका ।

अत्रअविमुक्तेहि यस्मात्जन्तोः अविचारिताधिकारानधिकारस्य प्राणिमात्रस्येत्यर्थः प्राणेषूत्क्रममाणेषु लोकान्तरं गच्छत्सु रुद्रः दुःखहारित्वात् रोदनाद्वा तारकं ब्रह्मश्रीराममन्त्रात्मकं " षडक्षरोवह्निपूर्वस्तारकस्त्वभिधीयते महापातकिनां पापदहनेदहनोपमः " इति पञ्चरात्रवचनात् " श्रीरामायनमोह्येतत्तारकब्रह्म संज्ञिकं नाम्नां विष्णोः सहस्राणां तुल्य एषमहामनुः । अनन्ताभगवान्मन्त्रानानेन तुसमाकृताः श्रियो रमणसामर्थ्यात् सौंदर्यगुणसागरात् " इत्यारभ्य " अद्यापि रुद्रः काश्यांतु सर्वेषांत्यक्तदेहिनां दिशत्येतन्महामन्त्रं तारकं ब्रह्मनामकं तस्यश्रवणमात्रेणसर्वे एवदिवंगता " इत्येतदंताद्धारित वचनाच्च मूमूर्षोर्मणिकर्णिक्यामर्द्धोदक निवासिनः अहंदिशामिते मंत्रंतारकं ब्रह्मसंज्ञितमिति " पाद्मीयशिववचनाच्चअत्रापिकिं तारकमितिपृष्टे तदुत्तरतयातारकं दीर्घानल

मित्यादिना षडक्षरस्वरूपोक्तेः ” मुमूर्षोर्दक्षिणेकर्णे यस्य कस्यापि वा स्वयं उपदेक्ष्यसि मन्मंत्रंसमुक्तो भविता शिवेत्युत्तरश्रुतेश्चव्याचष्टे दक्षिणे कर्णे कथयति येन तारकब्रह्मोपदेशेन असौ जीव अमृत्तीभूत्वा मोक्षीभवति मरणधर्मान्मोक्षीभवति नतुप्राकृताकारविशिष्ठ एवकाराग्रहादिवविमुच्यपुनः संसरति अत्रामृतीभूत्वेतीदं काराग्रहादिमोक्षव्यावर्त्तकं मोक्षीभवतीतीदं तु “ आभूत सम्प्लवांतंहि अमृतत्वं प्रचक्षते ” इत्युक्तस्यामृतत्वस्यव्यावर्त्तक तथाच दिव्याकारः सन् श्रीराम धाम्निगत्वातत्सायुज्यं प्राप्नोति “ तस्यश्रवणमात्रेण सर्व एव दिवंगता ” इतिस्मरणात “ त्वत्तोवाब्रह्मणोवापि येलभन्ते षडक्षरं जीवन्तो मंत्रसिद्धास्युरन्तेमाप्राप्नुवन्ति ” इत्युत्तरश्रुतेश्चषडक्षरश्रवणान्मोक्षस्तस्यसौलभ्य तत्रैवयस्मात्तस्मादविमुक्त मेवनिसेवेत अत्यादरेण सेवेत तत्रापिअविमुक्तं न विमुच्येतक्षेत्र संन्यासं कुर्य्यात् तत्सेविनोपिदेशान्तरगत्वा मृतस्य तारकोपदेशालाभेन मोक्षासंभवादित्यर्थः अंगीकारादाहगुरुः “एवमेतत् याज्ञवल्क्येति” ननु तस्मादविमुक्तनिसेवेत तस्य विधेः अत्रहि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्मव्याचष्टे इत्ययमर्थवादः स्यात् तस्याविमुक्तनिसेवनांगत्व प्रतीतेरितिचेन्न तस्यप्रमाणान्तर सम्वादित्वतद्विसम्वादित्व गुणवादत्वाभावात् विधिनिषेधान्यतर शेषत्वासम्भवाच्च तथा हि नतावदयमनुवादात्मकोऽर्थवादः “अग्निर्हिमस्य भेषजमिति”

वाक्यावत् अस्य वाक्यस्य प्रत्यक्षप्रमाणाविधारितस्य कस्य चिदननुवादकत्वात् न चायं गुणवादात्मकोर्थवादः "आदित्योवैयूप" इतिवाक्यस्य प्रत्यक्षेण सहविरोधवदस्य प्रमाणांतरेण विरोधाश्रवणात् न चाप्यत्र वायव्यं श्वेतमालभेत्यस्यविधेः "वायुर्वैक्षेपिष्टादेवतेति" शेषत्वश्रवणात् विध्यंतरस्यशेषताघटते तत्कथमितिचेत् अत्रविधिस्तुत्योरेकपदार्थविषयकत्वाश्रवणात्तथाहिविधितच्छेषत्वप्रदर्शनस्थले च यद्वस्तु निंद्यते तदेव निषिध्यते यद्वस्तुस्तूयते तदेवविधीयते च यथा "सोऽरोदीद्यद्रुद्रस्य रुद्रत्वंविशीर्यतेतद्धिरण्यंरजतमभूदिति" रजतंविनिंद्य तस्माद्बर्हिषिरजतं नदेयमितिबर्हिषितद्दानंनिषिध्यतेतथाच वायुर्वैक्षेपिष्टादेवतेतिवायुंस्तुत्य वायव्यंश्वेतमालभेतेति तदर्थमेवश्वेतपश्वालभनंविधीयते नचतथात्रश्रूयते किंतुतारकंस्तूयतेविधीयतेतुततोन्यदविमुक्तनिषेवनं तस्मान्नात्रोभयोर्विध्यर्थवादत्वप्रसंगः किंतु अत्रहिजंतोरितिश्रुत्यासप्तम्यातारकोपदेशभूमित्वेना विमुक्तस्यनिसेवनंविहितं यदित्वत्राविमुक्तनिसेवनं विधानमेवमुख्यं स्यात्तदा तदनन्तरं किमाकारकं तदविमुक्तं कथंच तन्निसेवेतेत्याकारकः प्रश्नः स्यात् न तु किं तारकं किं तरतीति तारकमंत्र विषयक प्रश्न एवं तारकस्याविमुक्तनिसेवनादुत्कृष्टत्वं प्रकाशयति अविमुक्त निसेवना देहान्तेतारकोपदेशेन मोक्षाश्रवणांतु अविमुक्तनिसेवनस्य तारकोपदेश लब्ध मोक्षफलेन फलवत्वात् फलव-

त्सन्निधावफलंतदंगमितिन्यायतोपितारकोपदेशांगत्वमवगम्यते यस्मात्तु "यएतत्तारकंब्रह्मणोनित्यमधीतेसपाप्मानंतरतिसोऽमृत्वं चगच्छती ति" निर्विशेषेणतारकावलंबिना सर्वदेशसर्वकाल सर्वावस्थासुमोक्षश्रवणं, तारकस्य स्वसाध्यसाधनेसहायांतरानपेक्षत्वं च " मणिकर्ण्यांवामत्क्षेत्रे गंगायां वा तटे पुनः । म्रियते देहितज्जन्तो मुक्तिर्नातोवरान्तरं ॥ मुमुर्षोर्दक्षिणेकर्णे यस्य कस्यापि वा स्वयं । उपदेक्ष्यसि मन्मन्त्रंसमुक्तोभविता शिवेति " वरदानात् पूर्वंतारकोपदेश राहित्येनाविमुक्त निवासिनामपि मोक्षाश्रवणं तदर्थंरुद्रेणवहुकालमन्त्रजपप्रसन्न श्रीरामचन्द्रलब्धवरदानपूर्वकं तारकोपदेशावलम्बनं चैतानि अविमुक्तस्य स्वनिवासिनां तारकोपदेशं विना मोक्षाप्रदत्वं तारकस्य देशांतरेपित्वालम्बिनामोक्ष प्रदानेसहायांतरनिरपेक्षत्वं सूचयन्ति तस्मादिदमवगम्यते यदनुकुरुक्षेत्रं देवानां देवयजनं सर्वेषांभूतानां ब्रह्मसदनं तस्माद्यत्रक्वचनगच्छति तदेवमन्येतकथंइदं वै कुरुक्षेत्रंदेवानां देवपूजनंसर्वेषांभूतानां ब्रह्मसदनं तस्माद्यत्रक्वचनगच्छति तदेवमन्येतकथं इदं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनमिति तत्प्रश्नोत्तरंदत्वा भूम्यंतरादविमुक्तस्योत्कृष्टतमत्वेकोहेतुरित्येवमपृष्टोपि गुरुणाहभगवानति कारुण्येन देशान्तरनिवासिनामप्यविमुक्त निसेवनलब्धफलसौलभ्याय " अत्रहिजन्तोः प्राणेषूत्क्रममाणेषुरुद्रस्तारकं ब्रह्मव्याचष्टे येनासौमृतीभूत्वा

मोक्षीभवतीति " तारकोपदेशभूमित्वेनाविमुक्तस्य निसेवनं च विदधदनंतरं किं तारकमिति प्रश्नस्योत्तरं तारकदीर्घान-लमित्यादिनादत्वा इत्योमितीति तारकस्यप्रणवकारणत्वोक्त्या मन्त्रांतरेभ्योऽस्योत्कृष्टतमत्वंद्योतयन् ब्रह्मात्मका सच्चिदानंदा-ख्याइत्युपासितव्यमिति तदेवोपास्य मितिज्ञेयमिति " चतस्य सर्वप्राणयुपासित्वं ज्ञेयत्वं चविधायानंतरं" यएतत्तारकंब्रह्मणो नित्यमधीतेसपाप्मानं तरतिसोऽमृतत्वंचगच्छतीति"तारकानु-ष्ठानतत्पराणांसर्वदेशसर्वकालसर्वावस्थासुअविमुक्तमरणाल-ब्धफलप्राप्तिः सुकरेतिप्रकाश्ययत्रकुत्रनिवासिभिःषडक्षरतारक नित्याध्ययन तत्परेणभवितव्यमिति ज्ञापयामासेतिननुतारक नित्याध्ययनपराणामन्यत्रमृतानामपि तुल्यफलंचेत्तर्हिअवि-मुक्त निसेवनेकिमाधिक्यमितिचेत् अत्रतन्नित्याध्ययनरहि-तानांप्रत्युदुराचारिणां च तथैवस्थावराणामपिमोक्षइतिब्रूमः यद्वाइदमेततकुरुक्षेत्रं सर्वेषांभूतानां ब्रह्मसदनमित्युक्तेसति कथंब्रह्मसदनमितिसंदिहानं बृहस्पतिंप्रति अविमुक्तस्य ब्रह्म-सदनत्वेहेतुं प्रकटयन्नाहश्रीयाज्ञवल्क्य अत्रहीति तथाचय-स्मादत्ररुद्रकृततारक ब्रह्मोपदेशेन प्राणिमात्रस्यब्रह्मप्राप्तिर्भवति तस्मादिदमविमुक्तं ब्रह्मसदनमित्युच्यते तःएनंनिषेवेत् एनंन-विमुच्येत्त इत्यर्थः ननुप्राणेषूत्क्रममाणे ष्वित्यनयाश्रुत्या प्रा-णवत्वाज्जंगमानामेव तारकब्रह्मोपदेशइतिचेन्न स्थावराणाम-पिप्राणवत्वाविशेषात् नहिप्राणरहितः कोप्यजनिष्ट तथाच

स्मृतिः यत्किंचेदं प्राणि जातजंगमंचप त्रिच यच्चात्रस्था वरंजातंतत्प्राणो नप्रतिष्ठितमिति जंगमेषुप्राणाभिव्यक्ति र्यथा तथास्थावरेषुनेतिविशेषः भूतानांप्राणिनःश्रेष्ठा इतिमनुवचन मपि तत्रप्राणाभिव्यक्ताभिप्रायकं नतुस्थावरेषुप्राणराहित्य सूचकं यच्चकिंचप्राणभृदिति श्रुत्यापदार्थमात्रस्यप्राणवत्वनि-र्देशातननु तथापिशास्त्राधिकारित्वा न्मनुष्याणामेवमुक्तिरिति-चेन्न क्षेत्रेस्मिन्तववदेवेशयत्रकुत्रापिवामृता कृमिकीटादयोप्या शुमुक्ताः संतुनचान्यथा मुमुर्षोर्दक्षिणेकर्णेयस्यकस्यापिवास्वयं उपदेक्ष्यसिमन्मंत्रंसमुक्तोभविताशिवेति अविमुक्तनिवासिनां-तदुपदेशायकर्णवत्वमात्रसापेक्ष्यात तर्हिमास्तुस्थावराणां तद-भावादितिचेन्न तस्मात्पश्यंतिपादपाः तस्माज्जिघ्रंतिपादपाः इतितेषांमपींद्रियवत्वस्मरणात् नन्वस्तुतेषामपिसतथापिकाशी वासकृतकर्मणांसत्वेकथं तदुपदेशादपिमुक्तिरितिचेदविमुक्त-स्योषरत्वेनतेषांकार्यकारित्वाभावादिति ऊषरंपुण्य पापानां धन्यावाराणसीपुरी इदंप्रियेक्षेत्रमतिप्रियंमेसंसार वीजोषरसू-षराणामितिस्मरणात्ननुतथापिसंचिद्रूपस्यकर्मणः सत्वंतद्बा-धकमितिचेन्न तदुपदेशसमकालएव तस्यापिभस्मत्वावगमात् तथाचसनतकुमारवचनं ब्रह्महत्यादिपापानितत्समानिबहूनिच स्वर्णस्तेयसुरापान गुरुतल्पायुतानि गोवधाद्युपपापानि अनृतात्सम्भवानि च सर्वैः प्रमुच्यते पापैः कल्पायुत शतोद्भवैरि तिमान संवाचकं पापं कर्मणा समुपार्जितं

श्रीरामस्मरणेनैव तत्क्षणान्नश्यति ध्रुवमिति अगस्त्योप्याह " दैनंदिनं च दुरितंपक्षमासर्तुवर्षजं अत्रवर्षशब्दोऽनेकजन्मोपलक्षकः " सर्वंहरतिनिःशेषं तूलाचलमिवानलः ब्रह्महत्यासहस्राणि ज्ञानाज्ञानकृतानि च स्वर्णस्तेयसुरापनगुरुतल्पायुतानि च कोटिकोटिसहस्राणिह्युपपातकजान्यपि सर्वाण्यपि प्रणश्यंतिराममंत्रानुकीर्त्तनादिति " अनेनकृतनिर्वेशोजन्मकोट्यंहसामपि यद्व्याजहारविवशोनामस्वस्त्ययनंहरेरि " त्यादीनिशतशोवाक्यानिसंतिएतदर्थपराणितथापिविस्तरभयान्नलिख्यंते ननुतथाप्यवशिष्टपुण्यनिचयं मुक्तिंबाधते इतिचेन्न नाश्यकोटिगतपापस्य मुक्तिबाधकपुण्योपलक्षकत्वात् अविमुक्तमृतजीवमोक्षान्यथा नुपपत्तिप्रमाणबलादप्य व गम्यतेतारकंब्रह्मस्वोपदेश समकालेमोक्षबाधकपुण्यस्यापिनाशकंभवति नचात्रशंकावकाशः यतोदेशांतरेपिस्थितानां देहान्तकालेअन्यकृततारकोपदेशः स्वकृतंतदुच्चारणं वातत्त्राणात् अशेषपुण्यपाप निचयंसमूलंदग्ध्वा भगवत्पदंददाति कथमन्यथा " प्राणप्रयानसमयेयस्तुनामसकृत्स्मरेत् सभित्वामंडलंभानोः परंपदमवाप्नुयात । तथा " ब्राह्मणश्वपचांभुजन् विशेषेण रजस्वलां यदश्ननसुरयापक्कंमरणेहरिमुच्चरेत् अगम्याभक्ष्ययोर्जातंविहायत्वघसंचयं विष्णोः सायुज्यमाप्नोतिविमुक्तोभववंधनादि त्येवमादीनिसद्वाक्यानिसार्थकानिभवेयुः नन्वेवंचेत्तर्हिकाशीमृतानां देशांतरमृतानांतुस्वकृतमंत्रोच्चारणान्वव्य-

तिरेकाभ्यांमुक्तिश्चेति पूर्वमेवसूचितमेतत् ननु " वाराणस्यां कृतंपापंवज्रलेपोभविष्यति" तथात्रपुण्यंकृतं तथात्रपापमित्यादिवाक्यनिरोधान्नोषरत्वंतस्येतिचेन्न तादृशवाक्यानां काशीकृतपापाना मन्यत्रप्राप्तमरणपरत्वात् अतएव अत्रमरणावश्यकत्वविधानेनान्यत्रगमनंनिषिध्यते " असिनाचरणौहत्वातत्रैवनिधनंव्रजेदित्यादिना ननुसामान्यतः तत्रकृतपापान्सर्वानपिजीवानिदंवाक्यं विषयी करोति अस्तिवाकश्चिद्विशेषइतिचेत् उच्यते भगवन्नामैकावलंबिनः परहृत्यपाप्यंतरपरमिदंवाक्यंतेषां यत्रातत्राजातपापानांयत्रकुत्रास्थितानामपितावन्मात्रेणैव सर्वपापनिर्मुक्ति पूर्वकंसर्वोत्तमगतेः श्रवणात् तथाचश्रीवाराहवचनं ममनामानिलोकेस्मिन् श्रद्धयायस्तुकीर्त्तयेत् तस्यापराधकोटींस्तुक्षमाम्येवनसंशयः नतादृशंमहाभागपापं लोकेषुविश्रुतं यादृसंधरणीनाथममनाम्नानदह्यते इति शमायालंजलंवह्नेः तमसोभास्करोदयः शांतिंकलाबघौघस्यनामसंकीर्त्तनंहरे इति नाम्नोस्ययावतीशक्तिः पापनिर्दहनेहरेः तावत्कर्तुंनशक्नोतिपातकंपातकीजनः इति नतावत्पापमस्तीहयावन्नाम्नानशयति अतिरकेभयादाहुः प्रायश्चित्तान्तरंबुधाः इति विष्णुधर्म्मोत्तरेपिअनन्यगतयोमर्त्या भोगिनोपिपरंतप ज्ञानवैराग्यरहिताब्रह्मचर्य्यादिवर्ज्जिताः सर्वधर्मोज्झिताविष्णोर्नाममात्रैकजल्पकाः सुखेनयांगतिंयांतिनतां सर्वेपिधार्मिका इतिउत्तरत्रश्रूयतेचयएततारकं ब्राह्मणोनित्यमधीते सपाप्मानंतरतीत्या-

रभ्यसोमृतत्वंचगच्छतीत्यंतं दुखबोधंहीदंनाम महत्वज्ञानंशि-
वादिव्यतिरिक्तानां तत्कृपादृष्टिविहीनानांच उक्तंचपंचरात्रे
महिमामंत्रराजस्यसाक्षाद्धि गिरजापतिः जानातिभगवान्शंभु-
र्ज्वलनपावकलोचन इतिश्रीभागवतेपि स्वयंभूनारदः शंभुः
कुमारःकपिलोमनुःप्रह्लादोज्जनकोभीष्यो वलिर्वैयासकिर्वयम्
द्वादशैतेविजानीयोधर्म्मंभागवतंभटा इतिद्वादशव्यति-
रिक्तानां तन्महत्वज्ञानराहित्यमुक्तं ननुअविमु स्योक्तपरत्वा-
त्भगन्नाम्नोऽशेषाघ दाहकत्वादुभयोरन्यतरावलंविनांय-
थेष्टाचरणप्रसंगः स्यादितिचेन्न अग्निहोत्रादिविधि-
वत् ब्राह्मणहननादिं विधेरश्रवणात् प्रत्युत " अशनंवशनं
वित्तंयेषांकाश्याममागर्त्तः कीकटेनसमाकाशी सत्यंसत्यंखगा-
धिप "इत्यादिवाक्यैर्नाम्नोवलाघस्यहिपापबुद्धिनविद्यतेतस्य-
यमैर्हिशुद्धिरिति " तथात्यक्त्वाकामं च क्रोधचलोभमात्सर्य्य-
मेवच इत्थंनामजपेन्नित्यं रामरूपोभवेन्नरः " इत्येवमादिवा-
क्यैश्चयथेष्टाचरणप्रतिषेधात् तस्याविधेयत्वेपि कामक्रोधादि-
परवशतयाविरुद्धाचारोऽकृतप्रायश्चित्तश्चे त्तदादंडधरेणभैर-
वेनत्रिंशत्सहस्र संख्याकंकालंनानायोन्यग्नौपच्यते तर्हिशरीरि-
णांनस्तिपुनः शरीरमि त्यादिसापुज्यवचननिचयव्याकोपइति
चेन्नप्राणोत्क्रमणक्षणेनभोग्यत्वात् यथास्वप्नमनोरथादौदेशांत
रेणरूपांतरे च संवत्सरशतानुभवः यथाचमार्कंडेयस्यसप्तकल्प
नुभवः नारदस्यस्त्रीत्वाद्यवाप्तिः लवणस्यवामातंगस्यस्त्रीपुत्रा-

ग्निपतनं तद्वदिहापिबोध्यं एवंयस्मात्तस्मादस्मिन्नेवशरीरे प्राणोत्क्रमणकालेयथेष्ठा चरणफलानुभवइति तारकब्रह्मोपदेशान्मुक्तिरेकेन जन्मनेत्युक्तत्वात् ॥

इति प्रथमकण्डिका ।

प्रथमकंडिकानिर्दिष्टस्यतारकब्रह्मणः स्वरूपकथनार्थं द्वितीया कंडिकारभ्यते ॥ अथेत्यादिनाः—

**अथहैनंभरद्वाजः प्रपच्छयाज्ञवल्क्यंकिंतारकंकिंतरतीति ॥ १ ॥**

अथप्रश्नानंतरहेत्तिगौरवार्थः एनंयाज्ञवल्क्यंपूर्वंतारकं ब्रह्मव्याचष्टेइत्येवोक्तंतत्स्वरूपंपृच्छति किंतारकमितिकिंतरतीतितरण विषयप्रश्नः इतिशब्दः प्रश्नद्वयपरिसमाप्तौनहिसाधनफलपरिज्ञानेनान्यत् ज्ञेयमवशिष्यतइतिभावः ।

**सहोवाचयाज्ञवल्क्यस्तारकंदीर्घानलंविंदुपूर्वकंदीर्घानलं पुनर्मायनमश्चन्द्रायनमोभद्रायनमः**

प्रथमतः सर्वश्रेष्ठेनरुद्रेणोपदिष्टत्वात् तत्कथनमात्रेण सर्वजंतुमोक्षप्रदत्वाच्च तारकब्रह्मणः सर्वेभ्योमंत्रभ्यः प्रकाशितोत्कृष्टत्वस्य सामान्यतउक्तस्यविशेषतः परिज्ञानायाज्ञवल्क्यंप्रतिभरद्वाजप्रश्नः किंतारकमिति सकलजंतुमोक्षप्रदरु-

द्रोपदिष्टंतारकंकिंस्वरूपमित्यर्थः तद्विजिज्ञापयिषयासयाज्ञव-ल्क्यउवाच " तारकमितिपूर्वोक्तमनूद्यकथयातिके चित्तुतार-मितिपाठे ॐकार पूर्वकत्वमुक्तंभवतीति वदंतितन्नसंगच्छते सप्ताक्षरस्यसततरतस्यतारकनामकत्वानुपपत्तेः " षडक्षरोवन्हि-पूर्वस्तारकस्त्वभिधीयते सर्वेषांराममंत्राणां मंत्रराजोषडक्षर " इत्येवमादिनाषडक्षरस्यैवतारकत्वोक्तेः किंचोंकारपूर्वकत्व-वादिभिरपि मंत्रत्रयमपितारकब्रह्मविद्यास्यादित्याशंक्यानस्यात् षडक्षरमंत्रराजस्यैव सर्वात्मकत्वप्रदर्शनादित्यारभ्य सर्वमंत्रलो-कार्थवाचकत्वेन सर्वात्मकत्वात् षडक्षररामंत्र एवानेकप्रका-शकांशुमालीवतारकब्रह्मस्वरूपोनान्यादि त्यंतेनतद्व्यतिरिक्त-स्यतारकत्वप्रतिषेधात् षडक्षरकार्य्यस्यप्रणवस्यषडक्षरार्थाधि-कार्थावाचकत्वेन प्रयोजनाभावतयातदादौतत्पाठायोग्यत्वाच्च दीर्घानलमिति दीर्घाकारयुक्तमनलं अग्निवीजं तदेवं सर्वज्ञस्य याज्ञवल्क्यस्योत्तर वचनादवगम्यते षडक्षरस्य तारकमित्यनादि संज्ञेति यदि तु षडक्षरव्यतिरि-क्तस्य तारकमितिसंज्ञा स्वाभाविकी स्यात तदा सर्वजन्तु तारकत्वेन तमेव रुद्रउपदिशेत याज्ञवल्क्योपिभरद्वाजप्रश्नो-त्तरत्वेन तत्स्वरूपमेवब्रूयात् तत्तारकमेतदाकारकमिति यदि तु कश्चिद्ब्रूयात् नात्रसामान्यविशेषरीत्या प्रश्नोत्तरप्रवृत्तिःकिंतु रुद्रोपदिष्ट तारकब्रह्मणः स्वरूपप्रश्ने सति तदुपदिष्टस्य तारक ब्रह्मणः षडक्षरस्य स्वरूपमुक्तवान् याज्ञवल्क्यः तारकंदीर्घा-

नलमिति तदापिग्रनालोचिततत्तद्विशेषाशेष काशिवासिप्रा-
णिविमोक्षस्यातिकरुणयाप्रवृत्तस्य सर्वज्ञस्य भगवतोरुद्रस्योप-
देश एवात्रास्य मन्त्रस्य मन्त्रान्तरेभ्य उत्कृष्टत्वे हेतुरपकृष्टत्वे
च मन्त्रान्तराणां यदि तु कश्चिदन्योमन्त्र इतोधिक एतत्समो
वास्यात्तदैनं विहायतमेवोपदिशेत पर्यायेणवोपदिशेत सर्वज्ञः
कारुणिकोभगवान् रुद्रः तदैषामेनयोर्मंत्रयोर्वाक उत्कृष्टः
प्रतिशंकापूर्वकं तच्छ्रेष्ठत्व हेतुविचारे परिश्रमोपि स्यात् न
चात्र कथंचिदादृशहेतुविचारावकाशः "रुद्रस्तारकं ब्रह्म व्या-
चष्टे येनासावमृतीभूत्वामोक्षीभवति तारकंदीर्घानलमि" त्या
भ्यां श्रुतिभ्यांकंठतः षडक्षरस्यानालोचिविशेषाशेष प्राणिमोक्ष
प्रदत्वेन सर्वोत्कृष्टत्वप्रतिपादनात् अनन्तरतनाभिरुक्तश्रुति
भिरपि सर्ववेदादिभूतप्रणव कारणत्वनिर्देशपूर्वकमस्यैव सर्वो-
पास्यत्वज्ञेयत्व विधानाच्च ननु नषडक्षरोत्कृष्टत्वप्रेरितस्य
रुद्रस्य तदुपदेशेग्राग्रहः किंतु श्रीरामदत्तवरप्रेरितस्येतिचेन्न
वरप्रदानस्यापि तत्र श्रीरामप्रसन्नतापूर्वकत्वश्रवणात् "श्री-
रामस्यमनुंकाश्यां जजापवृषभध्वजः मन्वंतरसहस्रैस्तु जपहो-
मार्च्चा नादिभिः ततः प्रसन्नो भगवाञ्छ्रीरामः प्राहशंकरं
वृणीष्वयदभीष्टंतद्दास्यामिपरमेश्वरेति" किंच "मुमुर्षोर्द-
क्षिणेकर्णे यस्य कस्यापिवास्वयं उपदेक्ष्यसि मन्मंत्रंसमुक्तो-
भविताशिवेति" स्वमंत्रस्याविचारित विशेषसकलजीवमोक्ष-
प्रदत्वसूचकं श्रीरामवचनमपितस्यसर्वोत्कृष्टत्वंद्योतयति ननु-

सर्वेषां भगवन्मंत्राणां सर्वजीवमोक्षप्रदत्वा विशेषेपितज्जापे रुद्रस्याग्रह विशेषं दृष्ट्वातदुपदेशमाज्ञापितवान् श्रीरामचन्द्रो-भगवानतोनात्र कश्चित्तदुत्कृष्टहेतुरुपलभ्यते इतिचेन्न स्वक्षेत्र-गतसर्वजीवाशुविमुक्तये भगवत्प्रसादाकांक्षिणः सर्वज्ञत्वेन सकलमंत्रतात्पर्य्यविदोपिभगवतो रुद्रस्य भगवन्मंत्रान्तर सत्वेपिषडक्षर जपादावा ग्रहविशेषः तथैव सर्वज्ञस्य सर्वश-क्तिमतः सर्व्वांतर्य्यामिणो विश्वशब्दवाच्यस्य श्रीरामस्यमंत्रां तरसत्वेपितदुपदेश एवाज्ञाविशेषश्चेतितदुत्कृष्टत्वे हेतुद्वयस्य-सद्भावात् यदि त्वयंमंत्रोमंत्रांतरेभ्य उत्कृष्टतमोनस्यात् तदो-त्कृष्टतममंत्रांतरं विहाय तज्जापे सर्वज्ञस्य रुद्रस्यात्याग्रहो नस्यात् नचातिदयालुत्वेन शिवाभीष्टवरदातुः श्रीरामस्याशे-षजंतुविमुक्तये षडक्षरोपदेशे अज्ञाविशेषोपि श्रुतिरपि "वासु-देवमनुंकाश्यांजजायवृषभध्वजः" श्रीकृष्णस्य मनुंवानारा-यणस्यमनुं " वेदादिप्रणवं काश्यांजजापवृषभध्वजः " इत्येवंस्यात्तथा " त्वत्तोवा ब्रह्मणोवापि येलभंतेहितं मनु-मित्येवं " तथा उपदेक्ष्यसिमन्मंत्रंमिति " मैवंब्रूयात्तदातदुप-बृंहणभूतानिपुराणादि वाक्यान्यपि " सहस्र नामतातुल्यमों कारोहिवरानने तथाजपतः सर्ववेदाश्च सर्वमंत्राश्च पार्वति तस्मात्कोटिगुणंपुण्य मोंकारेणैवलभ्यते " नाम्नाह्येतेनल-भ्यते " नारायणेन लभ्यते " विष्णुनाम्नापि लभ्यते " इत्येवंवैपरीत्येनपठ्येरन् लोकेमृतदाहाय तन्नेतॄणां श्रीरामनाम

सत्यमस्तीत्येवंविधशब्दोमाभू त्किंत्वोंकारः सत्यमस्तीत्येवं विधएव नचैवंश्रूयते ऽतोवेदपुराणेतिहासस्मृतिलोकाचारप्रमाणवतां षडक्षरस्यसर्वोत्कृष्टत्वमंगीकरणीयं ननुमंत्रांन्तरेभ्यः स्यात्तादुत्कृष्टत्वं नतुवहूपनिषत्सूत्कृष्टात्प्रणवात् काशीमृतप्राणिनः प्रतितदनुपदेशे तु नतदपकृष्टत्वंहेतुः किंतुवर्णत्रय व्यतिरिक्तानांतत्रा न धिकारइतिचेन्न यत्रयत्रप्रणवमहत्वं श्रूयते तत्रसर्वत्र " जीवत्वेनेदमोंयस्य " इत्योमितित्यस्य चोपसंहारेण वन्हिवीजस्य प्रणवकारणत्व निष्यत्यातस्मात्तादाधिक्योपपत्तेः प्रणवोत्कृष्टत्वस्यपापयोनिमोक्षा नधिकारिशूद्रादिप्राणिनः अकिंचित्करत्वेन वैयर्थ्यात् सर्वपरस्यरामनाम्न स्तुशूद्रादीनामपि सौलभ्येन मुक्तिदातृतयासर्वोपकारित्वात् परत्वसौलभ्यो भयगुणवत्वेन गुणतोपिप्रणवाधिक्योपपत्ते रिति पूर्वमेवोक्तं इममेवास्फुटयंति " ब्रह्मादीनांवाचकोय मितिसर्वे वाच्यस्यवाचकः " रुद्रस्तारकंब्रह्मव्याचष्टे तारकंदीर्घानलं इत्योम्एतदेवोपास्यंज्ञेयं चेत्याद्याश्रुतयः तद्रुपवृंहणाभूतानिजपतः सर्ववेदांश्चसर्वमंत्राश्चपार्वति तस्मात्कोटिगुणंपुण्यंरामनाम्नैवलभ्यते सर्वेषुमंत्रवर्गेषुश्रेष्ठंवैष्णवमुच्यते गाणपत्येषुशैवेषुशाक्तसौरेष्वभीष्टदं वैष्णवेष्वपिमंत्रेषुराम मंत्राः फलाधिकाः गाणपत्यादिमंत्रेषु कोटिकोटिगुणाधिकाः मंत्रस्तेष्वप्यनायासफलदोयंषडक्षरः इत्यादीनिवाक्यानि ननुग्रंथाधिष्ठातृत्वेनश्रीरामतन्मंत्रस्यो

स्त्कृष्टत्वदर्शयंत्यः प्रदर्शितश्रुतयस्तत्प्राशस्त्यं बोधयंत्यतोन-
तत्सर्वाधिक्येतासांतात्पर्य्यं तदुपबृंहणभूतान्यपितदुक्तार्थमेवा
स्फुटयंतीतिचेन्न स्वार्थेस्वतः प्रमाणभूतानांप्रदर्शितिश्रुतीनां
वस्तुयाथात्मस्वरूपप्रकाशनपराणां निर्गताज्ञानजनितवैषम्या-
नां स्वकीयपरकीयत्वाभिमानाभावतया कुत्रचिदर्थेमिथ्या-
गृहस्यवक्तुमशक्यत्वात् विधिनिषेधान्यतरशेषत्वाभावेन त-
त्रार्थवादोक्तेरसंभवतया प्राशस्त्यलक्षणायाश्चयोग्यत्वाच्च तदु-
क्तार्थस्यकेनचित्कथंचिदप्यन्यथाकर्त्तुमशक्यतया प्रदर्शित-
श्रुतिप्रतिपाद्येतत्सर्वोत्कृष्टत्वे छिद्रावलोकनानवकाशात् वस्तु-
तस्तु रुद्रस्तारकंब्रह्मव्याचष्टे इतिवचनमेवमंत्रांतराणांतारक-
ब्रह्मनामत्वंनिषेधति यदितुमंत्रांतरस्यापितारकब्रह्मेतिसंज्ञास्या-
त्तदाश्रुतिरस्तारकंब्रह्मेति साधारणत्वेन संदेहकरंवचनंनब्रूया-
त्किंतुरुद्रः षडक्षरंराममंत्रंवातारकं ब्रह्मव्याचष्टेइत्येवंब्रूयात्
पुनः किंतारकंदीर्घानलमित्युभयत्र किंतत्तारकं दीर्घानलमित्ये
वंपूर्वोर्थपरामर्शकस्यतच्छब्दस्योपादानं स्यात्तेनतारकांतरेभ्यो-
स्यविवेकोपिभवेत् यतश्चनतथोक्तमतोनतदन्यस्यतारकना-
मत्वमित्यवधेयं विंदुपूर्वकमितिविंदुः पूर्वोजन्मभूर्य्यस्यविंदोः
सकाशात् पूर्वंजन्मयस्येतिविंदुपूर्वकं स्वार्थेकः सृष्ट्यादौ-
शब्दार्थसृष्ट्यर्थं परमेश्वरेक्षणेन क्षुभितगुणावंश शकलकर-
णवत्कृततयाऽविद्याकलाऽव्यक्तंचोच्यते तच्छब्दार्थगर्भवत्य-
विद्याविंदुर्महत्तत्वंचेत्यभिधीयते महतोहंकारस्ततः पंचतन्मा-

त्राणिताभ्यो भूतानि तेभ्योऽखिलं जगदित्यर्थसृष्टिक्रमः विंदोर्नादः स च परापश्यन्ति मध्यमावैखर्य्याख्यामवस्थामनु भूय स्वर वर्णपदवाक्यात्मकोभवतीति शब्दसृष्टिक्रमः अतः शब्दसृष्टेर्विंदुपूर्वकत्वाद्दृटकर्णिकानि दर्शनेन विन्दुशिरस्कं तारकाख्यं बीजमुद्धरेत् " स्वभूर्ज्योतिर्मयोऽनन्तरूपीस्वेनैव भासते " इति श्रुतेः ज्योतिर्म्मयत्वेन स्वप्रकाशचिदात्मको रकारः आनन्दात्मकामृतरूपश्चन्द्रः चदि आह्लादने इति धातोर्निष्पन्नत्वेन अह्लादरूपस्तदानंदात्मकस्तदाकारवान् विंदु स्तद्योजनया प्रकाशानंदचिदात्मकं बीजमुद्धृतं भवतीत्यभिप्रायः " मः शिवः श्चन्द्रमावेधेति " कोशकारो यतश्च " स्व भूर्ज्योतिर्मयोऽनन्तरूपीस्वेनैव भासते स्व प्रकाशः परंज्योतिः स्वानुभूत्यैकचिन्मयः तदेवरामचन्द्रस्य मनोरामद्याक्षरं स्मृत मि " त्येवमाद्याः श्रुनयोवह्निबीजाक्षराणां चित्प्रकाशानन्दात्मकत्वं वदन्त्यतोनिष्पद्यते बीजस्य प्रकाशचिदानन्दात्मकत्व कथनं तत्र श्रुतौ प्रकाशचिन्मयपदे स्फुटतरे आनन्दस्तु स्वानु भूतिपदेन लभ्यते स्वानुभूतेरानन्दरूपत्वोपपत्तेः विंदुपूर्वकमिति विंदुग्रहणं कलानादयोर्द्वयोरुपलक्षणं ततश्च बीजात्मकेविन्दु नादकलाप्रदर्शिता अतोर्थसृष्टिर्वाच्याशब्दस्सृष्टि स्तुवाचिका तदेव तारकस्थस्य विन्दोरर्थसृष्टिशब्द सृष्टिकारणत्वं दर्शितं भवति अर्थसृष्टिकारणस्य महत्तत्वस्य विंदोश्चैकरूपत्वादर्थ सृष्टेरपि विन्दुकार्यत्वमुपपद्यते दीर्घानलं

पुनः अनुक्तत्वात विंदुरहितं तदेव पुनरुद्धरेत् मायनमइति योजनायां षडक्षरं तारकं स्वरूपमित्युक्तं भवति सबीजेन राम पदेन चन्द्रायनम इति योजनीयं तथा भद्रायनमइति योजनीयमित्येवं मंत्रत्रयं भवति ननु सबीजेन रामपदेन चन्द्रभद्र योजनयाष्टाक्षरमंत्रद्वयमुक्तं तयोश्चषडक्षर सहपठितत्वात् मंत्रत्रयमपि तारकब्रह्म विद्यास्यात नस्यात्" ब्रह्मादीनांवाचकोयं मंत्रोन्वर्थादि संज्ञकः रेफारूढामूर्तयः स्युः शक्तयस्तिस्र एव च तथैव रामबीजस्थं जगदेतच्चराचरं ब्रह्मात्मकासच्चिदानन्दाख्या इत्युपासितव्यं इत्योमितिचसर्ववाच्यस्य वाचक इत्येमादिश्रुतिभि स्सर्वेषांराममंत्राणांमंत्रराजःषडक्षरःइत्यगस्त्य संहितायां च षडक्षरंदाशरथेस्तारकंब्रह्मगद्यते तथा षडक्षरोवन्हिपूर्वस्तारकस्त्वभिधीयते इत्यादिस्मृतिभिश्च षडक्षरमंत्रराजस्यैव सर्वात्मकत्वावगमात अतः सर्वेषांरामैकाक्षरादीनां रामानुष्टुप्मध्यानां रामसहस्राक्षरांतानांश्रीराममंत्राणां सर्वेषांगाणपत्यशैवशाक्तसौराणांमंत्राणांसकलवेदानांकल्याणानांलोकानां चार्थवाचकत्वेनसर्वात्मकत्वात् षडक्षररामंत्रएवानेकप्रकाशकांशुमालीवतारकब्रह्मरूपं नान्यदित्यवगम्यते ननुतर्हितेनसहपाठोमंत्रद्वयस्यकिमर्थइतिचेत तयोस्तदुपलक्षित राममंत्रांतराणां च भगवन्मंत्रान्तरेभ्यउत्कृष्टत्वप्रदर्शनार्थ इति तदुपबृंहणवचनेभ्योऽवगम्यते वैष्णवेष्वपिमंत्रेषु राममंत्राः फलाधिकाः मंत्रस्तेष्वप्यनायास फलदोयंषडक्षरः

इति "लौकिकावैदिकाशब्दा येकेचित्संतिपार्वतिनामानिरामचन्द्रस्य सहस्रं तेपुचाधिकं । तादृङ्नामसहस्रैस्तु रामनामसमं मतं" तथा एकैकं रामचन्द्रस्य नामसर्वाधिकंमतं सहस्रनाम फलदं सर्वाभीष्टप्रदायकमि "त्येवमादिभ्यइतिब्रूमः नकेवलं सर्वचराचरकारणत्वेन तादात्मकमेव तारकं किन्तुसकलकारणस्योंकारस्यापि कारणत्वेन तदात्मकमित्याह" इत्योमिति

## इत्योमिति ब्रह्मात्मकाः सच्चिदानन्दाख्या इत्युपासितव्यम् ॥ २ ॥

इत्युक्तप्रकारकं षडक्षरं तारकं ॐमिति ॐकारात्मकं भवति नत्वेतस्मादन्य ॐकार ॐकारादेतदन्यदित्यर्थः " जीवत्वेनेदमोंयस्येति " पूर्वतापिनीयश्रुतेः " रामनाम्नः समुत्पन्नः प्रणवोमोक्षदायक " इतिस्मरणाच्चतथा प्रणवं केचिदाहुर्वै बीजंश्रेष्ठं तथापरे तत्तुतेनामवर्णाभ्यां सिद्धिमाप्नोतिमेमतमि" त्यादि श्रीरामनाम्नोवर्णविश्लेषविपर्यादि क्रमेण तत्सिद्धेः तस्मात्प्रणवोत्पत्तिरुक्ताभवति न तु प्रणवः कथंचिदपि वह्नि बीजात्मकत्वमापद्यते तस्य वर्णविश्लेष विपर्य्ययादि करणेन मोमित्या कारकत्वापत्तेः नन्वेवं सति ॐ मित्येकाक्षरं सर्वमित्येवमादिश्रुतिसंदर्भस्य बाधापत्तिरितिचेन्न सामान्यवाक्यस्यविशेषवाक्येनसंकोचात विप्रतिषेधेच प्रबलतरवाक्यांतरमाश्रित्यतद्विरोधपरिहाराच्च तद्वास्तवार्थप्रतिपत्तेः त-

द्यथा"अग्निषोमीयंपशुमालभेतेति" नहिंस्यात्सर्वाभूतानीति" चानयोः द्वयोः परस्परंविरोधेसतिपश्वालंभन परेणविशेष्यवाक्येनसर्वहिंसा निषेधपरंसामान्यवाक्यंयागीयहिंसाव्यतिरिक्त-हिंसाप्रतिषेधेसंकोच्य अग्निषोमीयपश्वालंभनव्यतिरिक्तहिंसा-निषेधपरमिदंसामान्यवाक्यमितिनिर्णीयते नचान्यथामंतव्यं विशेषवाक्यस्यसर्वथावाधात् यथाच "नमं त्रोस्त्यष्टाक्षरात्पर" इत्यादीनां "प्रणवः सर्ववेदानां" मित्यादीनांचपरस्परंविरोधे अष्टाक्षरादौप्रणवदर्शनात्" अष्टाक्षरश्चप्रणवे" इत्यभियुक्त-वचनाच्च तस्यतत्कारणत्वंनिश्चित्य स्वकारणभूतप्रणवव्यति रिक्तमंत्रांतरपरत्वनिषेधपरमिदमष्टाक्षर प्रतिपादकंवाक्यमि-तिनिर्णीयते यथाच" ॐ मित्येतदक्षरंसर्वमि" त्यादीनां-श्रुतीनां "अकारोवैसर्वावाक्शैषास्पर्शोष्मादि रूपेणवहुरूपा-भवती" त्यादिश्रुतेश्चपरस्परंविरोधेसति प्रणवस्यादावकार-दर्शना "दकारेप्रणवस्थिति" रित्यभियुक्तवचनाच्च तत्कारण-त्वंतस्यनिश्चित्य अकारंविहायपदार्थांतरमोंकारप्रभवमित्यों कारपरश्रुतीनामर्थोनिश्चीयते तथाचाभियुक्तश्लोकः" सर्व-थावेदगर्भस्थावेदाश्चाष्टाक्षरेस्थिताः अष्टाक्षरश्चप्रणवेअका-प्रणवस्थितिरितितथा " यथैववटवीजस्थः प्राकृतश्चमहा-द्रुमः तथैवरामवीजस्थंजगदेतच्चराचर" मित्यादीनांचश्रुतीनां-परस्परं विरोधपरिहाराय" जीवत्वेनेदमोंयस्येतीमां इत्योमि-तीति" चेमांश्रुतिमाश्रित्यषडक्षरस्यप्रणवकारणत्वनिश्चयात्

षडक्षरतद्वाच्यव्यतिरिक्तनिखिलचराचरकारणत्व प्रतिपादन-
पराः प्रणवपरश्रुतयइतिनिर्णेतुंशक्यं अन्यथाद्वयोरादिकारणा-
त्वासंभवेनतद्बोधकश्रुतीनां परस्परविरोधेन मिथ्यालापत्वप्रस
क्तिर्दुर्वारा नचतयोरन्यतरः श्रुतिसंदर्भः कल्पित इतिवक्तुंश-
क्यं तद्दृष्टांतने वेदत्वाविशेषंहेतुंकृत्यवेदमात्रस्यकल्पितत्व-
प्रसंगात नन्वेवंसत्यपि षडक्षरोंकारयोरन्यतरस्य कार्य्यत्वा-
निर्णयेनैकस्यादिकारणत्वानिश्चयादुक्तदोषस्यतादवस्थ्यमि-
तिचेन्न "सुषुप्तस्थानः प्राज्ञोमकारस्तृतीयामात्रामितरेपीतेवा-
मिनोतिहवाइदं सर्वमपीतिश्चभवतिसयएवं वेदेत्यत्र" मां-
डुक्योपनिषदि प्रणवावयवयोरकारोकारयोस्तदवयवभूते
मकारेप्यप्ययश्रवणात् प्रणवकारणवन्हिवीजावयवे मकारे-
सुतरांतल्लयत्वोपपत्तेः श्रुतसर्ववागात्मकत्वस्याकारस्यापिषड-
क्षरकार्य्यत्वनिष्पत्तेः ननुप्रणवस्यासकृदुच्चारणोकृते मकारस्या
कारोकारलयोत्पत्यवधित्वदर्शनवत रामनाम्नोऽसकृदुच्चा-
रणेपि मकारस्यरकाराकारलयोत्पत्यवधित्वदर्शनात तुल्य-
युक्त्यातत्रापिमकारस्य रकाकाराकारणत्वोपपत्तेस्तद्वाच्यस्य
मूलकारणत्वंस्यादितिचेन्न प्रणवावयवमकारेकारणत्वोधक-
मांडुक्यवत् नामावयवमकारकारणत्वपरवाक्याश्रवणेन तर्क-
वलयुक्त्यातस्य तथात्वानिष्पत्तेः प्रणवसमानधर्मकत्वेनतस्य
तत्रापिताद्दृशवाक्यंकल्प्यत्तामितिचेन्न रेफारूढामूर्त्तयइति-
कृत्स्नश्रुतिविरोधने कल्पितस्याप्रामाण्यात् अथवा "क्षराणां-

मकारोस्मीत्यकारोवासुदेवः स्यादिति वासुदेववाचकत्वेनोक्त-
स्य सर्ववागात्मकत्वेनश्रुतस्यचाकारस्यमितेरपीतेर्वेत्तितल्लय-
स्थानत्वेनश्रुतस्य मकारस्यचेत्युभयोरकारमकारयोः प्रणवावय-
वयोः" अकारः प्रथमाक्षरोभवितउकारोद्वितीयाक्षरोभवितमका
रस्तृतीयाक्षरोभवती" त्यत्ररामममंत्रस्थाकारमकाराभेदेन श्रुतयोः
रेफारूढामूर्त्तयः स्युरित्यत्ररेफाश्रितत्वेन तदंगत्वेननिर्णयात्"
वैष्णवेष्वपिमंत्रेषुराममंत्राःफलाधिका"इति" जपतः सर्ववेदां-
श्चसर्वमंत्रांश्चपार्वेति तस्मात्कोटिगुणांपुण्यंरामनाम्नैवल-
भ्यते इतितद्वन्मंत्राश्चवेदाश्चरकारेषुव्यवस्थिता इत्यादिवत्
अकारस्योत्कृष्टमहत्वाश्रवणाच्च रकारस्यैवमूलकारणत्वनिष्पत्तेः
नमकारवाचस्यमूलकारणत्वमुपपद्यते तथाचक्वचित"अकारो-
वैसर्वावागि" त्यादौस्वावयवभूताकाररूपेणसर्वात्मकत्वंप्राप्त-
स्यषडक्षरस्यसर्वकारणत्वश्रुतिः क्वचित्तुस्वावयवभूताकारद्वारा-
प्रणवत्वंप्राप्तस्य सर्वात्मकत्वं क्वचित्तुसाक्षात्प्रणवरूपत्वंप्राप्त-
स्य तथाश्रुतिः क्वचित्स्वस्यैवसाक्षात्सर्वात्मकत्वश्रुति रित्य-
खिलचराचरस्य साक्षात्परंपरयावाषडक्षरकार्य्यत्वे पर्यवसाना-
त्तस्यादिकारणत्वं निर्बाधं तदेवमत्रयथाप्रथमं" जीवत्वेनदेमों-
यस्येति" इत्योमितीत्याभ्यांप्रणवस्यषडक्षरकार्यत्वं प्रदर्श्य-
पश्चात् ॐ मित्येतदक्षरंसर्वमि" त्याद्याभिः प्रणवस्य
सर्वात्मकत्वंप्रदर्शितं तथैवोपनिषदन्तरेष्वपिद्रष्टव्यंयत्रतुमां-
डुक्याद्यासु नतस्यषडक्षरकार्यत्वंप्रदर्शितं सर्वात्मकत्वंतुप्रति-

पादितं तत्रापिसर्वासामुपनिषदामेकवाक्यताउपपत्तये सर्व-
शाखाप्रत्ययन्यायेनात्रदृष्टस्य प्रणवनिष्टषडक्षरकार्यत्वबोध-
कस्य" जीवत्वेनेदमोंयस्ये" त्यस्यइत्योमित्यस्य" श्रुतिवाक्य-
स्यउपसंहारःकर्त्तव्य उभयत्रार्थाभेदात् यथाकाशपूर्वकसृष्टि-
वचनतेजः पूर्वकसृष्टिवचनयोः परस्परंविरोधपरिहाराय तत्र-
च्छान्दोग्ये तत्तेजोऽसृजदित्यत्र" तस्माद्वाएतस्मादात्मनः
आकाशः संभूतः अकाशद्वायुर्वायोरग्निरि" त्यादिस्तैऽतिरे-
कवाक्यस्योपसंहारेण छांदोग्येपितदाकाशंवायुंश्चसृष्टवातेजोऽ-
सृजदित्येवंआकाशपूर्विकासृष्टिः स्वीक्रियते तद्वत्तथाच-
पारमार्षसूत्रं" सर्ववेदांतप्रत्ययंचोदनाद्यविशेषादिति" अ-
स्यार्थःसर्ववेदांतप्रत्ययानिविज्ञानानितास्मिनतस्मिन्वेदांतेतानि-
तान्येवभवितुमर्हंति कुतश्चोदनाद्यविशेषात् आदिग्रहणे-
नशाखांतराधिकरणसिद्धांतसूत्रोदिता अभेदहेतवइहाक्षिप्य-
न्तेसंयोगरूपचोदनाख्याऽविशेषादित्यर्थः अन्यच्चतस्यैवसूत्रं
उपसंहारोऽर्थाभेदाद्विशेषवत्समानेचेति" इदंप्रयोजनसूत्रं
स्थितेचैवंसर्ववेदांतप्रत्ययत्वे विज्ञानानांअन्यत्रोदितानांवि-
ज्ञानगुणानां अन्यत्रापिसमानेविज्ञाने उपसंहारोभवति अर्था-
भेदात् यएवहितेषांगुणानामेकत्रार्थोविशिष्ठविज्ञानोपकारः
सः एवान्यत्रापियदिहिविज्ञानभेदोभवे त्ततोविज्ञानांतरनि-
बद्धत्वाद्गुणानांप्रकृतिविकृतिभावाभावाच्च नस्यादुपसंहारो
विज्ञानैकत्वेतुनैवमितिसूत्रार्थः" तदेवंतारकंदीर्घानलमि"

त्यादिनापडक्षरस्वरूप इत्योमित्यनया चतस्यसर्ववेदादिभूतप्र-
णवकारणत्वंचप्रदर्श्याथब्रह्माभेदत्वप्रदर्शनेन तस्यसर्वोपास्यत्वं
विधीयतेब्रह्मात्मेतिब्रह्मात्मक सच्चिदानंदाख्याइत्युपासितव्यंषड
पिमंत्रवर्णाः"तेजोरूपमयोरेफ" इतिमहारामायणोक्तप्रकारेण
श्रीरामाकारप्राप्तत्वात्ब्रह्मात्मकायद्वा श्रीरामवाचकत्वेनतत्तदा-
त्म्यगतत्वाद्ब्रह्मरूपाःसच्चिदानंदाख्यासच्चिदानंदरामबोधकत्वेन
तत्तादात्म्यप्राप्तत्वात् तदाख्याः अथवा"ब्रह्मादीनांवाचकोयमि"
त्युक्तरीत्याब्रह्माद्यशेषपदार्थ वाचत्वेनब्रह्मवत्सर्वत्रव्यापकतयात
द्धर्म्मत्वंप्राप्तत्वाद्ब्रह्मात्मका यद्वा " रमंतेयोगिऽनंते सत्यानंदे
चिदात्मनि इतिरामपदेनासौ परंब्रह्माभिधीयते " तथैवचिद्वा-
चकोरकारस्यात् सद्वाच्यकारउच्यते मकारानंदवाचीस्यात्
सच्चिवदानंदमव्ययमि " त्युक्तरीत्या विविक्त तया सच्चिदा-
नंदवस्तु वाचकत्वेन तत्तादात्म्यप्राप्तत्वात् सच्चिदानंदाख्याः
यद्वा " स्वप्रकाशः परंज्योतिः स्वानुभूत्यैक चिन्मयः
तदेवरामचन्द्रस्य मनोराद्यक्षरंस्मृतमिति " रामोपनिषच्छ्रुत्या"
स्वभूर्ज्योतिर्मयोनं तद्रूपीस्वेनैवभासते " इतिपूर्वतापनीयश्रु-
त्याचवन्हिवीजषडक्षरा क्षराणांचस्व प्रकाश ज्योतिर्मयस्वरूप-
त्वं यथा तथा परब्रह्मापिस्वप्रकाश ज्योतिर्मयस्वरूपं भवतीत्यु
भयत्रार्थाभेदादुपपद्यते षडक्षराक्षरांणां ब्रह्मात्मकत्व मित्यतः
कंठतोपिश्रुतिराह ब्रह्मात्मकाइति तदेवब्रह्मात्मकत्वंस्फुटयति
सच्चिदानंदाख्या इतिसच्चिदानंदा इति संज्ञायेषां ते सच्चि-

दानंदाख्याः यथा " सत्यंज्ञानमनंतंब्रह्मआनान्दोब्रह्म " प्रज्ञानंब्रह्मेत्ये " वमादिश्रुतिभिः सच्चिदानंदस्वरूत्वेन ब्रह्माख्यायते तथा सच्चिदानंदाख्या इति श्रुत्यासच्चिदानंदस्वरूपत्वे न षडक्षरवर्णा अप्याख्यायंते इत्युभयत्रार्था भेदादुपपद्यते षडक्षराक्षराणांब्रह्मात्मकत्वं ब्रह्मस्वरूप भूतत्वंचयद्वा-ब्रह्मणः सच्चिदानंदरूपत्वात् षडक्षराक्षराणांतुजडत्वान्नोपपद्यते ब्रह्मात्मकत्वंषडक्षराक्षराणामित्याशंकानिरासायाह " सच्चिदानंदाख्या ,, इतियतः सच्चिदानंदासंज्ञिकामंत्रवर्णापि अतो-ब्रह्मात्मकाइत्यर्थः " सत्यंज्ञानमनंतं ब्रह्म " आनंदोब्रह्मेत्याद्यासुब्रह्मणः सच्चिदानंदस्वरूपत्वश्रुतेः मंत्राक्षराणां च सच्चिदानंदाख्या इतिश्रुत्यैव सच्चिदानंदसंज्ञकत्वेन सच्चिदास्वरूपत्वोक्ते रुभयत्रार्थाभेदादुपपद्यते षडक्षराक्षराणां ब्रह्मात्मकत्वेन ब्रह्मस्रूपत्वमित्यर्थः इत्युपासितव्यमितिशब्दः हेतौइति अनालोचितविशेषाशेषजीवमोक्षप्रदत्वेन तारकत्वेन सर्ववेदादिभूतप्रणवकारणत्वेन च ब्रह्मात्मकत्वेन सच्चिदानंदाख्त्वेन चाशेषपदार्थमूलतया सर्वार्थमूलतया सर्वार्थगर्भत्वात् षडक्षरं तारकमेवोपासितव्यं अकारत्रयसंपन्नत्वेन कृताधिकारिभिर्मुमुक्षुभि रेतदर्थपुरः सरजपेनोपासितव्यमित्यर्थः तथैवस्मृतच " ब्रह्मणक्षत्रियावैश्या स्त्रियोशूद्रास्तथेतरे सर्वेप्यधिकारिणोस्य ह्यनन्यशरणायदीति " अत्रषडक्षरप्रकरणत्वात् तदेवोपास्यमितिचाग्रतनयाश्रुत्यास्फुटीकरणाच्च तस्यैवोपास्यत्वं-

विहितं नतुसन्निहितस्यप्रणवस्येतिविवेचनीयं ननु ॐ कारा कारपिपत्सोः षडक्षरस्यकिमाकरोभवतीत्याशँक्य तस्यतदानी तनं रूपंदर्शयति " अकारप्रथमाक्षरोभवती " त्यादिनाप्र- णवाकारपिपत्सोः षडक्षरस्य विश्लेष विपर्ययाद्यनंतरं प्रथमा क्षरंअकारोभवतिर्लिगविपर्यः छांदसः यद्वाननुषडक्षरस्यप्रण- वाकार प्राप्तिरुक्तासानसंगच्छते प्रणवस्यत्रिवर्णात्मकत्वेन तत्सामान्याभावात् तद्धर्मानासत्वाच्चेत्याशंक्यतस्यापिषडवर्णा त्मकत्वंदर्शयति अकारइत्यादिना"

**अकारःप्रथमाक्षरोभवतिउकारोद्वितीया- क्षरोभवतिमकारस्तृतीयाक्षरोभवति अर्द्धमा- त्रश्चतुर्थाक्षरोभवतिविन्दुःपंचमाक्षरोभवति- नादः षष्ठाक्षरोभवतितारकत्वात्तारकोभवति तदेवतारकंब्रह्मत्वंविद्धितदेवोपास्यमितिज्ञेयंग र्भजन्मजरामरणसंसारमहद्भयात्संतारयतीति तस्मादुच्येततारकमिति ॥३॥**

षडक्षरकार्यस्योंकारस्यप्रथमाक्षरंअकारोभवति एवमग्रे- पियोजनीयं तथाकारोद्वितीयाक्षरोभवति मकारस्तृतीयाक्षरोभ- वति . अर्द्धमात्रश्चतुर्थाक्षरोभवति अर्द्धमात्रइत्यवयवत्वेनपु-

लिंगत्वं विंदु:पंचमाक्षरोभवति नाद: षष्ठाक्षरोभवति सर्वार्थ वाचकत्वात्षराणांमपिप्रणववर्णानां षडक्षरावयवार्थवाचकत्वं एवंवर्णसंख्यया तत्रषडक्षरसमतांप्रदर्श्य ततोऽनन्तरंप्रणवस्य तद्धर्म्मप्राप्तिंदर्शयति " तारकत्वात्तारकोभवति" तारकंदीर्घा-नल मित्युक्तस्यतारकस्यवर्णांशः साम्येतद्वितीयाकारत्वात् प्रणवोपितारकोभवतीत्यर्थः ननुतारयतीतितारकस्तस्यभाव-स्तत्वं तस्मात्तारकत्वात तारात्मकत्वात् षडक्षरोपितारकोभव-तीतीत्थमिदंवाक्यं षडक्षर परंभावनीयमितिचेन्न " तारकंदी-र्घानलमि " त्यत्रनपुंसकलिंगत्वे नोक्तस्य तारकपदस्यात्रतार-कोभवतीति नपुंस्कत्वाऽनुक्तेः पुनः ॐ कारो गुणवीजंप्रणव-स्तारोवेदादिरग्रआदौ उमध्येमअन्तेअपरोनामास्यत्रिमात्रिकश्च तथेत्यत्रोंकारस्यतारनामत्व श्रवणेपि तारकनामत्वा श्रवणा-त्पुनः कस्मात्तारयतीत्यस्याकांक्षायाः गर्भजन्मजरामरण संसारमहद्भयादिति व्यवहितवाक्येनपूरणात् तयोरंतरालेश्रु-तस्य " तदेवतारकंब्रह्मत्वंविद्धी " त्यस्यतदेवोपास्यमित्यस्य च वाक्यस्य वैयर्थ्यापत्तेः परेणटीकाकारेण तारकत्वेनिमित्ती-कृतेतारकत्वात् भवसंसारभयतारणाद्वेतिहेतुद्वयेऽन्यस्तेतत्र प्रथमेहेतौ प्रमाणभावाच्चस्फुटीकरिष्याम्यग्रे ननु तत्किंतारकं यत्कार्य्यत्वेन प्रणवस्यापि तारकत्व मुक्तमित्यपेक्षायामाह " तदेव तारकंब्रह्मत्वं विद्धीति " रुद्रस्तारकंब्रह्मव्याचष्टे तथातारकंदीर्घानलमित्यादिनायस्यस्वरूपं प्रदर्शितं तदेवतार-

कंब्रह्मेतित्वंविद्धि जानीहि ननु " ब्रह्मात्मकाः सच्चिदानं दाख्याइत्युपासितव्यमि " त्यनयाश्रुत्याप्रकृतस्यषडक्षरसन्निहितप्रणवस्यै वोपास्यत्वमुक्तमितिचेत्तत्राह " तदेवोपास्य मिति " तत्प्रकृतं षडक्षरंइत्योमितीत्य नयातुप्रणवस्य षडक्षरकार्यत्वप्रदर्शनंकृतं तदुपासना दार्ढ्यार्थंनतुप्रणवोपासनाविधानार्थमित्यर्थः वेदतंत्रादौवहूनामंत्राणामुपासनोक्तातेषां किमेकंमुख्यत्वेनोपास्यमितीमांशंकांनिराकरोति स्वयमेवश्रुतिः तदेवोपास्यमितिज्ञेयमिति यद्यपिमंत्रांतराणामपि तत्रतत्रतथोपासनाविहिता तथापि काशीनिवासिसर्वजीवमुक्तयेरुद्रेणभगवतायदुपदिश्यते यस्य तु सर्ववेदादित्वेन सर्वोपास्यभूतस्य प्रणवस्यापिकारणत्वंनिर्दिष्टं मुमुक्षुभिस्तदेवोपास्यमित्यर्थः भवत्विदमुपास्यं ज्ञेयंतुकिमप्यन्यत्स्यादित्याशंक्यस्वयमेवनिराकरोति ज्ञेयमिति तदेवज्ञेयमुपास्यमितियोजना अन्यान्मंत्रवाक्य निचयविचारणां विहायतदेवतारकमेवज्ञेयमुपास्यंचेति शिष्यशिक्षार्थमवधारणंतत्रैवंसतिसच्चिदानंदात्मकब्रह्मवाचकत्वेन तत्तादात्म्येनोपासनीयं ब्रह्मात्मकासच्चिदानंदाख्याइत्युपासितव्य मित्यत्रतस्यब्रह्मात्मकत्वश्रवणात् मंत्रोज्ञेयस्तुजीवपरयोःशेषशेषीभावसंवंधःसतुरेफारूढामूर्त्यः स्युरित्यस्यव्याख्यानेस्फुटीकृतोभवतिअत्रमंत्रांतराणांगर्भजन्मादिभ्योतारकत्वेन तारकसंज्ञामप्राप्तत्वात्नतेगर्भादिभ्यस्सद्यस्तारयंत्यतउपास्यत्वज्ञेयत्वयोरस्मिन्तारकेपरिसमाप्तिःदर्शितातदेवतारकाख्यसर्वोपास्य

त्वंज्ञेयत्वंचविधायाथतारकपदनिर्वचनंकुर्वन्तदेवतारकत्वंस्फुटय
ति"गर्भजन्मजरामरणसंसारमहद्भयात्संतारयतीति यस्मादेवंत-
स्मादुच्यतेतारकमिति" अत्रतारकनिर्वचनपरश्रुत्याय: कश्चि-
न्मंत्रोगर्भजन्मादिभ्यस्तारयतितस्यैव तारकसंज्ञाभवतीत्यवग-
मात् वेदपुराणादौमंत्रांतरस्यतारकसंज्ञाऽश्रवणादतस्तस्य
षडक्षरस्यास्यामेवोपनिषदि" तारकंदीर्घानलमि" त्यादौता-
रकत्वश्रवणात्" षडक्षरोवन्हिपूर्वस्तारकस्त्वभिधीयते श्री-
रामेतिपरंजाप्यंतारकंब्रह्मसंज्ञक" मित्यादिबहुस्मृतिभिरुक्त-
त्वाच्चास्यैवोपास्यत्वं ज्ञेयत्वंचविधाय एवकारेणमंत्रांतराणां
तदुभयंवर्जितंयत्तादनया गर्भजन्मेतिश्रुत्यास्फुटीकृतंभवतीति
अत्रकेचित् इत्योमितीत्यस्यव्याख्यानेप्रणवस्यषडक्षरकार्यत्वं-
निर्दिश्य अकार: प्रथमाक्षरोभवतीत्यस्यव्याख्यानेअकार-
प्रणवावयव: प्रथमाक्षरोमंत्रस्यभवतीत्ये वमुक्त्वाप्रणवस्यषड-
क्षरकारणत्वंसूचितवंतस्तन्नसंगच्छते कार्य्यावयवस्यकारणा-
वयवत्वप्राप्त्ययोग्यत्वात्षडक्षरस्यादावकाराक्षरादर्शनाच्चअकारो
कारमकारेष्वन्यतरस्यापि रेफाकारप्राप्त्यनुपपत्तेश्च नचोभयो-
र्महत्वंतोवर्णतश्चसाम्येनाप्यैकत्वमुपपद्यते अकारस्यषडक्षर-
प्रथमाक्षरत्वादर्शनेनवर्णत: उभयो: साम्यानुपपत्ते: प्रणव-
स्यसर्वकारणत्वश्रवणेपि" जपत: सर्ववेदांश्चसर्वेमंत्रा" श्चे-
तीदृशमहत्वाश्रवणाच्च अत: परिशेषात्" अकार: प्रथमा-
क्षरोभवती" त्यादीनांप्रणवषडक्षरैक्यबोधकश्रुतिवाक्याना-

मन्यथानुपपद्यमानत्वात् इत्योमितीतिप्रणवनिष्ठषडक्षरकार्य्य-
त्वबोधकश्रुतिवलाच्च षडक्षरस्यैवप्रणवाकारप्राप्तिरुपपद्यते
रामशब्दस्यवर्णविश्लेषविपर्य्ययकरणानंतरं रेफस्योकाररूपतो
पपत्योभयोर्वर्णतः समन्वयनिष्पत्तेः तत्रतत्रश्रुतसर्वोत्कृष्टत्व-
महत्वयोरनुपपत्त्याकार्य्यकारणाभावेनैवोभयोरैक्योपपत्तेश्च" ।
जीवत्वेनेदमोंयस्येति" श्रुतेश्चषडक्षरस्यैवप्रणवकारणत्व-
निष्पत्तेः पुनश्चएवमुभयोरेकार्थवाचकत्वेनसंख्यासामान्ये च
तादात्म्यमनुभूय सर्वास्ववस्थास्वेतदेवोपासितव्यं यत्तुतारस्य-
सिद्धादिदोषानुक्तेः तत्रहेतुः तारावयवानांमंत्राक्षरैक्येनमंत्रा-
गतसिद्धादिदोषनिरासादित्युक्त्वाप्रणवतादात्म्यगतत्वं हेतुं-
कृत्यषडक्षरस्यसिद्धादिदोषराहित्यं बोधितवंतस्तेटीकाकाराः
तदपिनसंगच्छतेकार्य्यसं वधेनकारणेगुणाधिक्यप्राप्त्यनुपप-
त्तेः" अत्रहिजंतोः प्राणेषूत्क्रममाणेषुरुद्रस्तारकंब्रह्मव्याचष्टे"
इतिस्वयमेवश्रुत्याझटिति साक्षाफलाद्यर्थमधिकारितारतम्य
चिन्तानिरासेनषडक्षरगत सिद्धादिदोषराहित्यद्योतनाच्च
पुनश्चतारात्मकत्वात्सर्वसं सारभयतारणाद्वातारकमिति तारक
स्यद्विधानिर्वचनं प्रकल्प्य प्रथमनिर्वचनपरतारकत्वात्तारको-
भवतीतीदंवाक्यं" गर्भजन्मजरामरणसंसारमहद्भयात्संतार
तीति" वाक्यंतुद्वितीयनिर्वचनपरमिति सूचितवंतस्ते तद
प्यसंगतं जीवत्वेमोंयस्येतिइत्योमिति चेत्यत्रप्रणवकारणत्वेन
श्रुतस्यराममंत्रस्यतत्कार्यत्वेनतदात्मकत्वाऽनुपपत्तेः द्वितीय-

सःसंसारंतरतिसःसर्वंतरतिसोविमुक्ताश्रितोभ-
वति समहान्भवतिसोऽमृतत्वंचगच्छतीति
इतिद्वितीयाकंडिका

योब्राह्मणः तस्माद्ब्राह्मणः पांडित्यं निर्विद्यबाल्येन तिष्ठासेदि" त्यादि श्रुत्युक्तोब्राह्मणः ब्रह्मबुभुत्सुःयः कोपीति यावत् न चात्र ब्राह्मणशब्दो ब्राह्मणत्व जातिपरः" अत्र-हिजंतोः प्राणेषूत्क्रममाणेषुरुद्रस्तारकं ब्रह्मव्याचष्टे" इतिश्रुत्याजंतुमात्रस्यात्राधिकारत्वद्योतनात्" ब्राह्मणाः क्षत्रि-याः वैश्याःस्त्रियः शूद्रास्तथेतरे सर्वेप्यधिकारिणोस्यह्यनन्यश-रणायदीति" तथैवस्मरणाच्च" एतत्तारकंनित्यमधीते" अर्था-नुसंधानेनकेवलमपिवानित्यजपति सपाप्मानंतरित पाप्मनः एवसप्तविशेषणान्याह" समृत्युंतरतीत्यारभ्यससर्वंतरतीत्यं-तेन" भ्रूणोवेदपारगः ब्राह्मणः वीरोग्निः ज्येष्ठपुत्रोवासंसार-पदेनवाह्यविषयाउच्यंते सर्वपदेनत्वंतर्विषयाअथवासंसारपदेन विरजापर्य्यंतंसर्वपदेनविरजापरंपदयोरंतरालोदेशः तत्रहेतुः विमुक्तंप्रकृतिविमुक्तं आत्मस्वस्वरूपं आश्रितः प्राप्तोभवति अतएवमहान्पूज्योभवति अविमुक्तमाश्रितोभवतीतिपाठे ब-द्धत्वविमुक्तत्वरहितंपरमात्मानमाश्रितोभवति सोऽमृतत्वं च गच्छतीत्याभ्यांभगवत्प्राप्तिर्दर्शिताभवति" जीवन्तोमंत्रसिद्धाः स्यु रन्तेमांप्रप्तुवंतिते" इतिवक्ष्यमाणश्रुतेश्च इतिशब्दः प्रश्नद्वयस्योत्तरद्वयसमाप्तौ

॥ इतिद्वितीयाकंडिका ॥

॥ अथतृतीयाकंडिकारभ्यते ॥

अकाराक्षरेत्यादिनातदेवंपूर्वतनग्रन्थे नषडक्षरस्यश्रीरामशेषत्वकोटिप्रविष्टानांब्रह्मादीनां वाचकत्वेनसर्वार्थवाचकतयासर्वात्मकत्वं ब्रह्मादिशेषिभूतरामपरत्वं चोक्ततत उत्तर तनग्रंथेनतस्यैवतारकसंज्ञिकत्वं स्फुटयन्सर्ववेदादिभूतप्रणवकारणत्वनिर्देशपूर्वकसर्वोपास्यत्वमशेष पापतारकत्वंमोक्षप्रदत्वंचोक्ता थेदानींतस्यैवषडक्षरस्यकैमुत्यन्यायेनसर्वार्थवाचकतयासर्वात्मकत्वदर्शयितुं तत्कार्य्यभूतस्यप्रणवस्याथाकाराक्षर संभूतइत्यादिनाविश्वादिवाचकतया श्रीरामशेषकोटिप्रविष्टस्य समष्टेरर्थात्व्यष्टेश्चवाचकत्वं तच्छेषिणोरामस्यचवाचकत्वंप्रदर्श्य" ॐ मित्येतदक्षरंसर्वमि" त्यादिनासर्वात्मकत्वंदर्शयति अथेत्यादिना"

## अथैतेश्लोकाभवंति

अथतारकस्वरूपकथनानंतरं प्रणवाकारप्राप्तस्य तस्यतारकस्यार्थभूता एतेश्रुतिप्रसिद्धवाक्यप्रमाणाश्चत्वारश्लोकाभवंति"

**अकाराक्षरसंभूतः सौमित्रीर्विश्वभावनः ।**
**उकाराक्षरसंभूतःशत्रुघ्नस्तैजसात्मकः ॥१॥**
**प्रज्ञात्मकस्तुभरतोमकाराक्षरसंभवः ।**
**अर्द्धमात्रात्मकोरामोब्रह्मानंदैकविग्रहः॥२॥**

अकारश्च स एवाक्षरं च तस्मात्सम्भूतः सम्यज्ज्ञातस्ते

नावभासितः अकारार्थो अकारवाच्य इतियावत् सौमित्रिः सुमित्रासुतः विश्वभावनः जाग्रदवस्थायां विश्वं भावयति नियमयतीतितथा धातूनामनेकार्थत्वात् जाग्रदवस्थासाक्ष्यात्माविश्वइत्युच्यते तन्नियामक लक्ष्मणइत्यर्थः अत्रजाग्रदवस्था साक्ष्यात्मा विश्व एव सौमित्रिः स्वप्नावस्थासाक्ष्यात्मा तैजसः शत्रुघ्नः सुषुप्त्यवस्था साक्ष्यात्माप्राज्ञोभरतः इति यैर्व्याख्यातंते प्रष्टव्याः स्वशरीरमात्रनिष्ठ जाग्रदवस्था साक्ष्यात्माविश्वः सौमित्रिंरित्युच्यते विश्वशरीरनिष्ठ जाग्रदवस्था साक्ष्यात्मा विश्वशब्दवाच्य एव सौमित्रिरितिवानप्रथमः स्वशरीरनिष्ठ जाग्रतस्वप्नसुषुप्तिसंज्ञकावस्थात्रयं प्रत्येकस्यैव साक्षित्वोपपत्त्या केवलजाग्रदवस्थां प्रतिसौमित्रेः नथा स्वप्नावस्थांप्रतिशत्रुघ्नस्य तथासुषुप्तिं प्रतिभरतस्य साक्षित्वोक्तेरनुपपत्तेः द्वितीयः पक्षश्चेत्तदासौमित्रेः समष्ट्यभिमानित्वांगीकारस्यावश्यकत्वात्तस्य प्रतिशरीरं जाग्रदवस्था साक्ष्यात्मानं विश्वाख्यं प्रतिनियामकत्वमुपपन्नन्तरं एवं शत्रुघ्नभरतपक्षेपि योजनीयं तथोकारमकारार्थौ शत्रुघ्नभरतौ स्वप्नसुषुप्ति साक्षिभूततैजसप्राज्ञनियामकावित्यर्थः अत्रसौमित्र्यादीनां जाग्रदाद्यवस्थाभिमानि सर्वजीवनियामकत्वोपपत्यनुसारेण ब्रह्मानन्दैकविग्रहस्य श्रीरामस्य सर्वजीवतुरीयावस्थानियामकत्वमुपपद्यते तत्रब्रह्मानन्दैक विग्रहःब्रह्मचासावानन्दश्चब्रह्मानन्दः सचैकोविग्रहः शरीरं यस्य स तथा अत्र ब्रह्मानन्दाभ्यां तद्वि

ग्रहस्य प्राकृतत्वनिरासेनव्यापकत्वं सुखरूपत्वंचोक्तं आनं-
दोब्रह्मेत्युक्तं आनन्दरूपं ब्रह्मैवविग्रहो यस्य स तथोक्तः श्री
रामस्य ब्रह्मतत्वमय एव विग्रहोऽस्तीति कृत्वातत्र शरीरशरीरि
भेदो नास्तीति सूचितं भवति पूर्णानन्दैकविग्रहमित्युत्तरत्रा-
पिश्रुतेः परात्परतरं तत्वं सत्यानंदंचिदात्मकं सर्वाधिपत्यंसम-
गभीरं सत्यंचिदानंदमयस्वरूपमिति चतथा" श्रीशार्ङ्गधा-
रिणंरामं चिन्मयानंदविग्रहं विरराममहातेजाः सच्चिदानंद-
विग्रह" इति च श्रीरामस्यस्वरूपविग्रहयोरुभयोः सच्चिदानंद-
रूपत्वस्मरणाच्च ॥ २ ॥ अथश्रीरामालिङ्गितायाः सीतायाः
श्रीरामप्रतिपादकार्द्धमात्रसन्निहितविंदुप्रतिपाद्यत्वमाह श्री-
रामसानिध्यवशादिति

**श्रीरामसान्निध्यवशाज्जगदानन्ददायिनी ।**
**उत्पत्तिस्थितिसंहारकारिणीसर्वदेहिनाम्॥३॥**
**सासीताभगवतीज्ञेयामूलप्रकृतिसंज्ञिता ।**
**प्रणवत्वात्प्रकृतिरितिवदन्तिब्रह्मवादिनः ॥४॥**

रामपदस्यपूर्वकत्वंभक्त्यतिशयविधानार्थं तत्प्राप्तेरेव-
परमपुरुषार्थत्वात स्वभावतोजगदानंददायिनी तत्तत्कर्मानु-
सारेणातुसर्वदेहिनां विश्वाद्यवस्थावतां सौमित्र्यादिनियन्त्या-
नामुत्पत्तिस्थितिसंहारकारिणी यामूलप्रकृतिसंज्ञितासासीता
भगवतीज्ञानशक्त्यादिषड्गुणवतीज्ञेया अत्रमूलप्रकृतिशब्दोन-

जडप्रकृतिपरः" हेमामयाद्विभुजयासर्वालंकारयाचिता" इति पूर्वतापिनीयेतस्याश्चिद्रूपत्वश्रवणात, यस्याकदाक्षणोवैजाता-मूलप्रकृतिसंज्ञितेति" मूलप्रकृतिरविकृति" रित्युक्तायाः मूलप्रकृतेः सीताकटाक्षोद्भवत्वस्मरणाच्च प्रकृतिपदनिर्वचन-माह" प्रणवत्वात्प्रकृतिरिति" णुस्तुतावित्यस्यधातोः प्रणू-पतेप्रस्तूयतेस्वकटाक्षोद्भवायाः जड़प्रकृतेर्महदाद्या कारेणनि-र्माणेयासाप्रणवा तस्याभावस्तत्वंतस्मात्प्रणवत्वात प्रकर्षेण-क्रियतेऽनयेतिप्रकृतिः ब्रह्म प्रणवमूलवेदस्तद्वेदनशीलावेद-विचारपरा वदंतिकथयंति अत्रहिविश्वतैजसादिनियामकानां सौमित्र्यादीनां श्रीरामकैंकर्यपरत्वप्रसिद्ध्या भगवच्छेषत्व-सिद्धेः सुतरां तन्नियम्यानांविश्वतैजसादीनां जाग्रदाद्यवस्था-भिमानिनांतच्छेषत्वोपपत्तिः अपरंच" उत्पत्तिस्थितिसंहारका-रिणीसर्वदेहीना" मित्युक्तेः सर्वजगदुत्पादिकारिण्याजान-क्याः श्रीरामस्ययथाकश्चित्क्षेत्रिणिक्षेत्रेआवपतिसिंचतिकृं-ततीत्याद्युक्तयुक्त्या सर्वजगत्स्वामित्वसिद्धेः सर्वेषांदेहिनां श्रीरामस्य च शेषशेषीभावनिर्वृत्तेः सर्वंचराचरात्मकंजगत श्रीसीताविशिष्टस्यरामस्यैवशेषभूतं नस्वस्यान्यस्यवेतिकृत्वा-जीवानां जीवांतरनिष्ठस्वरक्षणोपायत्वप्राप्यत्वयोरनुपपत्तेः सर्वस्वामित्वंसीतारामनिष्ठमेव स्वरक्षणोपायत्वंचेति प्रणवार्थ-बोधकश्लोकानांफलितोर्थः तथाचषडक्षरतारकवत्तत्कार्य्य-भूतः प्रणवोपिसर्वजगतः श्रीरामशेषत्वंबोधयतीत्युभयोरेकार्थ

वाचकत्वेनैकवाक्यतोपपन्नतराएवमन्यत्रश्रुतस्यापिप्रणवस्योक्त युक्त्यायमेवतात्पर्य्यार्थोनिर्णेतव्यः कुतः तत्रतत्रग्रंथेप्रणवस्य-व्याख्याभेदसत्वेपि प्रणवंब्रह्मरूपंस्वीकृत्यतस्मात्कयापिरीत्या जगदुत्पत्यादिकमेववर्णयतीत्यत स्तत्रसर्वत्रापिद्वेत्रद्वेत्रीन्याये न जगदुत्पत्यादिकर्त्तुः परमात्मनः शेषित्वं उत्पत्यादिमतश्चजगतः शेषत्वमित्येवं तत्रसर्वत्रशेषशेषीभावरूपार्थस्य निष्पत्तेः "किंचअकारेणोच्यतेविष्णुः श्रीरुकारेणतूच्यतेमकारेणोच्यतेजीवः" इत्यादिवाक्यस्य "अकारात्नरसंभूतः इत्यादिवेदवाक्यस्यचकथमेकवाक्यतेतिप्रश्नस्य प्रदर्शितवाक्ययो रक्षरार्थभेदेजीवपरमात्मनोः शेषशेषीभावद्योतनरूपतात्पर्यार्थाभेदादुभयोर्नैक्यवाक्यताहानिरित्युत्तरं किंचात्रश्रीजानकीवाचकस्यानुक्तेःपि" श्रीरामसान्निध्यवसादिति" तत्सान्निध्यवचनमेवार्द्धमात्रसन्निहितस्यविंदोस्तद्वाचकत्वमुपपादयति श्रीरामजानक्योः सानिध्यवदर्द्धमात्राविंदोरपिसानिध्यदर्शनात विंदुजानक्योः प्रत्येकजगत्कारणत्वश्रवणाच्च तत्रप्रणवस्यजगत्कारणत्वनिष्पादनं जगदाकारपरिणताहंकाराद्युत्पादकमहतत्वपर्य्यायप्रणवोपरिस्थविंदुद्वारैवोपपद्यतेश्रीरामवाचकार्द्धमात्राद्वाराप्रणवस्यजगत्कारणत्वोपपत्तावपि श्रीरामसन्निहितायाजानक्याएवजगत्कारणत्वश्रवणेन श्रीरामवाचकार्द्धमात्रासन्निहितजानकीवाचकविंदुद्वारैवप्रणवस्यसुतरांजगत्कारणत्वोपपत्तेः उक्तंहिशास्त्रकारै र्महतत्वपर्य्यायस्यविंदोर्जगत्कार-

णत्वं जानक्यास्तुजगत्कारणत्व मन्त्रैवश्रूयते" उत्पत्तिस्थिति-संहारकारिणीति" तस्मादुभयोर्जगत्कारणत्वेनाभेदत्वोपपत्ते र्वाच्यवाचकयोस्तादात्मयसंबंधस्वीकाराच्च श्रीरामवाचकार्द्ध-मात्रा संश्लिष्टस्यबिंदोः श्रीरामसंश्लिष्टजानकीवाचकत्वमुपप न्नतरमितिकृत्वा" अर्द्धमात्रात्मकोराम" इत्यत्रार्द्धमात्रायाः श्रीरामरूपत्वश्रुतेः" तिलकंरामरूपेणविंदुरूपेणभूमिजांधृत्वा श्रीरामभक्तानामग्रगण्योगुणाग्रणीरित्यत्र अर्द्धमात्राकृतेति ल-कस्यश्रीरामरूपत्वस्मृतेः तिलकमध्यधृतस्यविंदोः श्रीजानकी-रूपत्वस्मृतेश्चोक्तयुक्त्यास्मृतेः श्रुतिमूलकत्वनिष्पत्तेश्चसविंदू-र्द्धपुंड्रधारिणोपि श्रीरामभक्ताग्रगण्यत्वमुप्युपपन्नतरं एवंप्रणव-भावार्थंप्रदर्शयाथ तस्यसर्ववाचकत्वंप्रकटयति" मित्येतद-क्षरंसर्वमित्यादिना यावत्कंडिकासमाप्तितःॐमित्येतदक्षर-मिति

**ॐमित्येतदक्षरंतस्योपव्याख्यानंभूतंभव्यं भविष्यदितिसर्वमोंकारएवयच्चान्यत्त्रिकाला तीतंतदप्योंकारएवसर्वंह्येतद्ब्रह्मअयमात्माब्रह्म**

सर्ववाच्यमर्थजातंतद्वाचकंच ॐ मित्येतदक्षरं ॐ काररूपमेवसर्ववागात्मके ॐकारेभावाभावात्मकसर्वार्थवा-चकत्वंनासमंजसमितिभावः" वाग्वा ॐ कारइतितद्यथा शंकुनासर्वाणिपर्णानिसंतृणानिएवमोंकारेणसर्वावाक्संतृणो-

तिच ॐकारोवैसर्वावागि त्यादिश्रुतिभिरोंकारस्यसर्ववागा-
त्मकत्वमभिधीयते ॐकारेणावभास्यमानत्वात् सर्वमोंकारमे-
वेत्यर्थः” तस्योपव्याख्यानमिति” तस्मादनंतरवाक्यस्थूलसर्व-
शब्दस्यसंपूर्णवाक्यस्यवा उपसमीपेव्याख्यानं विस्पष्टंप्रकट-
कथनंजानीयादितिशेषः कथमित्यतआह” भूतंभव्यंभविष्य-
दिति सर्वमोंकारएवेति कालत्रयपरिछिन्नसमष्टिव्यष्ठ्यात्मकं
सर्वमोंकारएवेति तर्हिकालत्रयातिक्रान्तस्योकारात्मकत्वंनस्या-
दित्याशंक्याह“ यच्चान्यत्त्रिकालातीतंतदप्योंकारएवेति”
यच्चान्यत्त्रिकालातीतंकार्य्यैकसमधिगम्यं कालत्रयाकलितम-
व्याकृतादि तदप्योंकारएवएवंकार्य्यकारणरूपस्यसर्वस्यजगतो-
वाच्यस्यवाचकत्वमोंकारेप्रदर्शितंतदेवंपूर्वतापिनीये यत्सर्ववा-
च्यस्यवाचकत्वमोंकारइत्यत्र विश्वरूपस्यतेरामविश्वेशब्दा-
हिवाचकाः तथापिरामनामेदंसर्वेषांवीजमव्ययमिति“ दुपवृं-
हणावाक्यानुरोधातलोकेमृतानं तच्छरीरवाचकनामोच्चारण-
पूर्वकंपिंडादिप्रदानेनकर्मकांडेपितथैवावगमाच्च यथाऽचिद्वा-
चकानांतच्छरीरिणिचितिपर्य्यवसानेन सर्वेषांशब्दानांचिद-
चिदविशिष्ठपरमात्मवाचकत्वसिद्धेः श्रीरामस्यसर्वशब्दवाच्य-
त्वमुक्तं“ सर्ववाच्यस्येति“ श्रुत्याविश्वरूपस्यतेरामसर्वेशब्दा-
हिवाचका” इतिस्मृतौनुतद्विश्वरूपत्वमवलंव्यसर्वेषांशब्दानां
वाचकत्वमुक्तंतत्रचतयोः श्रुतिमृत्योरकेत्रश्रुत” सर्ववाच्यस्य-
वाचक” इत्यत्रसर्वशब्दानांतद्वाचकत्वमन्यत्र” विश्वरूपस्य-

तेरामेत्यत्र" तस्यसर्वशब्दवाच्यत्वमर्थाल्लब्धमित्युक्तं तथात-
त्रैवश्रीरामनाम्नः सर्ववाच्यवाचकत्वश्रुत्या" सर्वेषांबीजमक्षय-
मिति" सर्वशब्दबीजत्वस्मृत्याच स्वकार्य्यत्वप्राप्तसर्वशब्द-
द्वाराचिदचिन्मात्रवाचकत्वलाभात् तथाकारणावस्थायांका-
र्य्यावस्थायांचचिदचिद्विशिष्टस्यपरमात्माविनाभावतया त-
त्रापिपरमात्मनिचैतन्याधिक्यकृतं तत्प्रधानतावगतेश्च तत्ता-
दात्म्यगतस्यरामनाम्नः गोशब्दस्यगोत्वादिविशिष्टबोधकत्ववत्
गोत्वादेरपिबोधकवद्वापरमात्मविशेषणत्वेनावगतानां चिद-
चिद्भेदानामपिवाचकत्वस्यानुभवसिद्धेः सर्ववाचकत्वंमुक्तं"
ब्रह्मादीनांवाचकोयमिति" तदेवस्फुटयन्नउत्तरतापिनीये"
इत्योमितीत्यनयाप्रणवस्यषडक्षरप्रणवयोरक्षरतः साम्यंप्रद-
र्श्यानंतरं" तदेवोपास्यमितिज्ञेयमि" त्यन्नयातारकस्यसर्वो-
पास्यत्वंविधायतदनंतरं" अकाराक्षरसंभूत इत्यारभ्यार्द्धमात्रा-
त्मकोरामो"इत्यन्तेनप्रणवस्यश्रीरामवाचकत्वंनिर्दिश्यपश्चात्
ॐ मित्येतदक्षरं सर्वमित्यादिना तस्यनिखिलचराचर
वाचकत्वप्रदर्शनेन सर्वोपास्यबोधकत्वात् सर्वोपास्यत्वं
सूचितं त्तस्मात् श्रीरामनिष्ठसर्ववाच्यत्ववाक्यं
सर्व शब्दवाच्यानां चिदचिद्भेदानां तच्छरीरत्वेन तदपृथक्
सिद्धिंद्योतयन् उभयोः शरीरशरीरिणोः प्रत्यगात्मपरमात्मनो
रेकशब्दबोध्यत्वेनापार्थिक्यंवदति तथैवतन्नामनिष्ठब्रह्मादि-
सर्ववाचकत्वमपि सर्वेषां श्रीरामशरीरत्वेन तदपृथक्भावत्वं

च्च वदतीतीमवेवार्थस्फुटीकर्त्तुं सर्वस्यवाच्यवाचक जातस्य ब्रह्मव्याप्यत्वेन तदपृथक्सत्ताकत्वात् तद्रूपत्वमाहस्वयमेव- श्रुति " सर्वमेतद्ब्रह्मेत्तिब्रह्मैवैततसर्वमिति " व्यत्ययः एतद्भूत भविष्यादिपदनिर्दिष्टंसर्वं वाच्यवाचकजातं ब्रह्मब्रह्मात्मकं ब्रह्मव्याप्यत्वेनतदविनाभूतत्वात् तद्विशेषणैकस्वभावतयात दपृथक्सिद्धेः तदपृथक्सताकमित्यर्थः इति प्रथमपक्षार्थः स्वशरीरत्वेनस्वव्याप्यत्वेनस्वाविनाभूतत्वात् स्वविशेषणैक- स्वभावतया स्वापृथक्सिद्धेश्चिदचिद्भयां सूक्ष्मावस्थास्थिता- भ्यां विशिष्टंब्रह्मएतत्समीपवर्त्तित्वेनोपलक्षितं स्थूलंसर्वस्थूल चिदचिद्विशिष्टंब्रह्मेत्यर्थः अत्रसर्वमेतत्ब्रह्मैतिपक्षेसर्वेषांब्रह्मश- रीरत्वे नतद्विनाभूतत्वात् सर्वेषांशब्दानां सर्वशरीरिणि तत्रैवपर्य्यवसानात् ब्रह्मणः सर्वशब्दवाच्यत्वमुपपद्यते । " ब्रह्मैवैततसर्वमिति " पक्षेतु ब्रह्मणः सर्ववाच्यरूपत्वेन तन्मुख्यवाचकस्यरामनाम्नोपि सर्वशब्दरूपत्वोपपत्ते रुक्तयु- क्त्याशरीरिवाचकस्यापिशरीरवाचकत्वोपपत्तेश्च तस्यतत्तच्छब्द द्वारासाक्षाच्चसर्ववाचकत्वमुपपद्यते इत्यवधेयं नन्वोमित्येतद- क्षरंसर्वमित्यादि नाप्रणवस्यसर्ववाचकत्वंनोक्तं किंतु सर्वकार- णत्वेन सर्वात्मकत्वं ओँ मित्येतदक्षरं सर्वमितिसमानाधिक- रणयादितिचेन्न शब्दात्मकस्य प्रणवस्यशब्दांतरकारणत्वेसत्वेपि अर्थसृष्टिकारणत्वा भावात्तस्यब्रह्मस्वरूपत्वस्वीकारेणतत्सि- द्धिश्चेत्तदा अर्द्धमात्रात्मकोराम इत्यत्रापि समानाधिकर-

रायात् कार्य्यकारणत्वापत्तिः तांतु तन्मंत्रनिष्ठप्रणवकारणत्व बोधकस्य इत्योमितिवाक्यस्यविरोधात् षडक्षरकार्य्यस्यप्रणव-स्य षडक्षरवाच्य रामकारणत्वंनोपपद्यते इत्येवंनिरस्य "सीतारामौतन्मयावि" त्यत्रवन्हिवीजस्य स्ववाच्येन तादा-त्म्यनिर्देशवत् "अर्द्धमात्रात्मकोराम" इत्यत्रापिसमानाधि करणयेनतत्कार्य्यस्यप्रणवस्यापि स्ववाच्येनश्रीरामेण तादा-त्म्यंनिर्दिश्य ॐ मित्येतदक्षरमित्यादिवाक्यांतरेषु तस्यसर्व-कारणत्वमुक्तं अन्यत्ररामनाम्नः सर्वकारणत्वोक्तिवदित्युच्यते चेत्तादातिष्ठ त्वयमपिपक्षअस्यापिममाभीष्टसाकत्वात्कथमि-ति चेदुच्यते सर्वस्यवाच्यजातस्यतद्वाचकसंदर्भस्यप्रणवकार्य्या त्वादुक्तयुक्त्यासूक्ष्मंचिदचिद्विशिष्टंस्थूलचिदचिद्विशिष्ठमभव दित्यनयासर्वतदपृथक्सिद्धेःप्र णवस्यतुश्रीरामवाचकत्वेनतत्ता दात्म्यसिद्धेःअथवा "अकारः प्रथमाक्षरोभवती"त्यादिनातस्य षडक्षरतादात्म्योक्तेः षडक्षरस्यतुस्ववाच्येनतादात्म्यसिद्धेः सर्वं-ह्येतद्ब्रह्मेति सामानाधिकरण्य विशिष्टार्थ परत्वोपपत्तेः किंत-स्मिन्पक्षे श्रीरामनाम्नोपिसर्ववाचकत्वंमास्तु पूर्वंतस्यापिसर्वका-रणत्वनिर्देशात् "तथैवरामबीजस्थमिति ब्रह्मादीनांवाचक-त्वांरेफारूढामूर्तयः स्युरिति" श्रुत्यनुसारेणैवसिद्धतु एवंसत्य पिनपूर्वोक्तपक्षस्यहानिः कथमितिचेदुच्यते श्रीरामस्य सर्वंश-ब्दवाच्यत्वश्रुतिः चिदचिज्जातस्य श्रीरामशरीरत्वेनतदपृथक् सिद्धिप्रद्योत्य तदपृथक्सत्ता कत्वंबोधयति यतः तस्मात्सिद्धं

" सर्ववाच्यस्यवाचक " इत्यत्र ॐ " मित्येतदक्षरंसर्वमि " त्यत्रचयत्सर्वशब्देनोक्तं वाच्यवाचकजातं तत्सर्वंह्येतद्ब्रह्मेति ब्रह्मशरीरत्वेन गोत्वादिवत्तद्विशेषणैकस्वभावतयातदपृथक्सिद्धे रतदभिन्नसत्ताकमित्यर्थः तत्फलंतुश्रीरामशरीरत्वेन सर्वप्राणिनांस्वरूपस्थितिप्रवृत्तेः सर्वदा तदायत्ततयास्वशरीर योगक्षेमकारीप्रत्यगात्मैवतच्छरीरभूतस्यममयोगक्षेमो मच्छेषी श्रीरामोऽवश्यमेवकरिष्यतीति दृढविश्वासकारिनिर्भरत्वेन निर्भयः सन्सदास्वरूपपरस्वरूपयाथात्म्यानुसंधानपूर्वको तारकाख्यश्रीराममंत्रजपपरो भूत्वावक्ष्यमाणैः सप्तचत्वारिंशन्मंत्रैर्नित्यश्रीरामंस्तुवीतेति सर्वंह्येतद्ब्रह्मेत्यारभ्यतापिनीसमाप्तिपर्यंतेन श्रुतिसंदर्भेणबोधितमितिज्ञेयं येतुवदंतिब्रह्मैवाज्ञानमाश्रित्यचराचराकारेणभासते तेषांपरमार्थस्वरूपंरज्जुरियं नसर्प इतिवत सर्वंह्येतद्ब्रह्मैवास्तिनतदन्यत्किंचिदित्येवं बोधयंतीश्रुतिःस्वाज्ञाननिवृत्तिद्वारा परमानंदावाप्तिंज्ञापयतीति । तेप्रष्टव्याः सर्वंह्येतद्ब्रह्मेत्यत्र जगतोब्रह्मरूपत्वमुच्यते ब्रह्मणोजगद्रूपत्वं वा नप्रथमः वृक्षसमूहस्यवनस्यवृक्षव्यतिरेकेणाभाववत् जगद्व्यतिरेकेणब्रह्मणोऽभावप्रसंगात् उपदेशवैयर्थ्याच्च द्वितीयेतुआदित्योयूप इतिवत्सर्वत्रब्रह्मइतिसम्पाद्यते फलविशेषावाप्तयेचेत्तदासम्पाद्यतां नतावताऽद्वैतसिद्धिः अब्रह्मस्वरूपेण ब्रह्मत्वसंपादनमात्रेण तदैक्यप्रतिपत्यनुवादापातात् ननुनानयानवान्याभिरीदृशीभिः श्रुतिभिस्तत्रब्रह्मत्वंसंपाद्यते किंतुअज्ञा-

नंनिमितीकृत्यब्राह्मणाः सर्वाकारणत्वंप्राप्तस्यसर्वाकारत्वमि-
ववाप्तस्यसुखदुःखजन्ममरणादि भाजस्तद्भजमानस्येत्रवातन्नि-
वृत्तये तत्परमार्थस्वरूपंबोध्यते एतत्सर्वंचराचराकारेणदृश्यमानं
नतत्तद्रूपमेवनचसुखदुःखाद्यात्मकं किंतु ब्रह्मस्वरूपत्वेनवस्तु-
तोदुःखाद्यतीतमेवेतीतिचेत्तर्हि यद्ब्रह्मचराचरात्मकत्वप्राप्तंत-
दवभासते वातत "एक मेवाद्वितीयंब्रह्म" सत्यंज्ञानमनंतं-
ब्रह्म "आदित्यवर्णं तमसः परस्तात्" नतत्समश्चाभ्यधि-
कश्चदृश्यते "प्रधानक्षेत्रसतपति र्गुणेश" इत्येवमादिश्रुति-
बोध्य मेवनान्यद्दितिचेत् तर्हिप्रथमसजातीविजातीयस्वगत
भेदशून्येऽद्वैतेनिर्गुणेनिर्विकारेस्व स्वरूपमात्रस्थेतस्मिन्सति
कुतोऽज्ञानागमनं तद्दर्शनं च किमप्राप्तं वातस्ययन्निमिती
कृत्ययदपेक्षयाजगत्कारणत्वं प्राप्तं तत अनादिभूतं तदज्ञानं
तदाश्रित्यलीलयातदाकारत्वंप्राप्तमितिचेत् तर्ह्यनादितोऽद्वैत-
भंगः अज्ञानस्यद्वितीयत्वात ब्रह्मणास्वेच्छयोत्पादितंतदिति-
चेत तर्हिप्रथमंकस्मादुत्पादितं मायात इतिचे त्तयाप्यद्वैता-
पत्तिः तस्मादनाद्वित्वेनद्वितीयत्वात् स्वस्मात्स्वयमप्युत्पादित-
मितिंचेत्तर्हिसगुणत्वसविकारित्वापत्तिः निर्विकारित्वबोधक
श्रुतिनिचयव्यापकोपश्च ब्रह्मरूपमेवतदज्ञानमितिचेत्तदातस्य
ब्रह्मवत् प्रकाशिरूपत्वात स्वरूपावरकत्वमसिद्धं अज्ञानसंज्ञा
वैयर्थ्यं च नास्तिज्ञानमिति तस्मातक्लिष्टकल्पनागौरवं वातस्य-
ब्रह्माधिककार्य्यकारित्वाभावाद्वैयर्थ्याच तादृशस्यतस्योत्पादके

ब्रह्मसकाशादधिकं तन्न्यूनं वा नप्रथमः तस्यैवसर्वसेव्यत्व प्रसंगात् नापिद्वितीयः न्यूनस्यतस्यतदधिकपदार्था श्रयंविना-स्वाधिकपदार्थावरकत्वासंभवात् सतिच ब्रह्माधिकेपदार्थे तस्यैवसेव्यत्वप्रसंगाच्च पुनश्चिदावरकत्वाघटनाच्च प्रत्युतोभयोः संमेलनेप्रकाशाधिक्यानुभवात् अचिद्रूपं चेत्तदज्ञानंतर्ह्यभाव रूपं भावरूपंवा न प्रथमः अभावस्यावरकत्वादर्शनेन सुतरा भावावरकत्वासंभवात् तमसिदृष्ट मितिचेन्न तस्यचलनक्रियाद्या श्रयत्वेनद्रव्यत्वस्वीकारात् अभावात्मकत्वांगीकारेपि न तस्य-प्रकाशावरकत्वंघटते सूर्य्योदयमात्रेण तद्विनाशदृष्टेः अस्ता-चलादिकगते सूर्य्ये तमः प्रसरणाद्दृष्टेश्च भावरूपतदज्ञान मितिचेत्तर्हि जडस्यन्यूनस्यतस्य स्वाधिकप्रकाशात्मक ब्रह्मा-वरकत्वासंभवः दीपावरकेघटादौसूर्य्यप्रकाशावरकेलोकालोक पर्वतादौ तद्दृष्टंश्रुतंचेति चेत्सत्यं तथापि उभयोस्तयोःप्राकृतेन जडत्वसाम्यात्तत्रतत्सं भवेपि प्रकृतेउभयोश्चिदचि-त्वेन न विजातीयत्वान्नतत्संभव इति दृष्टांतासंगतिः नन्वज्ञानस्यनभावरूपत्वं नाभावरूपत्वं नाऽनादित्वंनसादि-त्वं चब्रूमः किंचानिर्वचनीयंतदितिचेन्न" अजामेकांलोहित-शुक्लकृष्णावर्णांबन्हींप्रजांजनयंतींसरूपां" गौरनाद्यंतवतीसा-जनयत्रीभूतभावनी" प्रकृतिंपुरुषंचैवविद्धयनादीउभावपि" विद्याविद्येममतनूविद्ध्युद्धवशरीरिणाम् वंधमोक्षकरीआद्ये" इत्यादिश्रुतिस्मृतिभ्यस्तदनादित्वस्यनिर्वचनत्वेनत्वदुक्तोज्ञान

मूलत्वेनाप्रामाण्यात् श्रुतिप्रमाणकस्यतदनादित्वस्यस्वीकारे
त्वद्वैतभंगः किंवहुना ब्रह्मज्ञानयोश्चिज्जडस्वरूपत्वेनतमः
प्रकाशवद्विरुद्धस्वभावत्वेन कयापिरीत्या ज्ञानकृतब्रह्मसंस्पर्शः
घटते येनतस्यकदापिकयापिरीत्यासंसारित्वंसंभवेत् नन्वीश्व-
रत्वेनकर्त्तुमकर्त्तुमन्यथाकर्त्तुंसमर्थं तद्ब्रह्माघटितघटनापटीय
स्याश्वसत्त्याऽघटितमपिघटयितुं समर्थमितिचेत्तर्हिकस्मैप्रयो-
जनायस्वतंत्रंब्रह्म स्वयमेवाज्ञानसंस्पर्शपूर्वकंस्वरूपतिरोधानेन
संसारित्वंप्राप्य नानादुःखभाग्भूत्वा स्वस्मिन्नज्ञत्वंसंपाद्य पुन-
स्तद्विमोक्षाय नानाक्लेशसाधितान् वेदतंत्रादिविहितोपाया-
ननुतिष्ठेत तदनुष्ठानेपिकदाचित्कयापिरीत्याकेनापिरूपेण-
मुच्येत रूपांतरैस्तुवहुयतमानमपिस्ववांछितंभोगंमोक्षंवाऽप्रा-
प्या वांछितंसंसारं नानादुःखाकरमाप्नुयादिति नकथंचि-
त्किमपितत्राज्ञाननैमित्तिकसंसाराकारत्वप्राप्तिहेतु मुपलभामहे
येनमनःसंतुष्येत ननुनतत्राज्ञानकृततत्संस्पर्शः किंतुलीला-
प्रयोजनंसत् ब्रह्मस्वयमेवाज्ञानंनिमितीकृत्यभोक्तृभोग्यभोग-
स्थानभेदेननानाकारंप्राप्य लूतादिवद्विहृत्यचपुनः एकरूपेणा-
वतिष्ठते इतिचेत्तर्हि तत्रोन्मतत्वप्रसंगः नहिकश्चिदनुन्मतः
स्वेनसहस्वयमेकाकीविहरति ब्रह्मणस्त्वनेकाकारप्राप्तावपि-
सर्वज्ञत्वादेकत्वज्ञानमव्याहतमेव सर्वजीवांतर्यामिणःइव
लीलादशायांविस्मृतं तदितिचेतर्हि अज्ञानपरवशत्वप्रसंगः
सतुपूर्ववहुधानिरस्तइत्यतोनतस्यावकाशः किंचतथात्वेमोक्षार्थं

प्रयत्नोनिरर्थकः यथास्वयंस्वेच्छयानेकाकारंप्राप्यविहरति-
तथास्वयमेवस्वेच्छयाज्ञाननिरासपूर्वकं नानाकारत्वंपरिहृत्य-
स्वस्वरूपमात्रेणावस्थास्यतीति चेन्नदृष्टान्तवैरूप्यात्तद्यथा
तत्रलूताशरीरविशिष्टा स्वदेहान्निःसृतैस्तंतुभिः स्वभिन्नेस्थाने
मक्षिकादिबंधनार्थंजालंवितत्य तत्रविहृत्यचपुनः संहरते-
कदाचित्बहुशस्तुतंतत्रैवपरिहृत्यस्वयमन्यत्रगच्छतिप्रकृतेतुब्र-
ह्मव्यतिरिक्तस्याभावात्तद्दृष्टांतासंगतिः ननुमास्त्वनयारीत्या त-
स्यचराचरात्मकत्वप्राप्तिः किंतु स्वेच्छयोत्पादितायाअविद्यायाः
अनादिभूतायावातस्यावहुभेदंकृत्वाप्रतिभेदंप्रतिबिंबितस्वाभा-
सरूपेणाजीवत्वंप्राप्तमितिचेन्न तदानींतदुत्पत्तेः प्राक्तत्कर्मा-
भावेन भोगमोक्षार्थत्ववक्तव्याभावात् लीलार्थमित्यवश्यंवा-
च्येपुनस्तत्रोन्मत्तत्वादिदोषग्रस्तादवस्थः अविद्यायाअनादि-
त्वेऽद्वैतभंगः तस्माद्ब्रह्मोत्पादितत्वेतुतत्रविकारित्वापत्तिःजीवा-
नामनादित्वस्वीकारेऽद्वैतभंगः भावस्याविनाशित्वात् ब्रह्मणो-
जीवरूपत्वप्राप्तिपक्षे विकारित्वापत्तिःतत्सुखित्वदुःखित्वभेदनै-
मित्तिकवैषम्यनैर्घृण्यापिअनादिभूतस्यब्रह्मणोऽनादिभूतायाम-
विद्यायामादितः प्रतिबिंबंइतिपक्षोपिद्वैतापत्तिदोषग्रस्तः जीवा-
अनादयः ब्रह्मजीवत्वंप्राप्तमित्युक्त्योन्मत्तत्वप्रसंगः द्वयोर्व-
चनयोः परस्परंविरोधात् इत्येवमद्वैतपक्षस्यबहुदोषग्रस्तत्वात्
तत्रप्राथमिकसृष्टिरचनानोपपद्यते यामाश्रित्यावांतरसृष्टिस्थि-
तिसंहाराणांरचनोपपद्येतनचजीवानांपूर्वानुसारेणेश्वरःसृष्टिंवा

दिकंकरोतीति त्वयावक्तव्यं जीवानांस्वरूपसिद्धिं विनात-
त्कृतकर्म्मोक्तेर्दुर्वचत्वात् नचजीवानां तत्कर्म्मणां चानादि-
त्वात्सृष्ट्यादीनामप्यनादित्वंसिद्धेत्त्वत्पक्षे" एकमेवाद्वितीयं
ब्रह्मसएकाकीनरमतेसऐक्षतबहुस्यांजायेत्येव" मादिभिः प्र-
थममेकस्यैवसतो ब्रह्मणः ईक्षानंतरंबहुभवनवचनेन जीवानां-
सादित्वसिद्धेरुक्तदोषानांतादवस्थात् हठात्तेषामनादित्वस्वी-
कारेतूक्तरीत्याऽद्वैतभंग इत्युभयतः पाशारज्जुः ननुनचतेषा-
मनादित्वंब्रूमः किंत्वनादिकालेततूब्रह्मबहुरूपत्वंप्राप्तमिति
ब्रूमस्तेन नाद्वैतभंगः नापिपूर्वपूर्वकर्म्मानुसारेणोत्तरोत्तर-
सृष्ट्यादिरचनानुपपत्तिरितिचेत् तर्हि यदैवतद्ब्रह्म बहुरूप-
त्वंप्राप्तंतदैवकिमाश्रित्य कथंचाश्रित्य किमर्थंचकथंचबहुरूप-
त्वंप्राप्तं तदितितस्मात्कालात्पूर्ववर्तूनानाकर्मणामसंभवात्
किमवलंब्यसृष्टेर्वैचित्र्यंतेनकृतमितिचपृच्छमः अज्ञानमाश्रि-
त्येत्यादिकंतुनवाच्यं इत्यादिवादानांनिरस्तपूर्वत्वात्नचैकंब्रह्म-
तत्तत्कर्मरचनापूर्वकंतत्तदाकारत्वंप्राप्तं तान्येवकर्म्मण्याश्रि-
त्यचविचित्रसृष्ट्यादिकंकरोतीत्यपिवाच्यं जीवोत्तमाधमभाव-
प्राप्तिनिमित्तभूतोत्तमनिकृष्टतत्कर्मकारित्वेन ब्रह्मणिवैषम्य-
नैर्घृण्यप्रसंगात्तस्मादद्वैतवादः बहुदोषग्रस्तःसर्वशास्त्रविरुद्धश्च
नचाभेदवादीश्रुत्यर्थं घटनेलक्षणागौरवात् मुख्यार्थबाधाच्च
त्वन्मतमप्यसमीचीनमितिवाच्यं भेदबाधनेकश्रुतीनांभेदार्थ-
परत्वकल्पनागौरवापेक्षया ल्पश्रुत्यर्थलक्षणायालाघवात्

वाक्यतात्पर्य्यानुपपत्तौ मुख्यार्थबाधेन लक्षणायाः शास्त्र-प्रसिद्धत्वाच्चेति वस्तुस्तुश्रुतिसिद्धेविशिष्टाद्वैतेनकल्पनोक्त्य-वकाशः तथाहि यः पृथिव्यांतिष्ठन्यस्यपृथिवीशरीरंयोमृत्युमंतः संचरन्यस्यमृत्यःशरीरंयःआत्मनितिष्ठन्यस्यात्माशरीरं योक्षरेसं-चरन्यस्याक्षरंशरीरमित्याद्यान्तर्यामिपरश्रुतयः सर्वावस्था वस्थितयोश्चिदचित्तोर्भगवच्छरीरत्वं तस्यछरीरित्वं च बोधयंति "आकाशवत्त सर्वगतश्चनित्य अजामेकामजोह्येकोऽजोन्या" इत्येवमाद्यास्तुचिच्चिदीश्वराणां नित्यत्वेनतन्निष्ठ व्याप्यत्व व्यापकत्वयो र्नित्यत्वमुपपादयंत्य श्चिदचितोः ब्रह्मव्याप्यत्वेन तदविनाभूतत्वात्गोविना भूतगोत्ववद्धर्मत्वोपपत्तो र्गोरभिन्न-सत्ताकगोत्वादिवत्तादभिन्नसत्ताकत्वंनिष्पादयंतीति सर्वस्य-च्चिदचिदात्मकस्यवस्तुतः तन्नित्यप्रकारत्वोपपत्या श्रीरामस्य-नित्यसर्वप्रकारित्व सिद्धेर्निर्बाधं तस्यसर्वरूपित्वंसिध्यति तदेववोधयंति "सर्वंह्येतद्ब्रह्मेतिसदारामोहंमि" त्येवमाद्या-श्रुतयः ताइमास्तु सर्वपदनिर्दिष्टस्य चिदच्चितोश्चोक्तरीत्या श्रीरामधर्म्मत्वेन तत्प्रकारत्वादभेदंप्रतिपादयंति नतुभवदभिम ताद्वैतं भेदवोधकसर्वादिपदग्रहणस्य वैयर्थ्यात् श्रुतीनांसर्वज्ञ-तयाऽद्वैतात्मसाक्षात्काराणां भेदनिर्देशपूर्वकमभेदप्रतिपाद-नस्य तत्तदधिकारानुरूपतत्तदुपायवोधनस्य च वैयर्थ्यापत्या उन्मतत्वप्रसक्तेः नन्वेवंचेत्तादाच्चिज्जीवगत गुणदोषाणांश्रीरा-मेब्रह्मणिप्रसक्तस्य सर्वरूपित्वोक्तेरितिचेन्न। यथासर्वगतंसौ-

क्ष्म्यादाकाशंनोपलिप्यते सर्वत्रावस्थितोदेहे तथात्मानोपलिप्यते ” आकाशवत्सर्वगतश्चनित्य”इत्यादिश्रुतिस्मृतिभिस्तस्यतद्गुणदोषासंस्पृशत्वबोधनात् तदेवंश्रीरामस्यसर्वव्यापित्वेन सर्वरूपित्वसिद्धः सर्वावस्थावस्थितयोरचिज्जीवयोस्तदविनाभूतत्वेन तद्धर्मांतरवत्तदपृथक्सिद्धेस्तत्तत्प्रकारत्वेन परमार्थतः सर्वप्रकारीश्रीरामएव कारणकार्य्यंचसएव सर्वदासर्वशब्दवाच्य इत्येवंयुक्तितोपि“सर्ववाच्यस्यवाचकः”विश्वरूपस्यतेराम इति श्रुतिस्मृतिभ्यांकंठतः यथोक्त तथाचिद्वाचकानांसर्वेषां शब्दानां चिदचिद्विशिष्ठस्य श्रीरामस्यवाचकत्वंसिद्ध तस्मात्कारणस्यश्रीरामवाचिनाशब्देन कार्य्यवाचिनाशब्दस्यसमानाधिकरणं मुख्यवृत्योपपन्नतरं सर्वशब्दब्रह्मशब्दयोरहंशब्दरामशब्दयोश्चैकार्थनिष्ठत्वप्रदर्शनात् किंचोक्तरीत्याकारणात्कार्य्यस्यानन्यत्वसिद्धेः कारणविज्ञानेनसर्वविज्ञानं चात्म निखिल्वरेदृष्टेश्रुतेमतेविज्ञाते इति सर्वंविदितंभवतीति श्रुत्युक्तमुपपन्नतरं तथा तदैक्षतवहुस्यामित्येव मादिश्रुत्यनुरोधात् ब्रह्मोपादानंजगदितिवादेपि उक्तरीत्याविशिष्टस्योपादानत्वसिद्धेः जगदुपादानत्वेपि चिदचितोःब्रह्मणश्चभोक्तृत्वभोग्यत्वनियंतृत्वभेदेन शुक्लकृष्णरक्ततंतुसंघातनिर्मितिविचित्रपटस्य तत्तत्प्रदेशे तंतुस्वरूपस्वभावाशंकरवत्स्वरूपस्वभावाशंकरत्वंज्ञापयंति भोक्ताभोग्यंप्रेरितारंचमत्वा पृथगात्मानंप्रेरितारंचमत्वाजुष्टस्ततस्तेनामृतत्वमेति अत्रामृतत्वप्राप्तिवचनंतद्भेदस्य

पारमार्थिकत्त्वंसूचयति आत्मपरमात्मपृथग्ज्ञानेनैवामृतत्व-
प्राप्तिश्रवणात् द्वासुपर्णासयुजासखायौसमानेवृक्षेपरिषस्वजाते
तयोरन्यःपिप्पलंस्वाद्वात्यनश्नन्नन्योभिचाकसीति अस्मान्मा-
यीसृजतेविश्वमेतत् तस्मिंश्चान्योमाययासंनिरुद्धः मायांतुप्र-
कृतिंविद्यान्मायिनंतुमहेश्वरमिति सकारणंकरणाधिपाधिपोन-
चास्यकश्चित्जानितानचाधिपः प्रधानक्षेत्रज्ञपतिर्गुणेशः पत्तिं
विश्वस्यात्मेश्वरंशास्वतंशिवमच्युतं ज्ञाज्ञौद्वावज्जावीशानी-
शानौ नित्योनित्यानांचेतनश्चेतना नामेकोवहूनांयोविदधा-
तिकामान्" अजामेकांलोहितशुक्लकृष्णांवह्वीप्रज्ञांजनयतींस
रूपांअजोह्येकोजुषमाणोनुशेतेजहात्येनांमुक्तभोगामजोन्यःगौर
नाद्यंतवतीसाजनयत्रीभूतभावनी समानेवृक्षेपुरुषोनिमग्नोऽनी-
शयाशोचतिमुह्यमानोजुष्टंयदापश्यत्यन्यमीशमस्यमहिमानमेति
वीतशोकःइत्येवमाद्याश्रुतयःभूमिरापोनलोवायुखंमनोबुद्धिरेचव
अहंकारइतीयंमेभिन्नाप्रकृतिरष्टधा अपरेयमितस्त्वन्यांप्रकृतिं-
विद्धिमेपरां जीवभूतांमहावाहोययेदंधार्य्यतेजगत् प्रकृतिंपुरुषं-
चैवविद्ध्यनादीउभावपि ममयोनिर्महद्ब्रह्मतस्मिन्गर्भंदधाम्यहं
संभवः सर्वभूतानांततोभवतिभारतसर्वयोनिषुकौंतेयमूर्त्तयः
संभवन्तियाः तासांब्रह्ममहद्योनिरहंवीजप्रदः पिता द्वाविमौ-
पुरुषौलोकेक्षरश्चाक्षरमेवचक्षरः सर्वाणिभूतानिकूटस्थोक्षर-
उच्यते उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः योलोकत्रयमा-
विश्यविभर्त्यव्ययईश्वरः यस्मात्क्षरमतीतोहमक्षरादपिचोत्तमः

अतोस्मिँल्लोकेवेदेचप्रथितः पुरुषोत्तमः" इत्येवमाद्यास्मृति-
श्चतदेवंत्रयाणांविशिष्टत्वेस्वरूपस्वभावभेदात् अचिज्जीव-
गुणदोषाः परमात्मनिनस्पृशंतीत्येतदप्यांसांतात्पर्यंबोध्यं नि-
र्गुणवादस्यतुपरमात्मनिहेयगुणसंबंधाभावेदृष्टिरस्ति नतुदि-
व्यगुणनिषेधेपिएषआत्मापहतपाप्माविजरोविमृत्युर्विशोकोवि-
जिघत्सोपिपास" इतिहेयगुणान्प्रतिषिध्य" सत्यकामः सत्य-
संकल्प" इतितयैवश्रुत्यातत्रदिव्यगुणविधानात्" सत्यंज्ञान-
मनंतंब्रह्म" इत्येवमादिकाः श्रुतयोः ब्रह्मणोज्ञानस्वरूपत्वमा-
वेदयंति तच्चतत्रज्ञानप्राधान्यादुपपद्यते यथाधीतशर्वशास्त्रोपि
तत्रान्यतरशास्त्रप्रधान्यानन्याय स्वरूपोयंव्याकरणस्वरूपायमि-
त्युच्यतेतथाशक्तिबलैश्वर्य्यादिगुणविशिष्टमपि ब्रह्मज्ञानप्र-
धान्याज्ज्ञानरूपमित्युच्यते स्वप्रकाशतयाज्ञानस्वरूपत्वंवोपप-
द्यते नचयथाश्रुतमेवास्त्वितिवाच्यंयः सर्वज्ञः सर्ववित्परास्य
शक्तिर्विविधैवश्रूयतेस्वभाविकीज्ञानबलक्रियाच विज्ञातारमरे-
केनविजानीयात् नहिविज्ञातुर्विज्ञातेर्विपरिलोपोविद्यते" इत्ये-
वमादिज्ञातृत्वबोधकश्रुतिसमूहविरोधात्" मृत्योः समृत्युमाप्नो
तियइहनानेवपश्यति नेहनानास्तिकिंचनयत्रहिद्वैतमिवभवति
तदितरइतरंपश्यतियत्रत्वस्यसर्वमात्मैवाभूतत्तत्रकेनकंपश्येदि"
त्येवमादिभिनानाशब्दोदितमब्रह्मात्मकं वस्तुप्रतिषिध्ययत्रत्व-
स्यसर्वमात्मैवाभूदित्यस्यअनुरोधात् इहनानाब्रह्मवर्ज्जितंवस्तु-
नास्तीत्यर्थः हिरुक्नानाचवर्ज्जनेइत्यव्ययार्थत्वात् अथवापूर्व-

चिदचितोः श्रीरामशरीरेनेत्यादिनाश्रीरामस्य सर्वरूपित्वमुक्त ततस्तुसर्वेषां श्रीरामरूपत्वमर्थसिद्धं तथाचैकरूपत्वा-नेकप्रकारत्वयो विरोधात्सर्ववस्तुश्रीरामरूपत्वेनैकप्रकारं तदेवा-नाना शब्देनोच्यते तत्प्रतियोगिश्रीरामरूपं वस्तुनानाशब्दवाच्यं तदेवात्रनिषिध्यते" यइहनानेवपश्य ती " त्यादिनानपुनः " सोऽकामयतवहुस्यांप्रजाये येति तदैक्षतवहुस्यां तन्नामरूपाभ्यांव्याक्रियत " इतिस्वसंकल्पकृ-तस्थनामरूपभेदेननानाप्रकारस्यापि प्रतिषेधः उपपद्यते तस्यै-वब्रह्मशरीर तयाब्रह्मरूपत्वेनैकप्रकारत्वनिष्पत्तेः " यत्रत्वस्य सर्वमात्मैवाभू " दितिनिषेधवाक्यारंभे सर्वत्रब्रह्मरूपत्वदृष्टि-विधानाच्च एवंचिदचिदीशराणां स्वरूपभेदं स्वभावभेदं च वदंतीनां कार्य्यकारणयोरनन्यत्वंवदंतीनांच सर्वासांश्रुतीनां मेकवाक्यत्वंप्रदर्शितं अपरंच " अजामेकामजोह्येको अजो-न्योज्ञाज्ञौद्वावजौ प्रकृतिंपुरुषंचैवविद्ध्यनादीउभावपी " त्यादि श्रुतिस्मृतिभिश्चिदचिदीश्वराणामनादित्वं"नकर्मणामनादित्वा दिति"सूत्रात् जीवकर्मणां चानादित्वमवगम्यते तेषांकर्मवै-चित्र्याततदनुसारेण विचित्रसृष्ट्यादिंककरोति भोगंमोक्षं च ददातीश्वरस्तस्मान्नतत्रवैषम्यनैर्घृण्योक्त्यवकाशः तथाच पार-मार्षसूत्र " वैषम्यनैर्घृण्येनसापेक्षत्वादिति " जीवकर्म्मसा पेक्षत्वादित्यर्थः नचताद्दशकर्म्मोत्पादकत्वेनेश्वरे वैषम्यादि शंकावकाशः कर्मणामनादित्ववादिसूत्रसद्भावात् न चास्मिन्प-

द्योकिमवलंब्येश्वरः प्रथमांसृष्टिंकृतवानित्यादिशंकावकाशः चिदचिदीश्वराणांजीवकर्म्मणांचानादित्वेनसृष्ट्यादीनामप्यनादित्वोपपत्तेः नच सृष्ट्यादिवैचित्र्यहेतुभूततत्तत्कर्म्मवैचित्र्येको हेतुरित्याशंकनीयं तथासतिकर्म्मणांसादित्वप्रसंगेन तदनादित्ववादिसूत्रादिव्याकोपात् कर्म्मणामनादित्वोक्त्यैवतन्निरासाच्च येनचजीवकर्म्मवैचित्र्यस्यहेतुस्फुरेत् सजीवनांतत्कर्म्मणां चादिपश्चाद्भावोनकुत्रापिश्रूयते नवाकल्पमितुंशक्यः वीजवृक्षवदुभयोरादिपश्चाद्भावस्यानिरूप्यत्वात् अनेनदृष्टांतेनापितयोरनादित्वावगतेश्च तथाप्युक्तदृष्टांतेनैवोभयोर्वैचित्रे उभयोः परस्परंहेतुत्वपक्षेप्रदर्शितादोषाआसज्जेरन् जीवानामज्ञानसंवंध स्वीकारेपि नतत्स्वरूपेणतत्संवंधः किंतुदीपावरकस्यघटादेर्दीपप्रकाशमात्रेणसंवंधवत् तद्गुणभूतेन ज्ञानेनैवतत्संवंधः जीववंधमोक्षयोस्तत्ज्ञानसंकोच विकाशद्वारकत्वोक्तेः तथाचभगवद्वचनं " ज्ञानेनतुतदज्ञानंयेषांनाशितमात्मन स्तेषामादित्यवउज्ञानंप्रकाशयतिभारत " इतिअत्रआदित्यदृष्टांतेन गुणगुणिनोंभेदस्यमोक्षावस्थायां ज्ञानगुणविकाशतायाश्चसिद्धेवद्धाऽवस्थायां तत्संकोचस्यार्थसिद्धिः तदेवमनाद्यज्ञानेनैवजीववंधः भगवद्भजनजन्यज्ञानेनाज्ञाननिवृत्तिः ततः स्वस्वरूपावाप्तिस्ततोभगवत्पराभक्तिस्ततस्तत्वज्ञानपूर्वकं तत्प्राप्तिरितिभगवद्वचनादवगम्यते " तेषांसततयुक्तानांभजतांप्रीतिपूर्वकंददामिवुद्धियोगंतंयेनमामुपयांतिते ज्ञानेनतुतदज्ञानंयेषांनाशितमात्मनः

तेषामादित्यवज्ज्ञानंप्रकाशयतिभारत" "ऋतेज्ञानान्नमुक्तिः" "मुक्तिर्हित्वान्यथारूपंस्वरूपेणव्यवस्थितिः स्वकर्म्मणातमभ्यर्च्यसिद्धिंविंदतिमानवः सिद्धिंप्राप्तोयथाब्रह्मतथाप्नोतिनिबोधमे समासेनैवकौंतेयनिष्ठाज्ञानस्ययापरा बुद्ध्याविशुद्धयायुक्तोधृत्यात्मानंनियम्यच शव्दादीन्विषयांस्त्यक्त्वारागद्वेषौव्युदस्यच विविक्तसेवीलघ्वाशीयतवाक्कायमानसः ध्यानयोगपरोनित्यं वैराग्यंसमुपाश्रितः तथावद्धांजलिपुटंदीनंयाचतंशरणागतं नहन्यादानृशंस्यार्थमपिशत्रुंपरंतप कथंचिदुपकारेणकृतेनैकेनतुष्यति नस्मरत्युपकाराणांशतमप्यात्मवत्तया रामोद्विर्नाभिभाषते" इत्यादिमहर्षिवचनादवगम्यते तदेवमत्रसृष्ट्यादिव्यवस्थावैषम्यादिनिवृत्तिर्बंधमोक्षव्यवस्थाचोपपादिता तदेवयत्पूर्वं तदेवोपास्यमितिज्ञेयमि" त्यनयातारकस्यसर्वोपास्यत्वंज्ञेयत्वंचविहितंतच्चस्वस्वरूपपरस्वरूपानुसंधानपूर्वकमित्येतदर्थबोधनाय "सर्वंह्येतद्ब्रह्मेत्यस्याः" श्रुतेः प्रवृत्तिः अनयातुसर्वस्यब्रह्मशरीरत्वेनोक्तरीत्या तद्भिन्नसत्ताकत्वाभावात् स्वशरीरयोगक्षेमकारीप्रत्यगात्मैव सर्वशरीरिब्रह्मसर्वस्ययोगक्षेममवश्यमेवकरिष्यतीति दृढविश्वासनिर्भरतया निर्भयः सन् स्वात्मपरमात्मस्वरूपयाथात्म्यानुसंधानपूर्वकं श्रीराममंत्रोपासनपरोभवेदिति बोधितं ननु भवतुसर्वस्यब्रह्मशरीरत्वेनतथात्वं तेनमम किमित्याशंकांनिवर्तयति "अयमात्माब्रह्मेतिसर्वंह्येतद्ब्रह्म" त्येत्रोक्तस्यहीत्यस्यार्थोऽत्रद्रष्टव्यः हियस्मात्सर्वंब्रह्मतस्मात्सर्वंत-

गतत्वादयमहमस्तीत्यनुभवगोचरआत्मापिब्रह्म ब्रह्मशरीरत्वे- नोक्तःरीत्यातदभिन्नसत्ताक इत्यर्थः तस्मादयमप्युक्तरीत्यातार- कोपासनपरोभवेदितिभावः इममेवार्थंस्फुटीकरिष्यंति "अयमा त्माचतुष्पादित्याद्याः श्रुतयः तत्रप्रथमंप्रकृतिसंश्लिष्टमात्म- स्वरूपंप्रकृतिविविक्तमात्मस्वरूपंचसंशोध्य तस्यसर्वास्ववस्था- सुब्रह्मशरीरत्वेन गोत्वादिवत्तद्विशेषणैकस्वभावतयातदभिन्न- सत्ताकत्वंभावयंतो "जीवंतोऽपिमुक्ता" इत्येतद्बोधयंति "अय- मात्मा" चतुष्पादित्यारभ्यनतेसंसारिणोननमित्यंताः श्रुतयः" सोयमात्माचतुष्पादितिसोऽनंतरोक्तअयमात्माचतुष्पात्चतुश्च- रणः कथमस्यच चतुष्पादत्वमित्यत "आहजागरितस्थान" इत्यारभ्यचतुर्थंमन्यंतइत्यंतेन

जागरितस्थानोबहिःप्रज्ञःसप्तांगएकोन- मुखःस्थूलभुग्वैश्वानरःप्रथमःपादः॥ ६ ॥

जागरितस्थानः जागरितंस्थानमस्येतिजागरितस्थानः बहिप्रज्ञः स्वात्मव्यतिरिक्तेविषयेप्रज्ञापरस्यसबहिः प्रज्ञः सप्तांगः सप्तमस्तकादीन्यंगान्यस्येतिसप्तांगः शिरश्चक्षुर्मुखंप्राणोमध्यं बस्तिस्ततोप्यधइत्यंगसप्तकं" वैश्वानरोपारितश्रुतौस्मृता- वितितानिकानिचेदुच्यते "द्यौर्मूर्द्धाचक्षुरादित्यअग्निर्मुखंप्राणो वायुः देहमध्यमाकाशबस्तिः समुद्रपृथिवीपादावितिं" सप्त- सुलोकेषुशिरआदीन्यंगान्यस्येतिवायद्वाबहिर्विषयप्रज्ञाद्वारभू-

तानिद्वेचक्षुषीद्वेश्रोत्रेरसनंस्पर्शघ्राणंचेतिसप्तांगानियस्य अत्रे-डापिंगलयोयुगपद्वहनाद्घ्राणमित्येकवचनंएकोनविंशतिमुखः पंचज्ञानेंद्रियाणिपंचकर्म्मेंद्रियाणिपंचप्राणाःचत्वार्यंतःकरणान्ये वंएकोनविंशतिः साधिदेवतानि मुखानिउपलब्धिस्थानान्यस्ये-कोनविंशतिमुखः तथास्थूलभुक्स्थूलान्विषयान्प्रधान्येन-स्वात्मसात्करोतीतिस्थूलभृक् वैश्वानरः विश्वेषांनराणांनय-नाद्वैश्वानरः प्रथमः पादः ॥ ६ ॥

## स्वप्नस्थानोन्तः प्रज्ञः सप्तांग एकोन विंशतिमुखः । प्रविविक्तभुक् तैजसोद्विती यःपादः ॥ ७ ॥

द्वितीयमाह स्वप्नस्थानइतिस्वप्नंस्थानमस्यतैजसस्येति स्वप्नस्थानः अन्तः प्रज्ञःअंतरेवप्रज्ञायस्यासान्तः वप्रज्ञःजाग्रत प्रज्ञैवस्वप्नावस्थायां वहिर्विषयेव्भाव भासमानामनसिस्यंदमा-नासतीतथाभूतं संस्कारंमनस्याधत्तेतन्मनस्तथासंस्कृतंत्वात्चसा-धनानपेक्ष्याविद्याकर्म्माभ्यांप्रेर्यमाणंजाग्रवद्भवतीत्यर्थःइन्द्रिया-पेक्षयातिसूक्ष्मत्वान्मनसः तद्वासनानुरूपांतर्लब्धप्रज्ञोऽन्तःप्रज्ञः सप्तांगएकोनविंशतिमुखः इत्यंगमुखयोरुक्तन्यायेनवासनानुरू-पत्वमेवात्रबोधव्यंस्वप्नेवोभयोस्तयोःप्रतीयमानत्वात्प्रविविक्त-भुक्प्रकर्षेण विविक्तान्ः केवलंवासनामयान्भोगान्भुनक्तीति

प्रविविक्तभुक्तैजसः जाग्रत्सुषुप्तीस्वतेजसागच्छतीतितैजसः द्वितीयपादः त्रिष्वपिस्थानेषुतत्त्वाप्रतिबोधलक्षणस्यस्वापस्य-तदल्पत्वात् सुषुप्तंविभजतेतृतीयपादकथनार्थं "यत्रसुप्तोनकं-चनकामंकामायतेनकंचनस्वप्नंपश्यतितत्सुषुप्तमिति

यत्रसुप्तोनकं चनकामं कामयते ।
नकंच नस्वप्नंपश्यतितत्सुषुप्तं ॥

सुषुप्तस्थानएकीभूतः प्रज्ञानघनएव-आनन्दमयोह्यानन्दभुक्चेतोमुखः प्राज्ञस्तृ-तीयः पादः ॥ ८ ॥

यत्रयस्यामवस्थायांसुषुप्तोनिद्रितः पुमानकंचनकमपि-कामं विषयं न कामयते आसक्तबुद्ध्यानाभिलषति नकंचन-स्वप्नंपश्यति कमपिवासनामयं भोगं नानुसंधत्ते तत्सुषुप्तं सासुषुप्तावस्था तृतीयपाद माहसुषुप्तस्थानइत्यादिना "सुषुप्त-स्थान" उक्तसुषुप्तंस्थानमस्येति सतथोक्तअसत्कार्य्यवादस्या युक्तत्वाद्विद्यमानमप्यत्र सप्तांगत्वमेकोनविंशतिमुखत्वं च सन्मात्रान्नपृथग्विभाव्यत इत्याहएकीभूतइति जाग्रतस्वप्ना वस्थयोरात्मनः वाह्यांतरिंद्रियवृत्तिद्वारातत्तद्विषयाकारेणाव-भासमानत्वे न केवलप्रज्ञानत्वेनावभासमानत्वं सुषुप्तौतत्त-द्विषयाकारेणात्मवृत्तीनांस्वकारणेवृत्तेविहंगइवलयात् आत्मनः

केवलंप्रज्ञानघनत्वेन भासमानत्वमित्याह प्रज्ञानघनएवेति तदानींदुःखबीजस्य विद्यमानत्वेपि दुःखाद्यनुभवद्वारभूताना मिंद्रियाणांलयादेवदुःखाद्यप्रत्यक्षत्वादानंदप्रायएवेत्याह आनंदमयइति विश्वतैजसयोरिवास्यापिभोगमाह स्वानंदभुगिति अतिशयेनानंदंभुनक्तीति सतथोक्तः चेतोमुखः स्वप्नादिप्रतिबोधेचेतः प्रतिद्वारीभूतत्वाच्चेतोमुखः बोधलक्षणं च चेतोमुखं द्वारमस्यस्वप्नाद्यागमनं प्रतीतिचेतोमुखः प्राज्ञेति प्रज्ञप्तिमात्रमस्यासाधारण रूपमितिप्राज्ञः जाग्रत्स्वप्नावस्थयोर्विशिष्टज्ञानवत्वात् नप्राज्ञेतिविशिष्यते तृतीयपादः सुषुप्तावस्थायांजगन्नियंतृत्वादिव्यवहारादर्शनात् प्रत्यगात्मनः प्रकरणाच्च जीवस्यब्रह्मैक्यानुपपत्तेश्च एषप्राज्ञआत्माजाग्रदाद्यवस्थायां स्वदेहेंद्रियमनसांनियंतृत्वेन तान्प्रतीश्वरत्वेनोच्यते इत्याह ।

एषसर्वेश्वरएषसर्वज्ञ एषोन्तर्याम्येषयोनिःसर्वस्यप्रभवाप्ययौहिभूतानां नवहिप्रज्ञंनान्तः। प्रज्ञंनोभयतः प्रज्ञंनप्रज्ञं नाप्रज्ञंनप्रज्ञानघनं अदृष्टमव्यवहार्यमग्राह्यमलक्षणमाचिन्त्यमव्यपदेश्य मेकात्मप्रत्ययसारंप्रपंचोपशमंशिवमद्वैतंचतुर्थंमन्यन्ते ॥ ६ ॥

एषसर्वज्ञइति सर्वेश्वरत्वेसर्वज्ञत्वे च हेतुएषोऽतर्यामीति

स्वदेहेंद्रियाणांमतः प्रवेशेनतन्नियामक इत्यर्थः तस्यामवस्था-
यांपदार्थांतर नियंतृत्वानुपपत्तेः न केवलमयंतेषांनियंता किंतु
स्वकर्म्मद्वारातेषामुत्पादकोपीत्याह एषयोनिः सर्वस्येति
विश्वेश्वरस्यापितदुत्पादकत्वानुपपत्तेः अस्यकर्मद्वारैवेश्वरस्य
सृष्टयादिकरणाच्च न केवलंतेषांयोनिरेव किंतु ब्रह्मादिस्थाव-
रांतानांसर्वेषांभूतानां क्रमेणोत्तममध्यमनिकृष्टत्तमकर्मद्वारोत्पा-
दकः तत्ताद्भोगावसने च विनाशक इत्याह " प्रभवाप्ययौहि-
भूतानामिति " हियस्मादयमेवभूतानांप्रथमोहेतुस्तस्मात्सर्व-
स्येश्वर त्वादिरपीत्यर्थः अत्र प्रवभपदंसर्वयोनिपदविवरणं
अथवायोनिपदं कारणत्वमात्रसूचकं प्रभवपदंसर्वप्रभवत्वात्स-
र्वयोनिरित्येवं तत्साधकत्वेनहेतुरित्यपौनरुक्तं पुनश्च एकस्या-
पिजीवस्यताद्दशकर्मानुसारेण ब्रह्मादिरूपेणोत्पत्तिसंभवात्
भूतानामित्युक्तं अस्यकर्मविनाजगदुत्पत्तिप्रलयहेतुत्वाभावाद-
स्यभूतप्रभवाप्ययहेतुत्वमप्यविरुद्धं एवमवस्थात्रयवंतंप्रकृतिसं-
श्लिष्टमात्मस्वरूपं प्रदर्श्याथ तद्विविक्तमात्मस्वरूपंदर्शयति
नवहिः प्रज्ञमिति प्रत्यगात्मस्वरूपेइंद्रियवहिर्विषयव्यापारस्या-
भावाद्विश्वसाक्षिणि जाग्रदवस्थाप्रतिषिध्यते तर्हिमनोव्या-
पारस्यदुर्वारत्वादंतः प्रज्ञत्वंप्रसक्तं तन्माभूदित्याह नांतः
प्रज्ञमिति अनेनतैजससाक्षिणः स्वप्नावस्थाप्रतिषिध्यतेउभय-
त्रव्यापार प्रतिषेधेनतदंतरालव्यापारे प्राप्तेतन्निषेधयति
नोभयतः प्रज्ञमितिजाग्रत्स्वप्नांतरालेमनोव्यावृत्तिः प्रज्ञानार्थं

नकुर्य्यादित्यर्थः अंतरालप्रतिषेधेनोभयत्रयुगपत्प्रज्ञानार्थ-
व्यापारेप्राप्तेतन्निषेधति नप्रज्ञमिति एवंसर्वतोमनोव्यापारप्रति-
षेधादव्यापृतंमनोऽविद्यात्मकंसमवतिष्ठते तत्स्थितिंप्रतिषेधति
नाप्रज्ञमितितत्रस्थितिप्रतिषेधादतोऽसाक्षिकेसुषुप्तेप्राप्तेन्निषेध-
ति नप्रज्ञानघनमितिएभिः षड्भिःपदैः प्रतिषेधभूते रात्मन-
स्तत्तदवस्थावत्वं प्रतिषिध्याथताद्दशस्यात्मनः सर्वपदार्थविल-
क्षणत्वेनदुर्श्चिन्त्यत्वमाह नवभिःपदैः अदृष्टमिति दृष्ट्यवि-
षयत्वयत्वादर्शनायोग्यमित्यर्थः यस्येन्द्रियस्ययोविषयस्तेनैव-
सविज्ञायतेइतितिनियमात्अतएवअव्यवहार्यंअन्यस्तेनैवविज्ञा-
यतेसचनान्येनेति एवंअग्राह्यं अतएवअलक्षणं लक्षणंलिंगं-
नविद्यतेयस्यतदलक्षणं अतएवाचिन्त्यं अनुमानेनतर्केणवा-
नचिन्त्यंअतएवअव्यपदेश्यं अतएवएकात्म्यप्रत्ययसारं एक-
स्मिन्सर्वेषामात्मनांप्रत्ययः एकात्मप्रत्ययः सर्वेषामात्मनांसा-
दृश्येनएकस्मिनात्मनिप्रत्ययेसतिअतएवसर्वेषामात्मनांप्रत्ययो-
भवतीतिभावः ताद्दशः प्रत्ययः सारं यस्यतथोक्तंयद्वासर्वेषांप्र-
त्यगात्मनांपरमात्मशरीरत्वेनतद्विशेषणैकस्वभावतया तदपृथक्-
सत्ताकत्वसिद्धेर्विशेषण भूतानामात्मनांविशेषभूते नपरेणैक्यात्
तेनरूपेणयत्सर्वेषामात्मनामैक्यंतस्ययःप्रत्ययःसएवसारंयस्यत-
त्तथोक्तंप्राकृतस्य वस्तुतोऽदृष्टस्यापितत्सद्दशवस्त्वंतरस्यसत्वात्
दृष्टांते नवोधोव्यपदेशश्चकर्त्तुमशक्यः सर्वविलक्षणस्यात्म
वस्तुनः पदार्थांतर साद्दश्याभावेन नकेनापि दृष्टांतेननद्बोधुं

व्यपदेष्टुंच शक्यं किन्तुस्वविषयिक विशुद्धबुद्ध्यैकगम्यं तत् "मनासातुविशुद्धेनाभिक्लृप्तः दृश्यतेत्वग्रया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभि" रित्यादिश्रुत्यंतरात् अतएव प्रपंचोपशमं जागदाद्यवस्थाविलक्षणो आत्मवस्तुनिबाह्यांतरेंद्रिय तद्व्यापार सम्बन्धाभावेन तस्यप्रपंचोपशमत्वं यस्यदर्शनमात्रेण प्रपंचउपशाम्यति तत्र किंवक्तव्यं प्रपंचोपशममिति अतएव शांतं तस्यस्वतः मंगलरूपत्वमन्येषां मंगलकरत्वं चाह शिवं शंकरं आत्मत्वावछिन्नत्वेनात्मनासैक्यात् प्रकृतेर्जड़त्वेनतत्सादृश्याभावात्तस्याद्वितीयत्वमित्याह अद्वैतं चतुर्थं तुरीयं पादं मन्यन्ते। स आत्मागुरु शास्त्रद्वारा विज्ञेय इत्याह स आत्मा विज्ञेय इति।

## सआत्माविज्ञेयः सदोज्वलोऽविद्यातत्कार्यहीनःस्वात्मबन्धहरः सर्वदाद्वैतरहितः॥आनन्दरूपःसर्वाधिष्ठानसन्मात्रोनिरस्ताविद्यातमो मोहोऽहमेवेतिसंभाव्यः१०॥

किमात्मकोविज्ञेयः स इति चेतआह "सदोज्वलः" जाग्रदाद्यवस्थासुविकारित्वेनप्रतीयमानोपिवस्तुतः निर्मलएव कुतः इतिचेत्राह "अविद्यातत्कार्य्यहीनः" अविद्यातत्कार्य्यस्याभावेनविकारित्वासंभवात् तदानिर्मलःबंधमोक्षयोर्गुणासं-

कोचविकाशरूपत्वेनात्मस्वरूपेनबंधोनचमोक्षइत्याह "आत्मबंधहरः" स्वरूपप्रतिबंधरहित इत्यर्थअहंब्राह्मणः सतुक्षत्रियइत्यादिप्रातीतिकभेददशायामपिनतत्तदाकारत्वं गतइत्याह "सर्वदाद्वैतरहितः" कुतइतिचेत्तत्राह "आनंदरूपः" अत्राच्युतानंदत्वेननतद्रूपत्वमात्मस्वरूपेघटते इत्यर्थःबद्धावस्थायां ज्ञानानंदादेःसंकोचमात्रोक्तेः सर्वदाद्वैतरहितत्वेहेतुः आनंदरूपइति तत्रहेतुः "सर्वाधिष्ठान्सन्मात्रः" सर्वस्याधिष्ठानंचासौसन्मात्रश्चअधिष्ठानमाधारः "इंद्रियाणिमनोबुद्धिरस्याधिष्ठानमुच्यते" इतिभगवद्वचनात् तथाचदेहेंद्रियाद्याधारदशायामपिसन्मात्रेणतद्विलक्षणइत्यर्थः ननुवृत्याद्याधारस्यघटादेस्तद्धर्मसंश्लेषवत् सर्वाधारस्याप्यात्मनस्तत्तद्धर्म्मसंस्पर्शापत्तिरितिचेत्तात्राह "निरस्ताविद्यातमोमोहः" तदुक्तंभगवता "यथासर्वगतंसौक्ष्म्यदाकाशंनोपलिप्यते सर्वत्रावस्थितोदेहे तथात्मानोपलिप्यते" इतिस्वरूपतोऽविद्यात्तत्कार्य्यराहित्यं पूर्वमुक्तं सर्वाधिष्ठानत्वेनतत्ताधर्म्मसंस्पर्शोअनेनप्रतिषिध्यते इत्यपौनरुक्त्यं अत्रपूर्वपूर्वस्योत्तरोत्तरंयथेष्टहेतुहेतुमद्भावः सदोज्जलत्वादिसप्तविशेषणविशिष्टंआत्मानंविज्ञाय किंकर्त्तव्यमितिचेतत्राह "अहमेवेतिसंभवाव्द" इतिसदोज्ज्वलत्वादिगुणविशिष्ठआत्माअहमेवेति संभाव्यतमात्मानंब्रह्मणैकीकुर्य्यादितिपरेणान्वयः इदानींस्वरूपतोवन्हिभिन्नस्याप्ययःपिंडस्यवन्ह्याविशिष्टस्य वन्हिरूपत्वेनभानवत् प्रतिबिंबितस्याद-

शस्य विंबाकारेणाभानवद्वास्वरूपतोभिन्नस्यापिप्रत्यगात्मनः सदोज्वलत्वादिगुणविशिष्टत्वेनातिनिर्मलस्यसर्वव्यापकेन श्रीरामेणाकात्स्न्यैव्याप्त्यातद्रूपत्वेनैवभानं यतोऽतस्तथैवभावयेदित्याह "अहमोंतत्सदिति अथवाआत्मनः परमात्मव्याप्यत्वेनतदविनाभूतत्वसिद्धेः सर्वदातदात्मकतांभावयेदित्याह

**अहमोंतत्सत्यत्परंब्रह्मरामचन्द्रश्चिदात्मकःसोहमोंतद्रामभद्रःपरंज्योतीरसोहमित्यात्मानमादायमनसाब्रह्मणैकीकुर्य्यादिति॥ ११॥**

ओमित्युच्चरन् अथवा ओमित्यव्ययं प्रथमांतं तद्वाच्यंब्रह्मअहंउक्तः सदोज्वलत्वादि स्वरूपः प्रत्यगात्माततव्यापकं सतसन्मात्रंयत्प्रसिद्धं " सर्वंह्येतद्ब्रह्मसर्वंखल्विदं ब्रह्मंब्रह्मैवेदमग्रेआसीत् " " सत्यंज्ञानमनंतंब्रह्मे " त्यादि श्रुतिषुयत्प्रसिद्धमित्यर्थः परंब्रह्मसर्वव्यापकंबृहद्गुणयोगिवातत्किमित्यपेक्षायामाह " रामचन्द्रश्चिदात्मकः सः अहं" तद्व्याप्यत्वेन तदात्मकत्वेनतदपृथक्सिद्धेस्तद्भिन्नसत्ताकोहंइत्यर्थः तदेत्यव्ययेनदृढयति पुनः ओमित्युच्चरन् तच्छब्दपरामृष्टमर्थपूर्वोक्तमनुवदति " तद्रामभद्रः परंज्योतिरस " इतितदादिविशेषणत्रयविशिष्टोरामभद्रः परंज्योतिरसः परंज्योतिःसारः अहंआत्मा उक्तरीत्यातदभिन्नसत्ताकइत्यर्थः सर्वथैक्यस्यानुपपत्तेः उपसंहरति " इत्यात्मानमादायमनसाब्रह्म-

णैकीकुर्य्यादिति" इत्युक्तप्रकारेणात्मनः श्रीरामाभिन्नसत्ताक-त्वेततदैक्यमादायस्वीकृत्यज्ञात्वेतिभावः "मनसातुविशुद्धेनाभिक्लृप्तः मनसैवानुद्रष्टव्य" मितिश्रुतेः विशुद्धेनमनसासाधने नतद्व्यापारेणध्यानेन ब्रह्मणाश्रीरामचन्द्रेण सहए-कीकूर्य्यात् अनेकौएकौकूर्य्यादित्यर्थः नियन्तृत्वनियम्यत्वा-दिस्वभावेनभेदेसत्यपि जीवस्यपरमात्मव्याप्यत्वेन तदविना-भूतत्वसिद्धेस्तदभिन्नसत्ताकत्वंभावयेत् विशिष्ठविशेषेसतिस-एवसन्यथास्वयं न प्रकाशेत्तथात्मस्थितिंकूर्य्यादित्यर्थः विशि-ष्ठविशेषत्वंनाम यथाजलान्तर्गतस्यजलेनान्तर्वहिर्व्याप्तस्यतू-लकणस्यजलरूपेणैवभानंभवति नतुतूलरूपेण तथैवापरि-छिन्नचित्स्वरूपेण रामाख्येनपरेणब्रह्मणा वहिरन्तर्व्याप्तस्य चिदणुजीवस्वरूपस्य स्वस्वरूपत्वेनाभानत्वपूर्वकं रामाख्यब्रह्म-रूपत्वेनैवभानत्वं एतदेवासकृतावर्त्तनीयमुपासकेनेत्याह "सदारामोहमित्येतत्तत्वतः प्रवदंतिये न तेसंसारिणोनूनं-रामएवनसंशय"इति अथवासर्वेश्वरत्वादीनां परमात्मधर्म्मत्वेन सर्वशास्त्रप्रसिद्धत्वात् परमात्मशरीरत्वेनतत् विशेषणैकस्वभा-वतया तदपृथक्सिद्धेः एषप्राज्ञः स्वप्रकारिपरमात्मस्वरूपेण सर्वेश्वरत्व सर्वज्ञानत्वादिगुणकइत्याह एषसर्वेश्वर इत्यारभ्य "निरस्ताविद्यातमोमोह इत्यंते न अत्रअद्वैतवादिनोपिजी-वपरमार्थं स्वरूपंपरमात्मानं मत्वातद्धर्म्माः सर्वेश्वर-त्वादयः तदाभासे जीवे आरोपयंति तस्मान्नते

षांवादिनामत्रविवादावकाशोस्ति सर्वेषांमते परमात्म-धर्म्माणां युक्तिविशेषैर्जीवपरत्व प्रतिपादनात् नचास्मिन् पद्येकर्म्मनैमित्तिकंसर्वेश्वरत्वादिकं कल्पनीयं तस्यपरमात्म-स्वभाविकधर्मत्वात् "स्वभावकीज्ञान वलक्रिया चे" त्यादि-श्रुयंतरात तत्राद्वैतमितिद्वितीयस्य परमेश्वरस्याभावेन स्वस-माभ्यधिकरहितत्वादुपपद्यते शिष्टंस्पष्टार्थंतदेवसर्वेश्वरत्वसर्व ज्ञत्वादिविशिष्टस्य परमात्मनोजीवविशेष्यरूपत्वात् जीवस्य-तुतत्प्रकारत्वेनतदभिन्न सत्ताकत्वादुभयोरीदृश मैक्यमत्वाह अहमेवेतिसंभाव्येति उक्तप्रकारेणाहमेवसः सोहंचेतिसंभाव्या त्मानंब्रह्मणैकीकूर्य्यादित्यन्वयः एतदेवस्फुटयति अहमोंतत्स-दित्यादिना तत्रचिदात्मक इतिसविग्रहस्यापि श्रीरामस्यचि-द्रूपत्वं ज्ञापयति अन्यच्चविशिष्टत्वेपि श्रीरामस्यचैतन्यप्राधा-न्येनविशेष्यत्वंद्योतयति परंज्योतीरसइति तुज्योतिषामपिप्रका-शत्वं स्वतेजसा सूर्य्यादिवत्सर्वव्यापकतया सर्वस्यसद्व्याप्य-त्वेन तदविनाभूतत्वात् तदपृथक् सत्ताकत्वंचवोधयतीति तदैक्योक्तौहेतुद्वयवोध्यं शेषसमानार्थं एतदेवासकृदावर्त्तनीयं मुपासकेनेत्याह ।

**सदारामोहमित्येतत्तत्वतःप्रवदंतिये ।**
**नतेसं सारिणोनूनं रामएवनसंशयः ॥१२॥**

इतिरामोहं उक्तरीत्यातदपृथक् सिद्धेस्तदधीनस्वरूप

स्थितिप्रवृत्तित्वात् सर्वप्रकारेणमच्छेषीश्रीरामः ममयोगक्षेमंक-
रिष्यतीति निर्भरत्वेननिर्भयोह मित्येतत्तत्वतःप्रवदंतिय इति
अजामेकामित्यादिश्रुतेः"स्वमूर्ज्योतिमयोनंतरूपीति सर्ववाच्य
स्यवाचकः विश्वव्यापीराघव" इत्यादिश्रुतेश्च चिदचितोरी-
श्वरस्यचनित्यत्वेनतद्व्याप्यत्वव्यापकत्वयोरपिनित्यत्वोपपत्तेस्त-
योस्तदविनाभूतत्वेन धर्म्मांतरवत्तद्धर्म्मत्वसिद्धेस्तत्प्रकारो
जीवः श्रीरामःसर्वप्रकारीतिनिश्चयात् गोत्वविशिष्टस्यैकगोशब्द
वोध्यत्ववत् प्रकारप्रकारिणोरेकशब्दत्वोपपत्ते रक्तोघटः घटो-
रक्तइतिवत् अहंरामःरामोहमितिपरस्परंव्यत्ययेन समानाधिक-
रणव्यपदेशस्यावाधितत्वं वोधितं तस्मात्तत्वतः येप्रवदंति
अनेकप्रकारशास्त्रार्थ दर्शनेपियेस्वसिद्धांतान्नप्रच्यवंतेइतिप्रश-
ब्दार्थः"नतेसंसारिणः"स्वात्मनिष्ठपरमात्मप्रकारत्वनिश्चयेसु-
तरांदेहादावहंताममताद्यभावाज्जीवं तोपितेमुक्तसमानाइत्यर्थः
देहांतेतुतेरामएव "अशनापिपासेशोकंमोहंजरामृत्युमत्येती"
तिश्रुतेः जन्ममृत्युजरादुःखैर्विमुक्तोमृतमश्नुते" इतिस्मृतेश्च
अशनापिपासाद्यतीतत्वेनतत्साधर्म्यंप्राप्यसाक्षात्तदैक्यानुपपत्तेः
तत्सायुज्यंप्राप्ताएव सायुज्यंनामसर्वदातदविनाभूतत्वेनानुसं-
धानात् स्वस्यदेहांतेतत्साधर्म्म्यप्राप्तिपूर्वकं तत्समानभोगवत्वं
सहयुनक्तीतिसयुकसयुजोभावः सायुज्यमितिनिरुक्तेः "यंयं-
चापिस्मरन्भावंत्यजत्यन्तेकलेवरं तंतमेवेतिकौंतेयसदातद्भाव-
भावित" इतिस्मृतेश्च "तदाविद्वान्पुण्यपापे विधूयनिरंजनः

परमंसाम्यमुपैतीतिसोऽश्नुतेसर्वान्कामान्सहब्रह्मणाविपश्चिता" भोगमात्रसाम्यलिङ्गाच्चेति" श्रुतिसूत्रेभ्यश्च अत्रनतेसंसारिणः रामएवेत्युभयोरन्यतरपदस्यतन्मुक्तिबोधकत्वेप्युभयपदोपादान्मुक्ताभिप्रायेणैवसंगच्छते अथवाप्रथमपदस्यमुक्तिविशेषाबोधकत्वेनतद्विशेषज्ञापनाय रामएवेत्युक्तं तन्निर्बाधत्वद्योतनाय नूनमेवेत्यवधारणद्वयोक्तिः यद्वानसंसारिणः रामएवेत्याभ्यांजीवतामपितेषां रामरूपत्वोक्त्या सर्वजनाश्रयणीयत्वंपूज्यत्वंप्रद्योत्यकैमुत्यन्यायेनदेहावसानेतेषां तत्सायुज्यमभिहितंअत्रसदारामोहमित्येतत्सर्वस्मिन्जगतिरामरूपत्वदर्शनस्योपलक्षणंसर्वंह्येतद्ब्रह्मेत्युपक्रमात् सदारामोहमित्युपसंहाराच्च यत्परंब्रह्मरामचन्द्र" इतिब्रह्मरामपदयोरेकार्थविधायकत्वश्रुतेः यथाघटश्चकलशएकार्थस्याभिधायकः तथाब्रह्म च रामश्चनूनमेकार्थवाचक" इतिस्मरणाच्च रामब्रह्मपदयोरेकार्थबोधकत्वनिश्चयात्तेन "भूमौजलेनभसिदेवनरासुरेषुभूतेषु देविसकलेषुचराचरेषु पश्यंतिशुद्धमनसाखलुरामरूपंरामस्यतेभुवितलेसमुपासकाश्चे" त्यादिस्मरणमुपपन्नतरंपुनश्च "देवोभूत्वादेवंयजेते" त्यनयोपासकस्योपास्यसादृश्यविधानात् श्रीरामोपासकानांतत्सादृश्यप्राप्तयेत्तदायुधादिधारणस्यावश्यकत्वोपपत्तेः "वामेकरेधनुः कुर्य्याद्दक्षिणेबाणमेवचेति नांकितोधनुर्बाणाभ्यां नमंत्रोक्तिषडक्षरः ननामरामसंबंधीनरामोपासकोभवेदित्यादीनिविधिनिषेधवचनान्यप्युपपन्नतराणि

कारिणोरेकशब्दवोध्यत्वेनाहंरामःरामोहमितिसामानाधिकरण्य व्यपदेशोपपत्तेः सदाश्रीरामशरीरत्वेन तद्विनाभूतत्वा तदपृथक्सत्ताकोहमिति दृढविश्वासवंतोजीवंतोपिभुक्ता इतिस्वयमेवोक्तवती "सदारामोहमित्येषाश्रुतिः उपसंहरति

**इत्युपनिषद्यएवं वेदसविमुक्तोभवतिस-विमुक्तोभवतीतियाज्ञवल्क्य इति ।**

इति तृतीयाकंडिका ।

इति उपनिषत्रहस्यं ज्ञानंब्रह्मविद्येत्यर्थः यः श्रीरामोपासकएवमुक्तप्रकारेण वेदजानाति समुख्योभवति त्रैलोक्य पूज्योभवति समुक्तोभवतीतिवापाठः इतियाज्ञवल्क्य एवंभरद्वाजंसमुपदिष्टवान याज्ञवल्क्यः ।

इति तृतीयाकंडिका ।

एवंप्रथमकंडिकायां वृहस्यतिप्रश्नोत्तरे यएतादितितारकंब्रह्मनिर्दिष्टं द्वितीयायांभरद्वाजप्रश्नोत्तरेणतारकस्यस्वरूपप्रदर्शनपूर्वकंतस्य सर्वोपास्यत्वं विहितं "एतदेवोपास्यमिति ज्ञेयमिति"त्यानया तृतीयायां आत्मस्वरूपानुसंधानपूर्वकंतारकोपासनार्थं आत्म परमात्मानोः प्रकारकारित्वेनस्वरूपा व स्थितिर्निदर्शिता तस्यात्मनः साक्षात्कारोपायवोधनाय चतुर्थ्यारभ्यते तत्रभरद्वाजायसर्वशास्त्रार्थभूतायां ब्रह्मविद्यायां

समर्पिताया मत्यौत्सुक्येनात्रिरात्म साक्षात्कारोपायंपृच्छति ।

**अथहैनमत्रिप्रपृच्छयाज्ञवल्यं यएषोनं-तोऽव्यक्तआत्मातंकथमहं विजानीयामिति ।**

इतिशब्दः प्रश्नार्थः अत्रपूर्वस्यांकंडिकायांसआत्मा-विज्ञेयइत्युक्तंसदोज्वलः अविद्यातत्कार्य्यहीनइत्यादि लक्ष-णैरात्मरूपेविज्ञापिते पुनः तंकथमहंविजानीयामितिप्रश्नः तत्साक्षात्कारोपायज्ञानार्थैवेत्यवगम्यते उत्तरमाहसहोवाचेति

**सहोवाचयाज्ञवल्क्यःसोऽविमुक्तउपास्यःयए-षोनन्तोऽव्यक्तआत्मासोविमुक्तेप्रतिष्ठितः॥ १॥**

सोऽविमुक्तउपास्यइतिसदोज्वलइत्यादिवाक्यैर्विज्ञापि-तेपिउपासनाविनाश्रंतः करणविशुद्धिपूर्वकंतत्साक्षात्कारा-भावात्तदर्थंमुपासनांविधत्ते "सोविमुक्तउपास्यइति" आत्मा-अविमुक्तंसंधितूरीयमितियावत्तास्मिन्नुपास्यउपासनीयः प्रदे-शांतरेसत्यप्यविमुक्तएवोपास्यइतिकोयंनियमइतिचेतत्राह "यएषोऽनंतोव्यक्तआत्मासोविमुक्तेप्रतिष्ठितइति" यइत्यादि-रुक्तस्यैवानुवादः अविमुक्तेसंधौप्रतिष्ठितः प्रतिष्ठावस्थान-मितिभावः अनेनोपासनासौलभ्येदर्शितेपि तत्रमनोनिरोधस्या तिदुःकरत्वेनद्रष्टुः साध्यमित्य पिबोध्यं सोविमुक्तशब्दवाच्यः किंस्थानकइतिपृच्छति

सोविमुक्तःकस्मिन्प्रतिष्ठितइति ॥
वरणायांनाश्यांचमध्येप्रतिष्ठितइति ॥२॥

उपास्यत्वेनोपदिष्टस्यात्मनः यत्रोपासनाविधीयतेसो-विमुक्तः कस्मिन्स्थानेप्रतिष्ठितइतिप्रश्नस्योत्तरमाहयाज्ञव-ल्क्यः वरणायांनाश्यांचमध्येप्रतिष्ठितइतिएतच्छ्रुत्वापुनरपि-पप्रच्छात्रिः

कांवैवरणाकाचनाशीति । सर्वानिन्द्रियकृतान्दोषान्वारयतीतितेनवरणाभव-तीति ॥ सर्वानिन्द्रियकृतान्पापान्नाश-यतीतितेननाशीभवतीति ॥३॥

पुनश्चसंदिहानः पप्रच्छहेभगवन्यात्त्वयोक्तावरणासा-कानाशीचकेतिश्रुत्वाहयाज्ञवल्क्यःसर्वान्चक्षुरादीन्द्रियकृता-न्स्वस्व विषयेच्छाप्रावरायरूपान् दोषान्वारयतीतिहेतोर्वरणा-भवतितथाविषयेच्छापारवश्येनाविहितरूपरसादिस्वस्वविषय-गृहणाद्भिरिंद्रियैः सम्पादितान्अविहिताचरणरूपान्पापान्-नाशयतीतितस्मादुच्यतेनाशीति२ तत्रापिपृच्छति

कतमंचास्यस्थानमिति

अस्यावरणेतिनाशीतिनिर्दिष्टस्यकतमं स्थानंभवतीतिप्रश्ने-उत्तरमाह

भ्रुवोर्घ्राणस्यचयःसंधिः सएषद्यौर्लो कस्यपरस्यचसंधिर्भवतीति एतद्वैसं धिंसंध्यांब्रह्मविदउपासतेइति ॥ सोविमु- क्तउपास्यइति सोविमुक्तंज्ञानमाचष्टे योवैएतदेवंवेदेति ॥४॥

भ्रुवोर्घ्राणस्यचयः संधिः सएषद्यौल्लोकस्यपरस्यचयः संधिः समस्तौकाश्यभिधेऽविमुक्ते उक्तंहिकाश्याविष्णुनाशा- रूपत्वंश्रीशिवेनरुद्रयामिलीये श्रीअयोध्यामाहात्म्ये " विष्णोः पादमवंतिकां नाशाग्रवारानशी " सत्वयापृष्टोअविमुक्तएष- संधिर्भवतीत्यन्वयः अविमुक्तशब्द संधिशब्दौपर्य्यायवाचि नौएतदेवोपासनास्थानमितिस्सदाचारेणदृढयति " एतद्वैसं- धिंसंध्यांब्रह्मविदः उपासतइतीति " एतदितिनपुंस्कत्वमार्षं एनांप्रसिद्धांसंधिंसंध्यांब्रह्मविदः उपासतेउपासनांकुर्वीति उपसं- हरति " सोऽविमुक्तउपास्यइतीति " तंकथमहंविजानीयामिति " यस्त्वयापृष्टः आत्मसाक्षात्कारोपायः सआत्माचअविमुक्ते भ्रुवोर्घ्राणस्यसंधौउपास्य अविमुक्ताधारकात्मोपासनलक्षणइ- त्यर्थः एवमुक्तोपासनयात्मानंसाक्षात्कृत्य तस्य श्रीरामविना- भूतत्वेनातप्रकारं श्रीराममेवसर्वप्रकारितयसर्वरूपंयः पश्यति सएवश्रीरामोपासकस्त्रैलोक्यगुरुर्भवतीति उपासनाफलमाह

"सोविमुक्तंज्ञानमाचष्टेयोवैएतदेवं वेदउपासकः वैनिश्चयेन एतत्उपासनं एवमुक्तप्रकारेणवेदजानाति सोऽविमुक्तं तुरीयाख्यंसंधिज्ञानं च सर्वत्ररामरूपत्वदर्शनलक्षणमाचष्टे कथयते शिक्षार्हस्यशिष्यस्यातिरहस्यत्वात्तत्क्षणमेवबोधमुत्पादयंतीत्यर्थः तदुक्तंगीतासु "उपदेक्ष्यन्तितेज्ञानं ज्ञानिनस्तत्त्वदर्शिन इतिभगवतापिज्ञानोपदेशे तत्वदर्शिनएवाधिकारत्वोक्तेः अत्रसर्वत्रेतिशब्दाः प्रश्नसमाप्तौ उत्तरसमाप्तौ च ज्ञातव्याः अस्योपायस्यैंद्रियसंयमाधीनत्वात् इन्द्रियसंयमांतः करणशुद्धयोश्चान्योऽन्यापेक्षत्वेन तस्यदुःसाध्यत्वं सर्वजीवासाधारणत्वं चमत्वापूर्वंबृहस्पतिनागुरुणापृष्टमप्यति करुणयासर्वजीवनिश्रेयसे "रुद्रस्तारकं ब्रह्मव्याचष्टेयेनासावमृतोभूत्वमोक्षीभवति" तंप्रत्युपदिष्टोपायमेवपुनरत्रिणाऽपृष्टमपिस्वयमेवपरमकारुणिकोभगवान्याज्ञवल्क्यः सर्वत्रसुलभत्वेनसर्वजीवसाधारणत्वेनसहायांतरनिरपेक्षत्वे नस्वानुष्ठाननिर्येक्षत्वेनप्रारब्धव्यतिरिक्तसर्वपापदाहकत्वेन सर्वफलप्रदातृत्वेन च तस्यसर्वोत्कृष्टत्वंस्वसम्मतत्वं चज्ञापयन्तंप्रत्युपदिदेशइत्याहश्रुतिः

# अथतं प्रत्युवाचस्वयमेवयाज्ञवल्क्यइति

अथतदनंतरंअत्रिप्रतिउवाचस्वयमेवयाज्ञवल्क्यः किमुवाचतदाह

श्रीरामस्यमनुंकाश्यांजजापवृषभध्वजः
मन्वन्तरसहस्रैस्तु जपहोमार्चनादिभिः॥५॥
ततः प्रसन्नोभगवान्श्रीरामःप्राहशंकरं।
वृणीष्वयदभीष्टं तद्दास्यामिपरमेश्वरेति॥६॥

अनयोरर्थः कियत्कालंकथंचजजापेत्यपेक्षायामाह मन्वंतरेतिअत्रमन्वन्तरसहस्रैस्तुजपहोमार्चनादिभिः प्रसन्नइत्यन्वयभेदात् जपशब्दस्यनिरुक्तिः आदिपदंवक्ष्यमानस्तुति मंत्रसंग्रहार्थं जपहोमादीनां श्रीरामप्रसन्नताहेतुत्वावगमात् मंत्राणामपितत्प्रसन्नताहेतुत्वेन पृच्छ्यमाणत्वात् "अथकैर्मंत्रैस्तुतः श्रीरामः प्रीतोभवतीति" अत्रतुकाशीमृतजीवमोक्षाय श्रीरामं प्रसादयितुं प्रवृत्तस्यसर्वज्ञस्य शिवस्य सत्स्वपिभगवन्मंत्रांतरेषु अस्मिन्नेवाग्रहातिसयोऽस्यमंत्रस्य सर्वोत्कृष्टत्वंद्योतयतीति पुनः शिवस्यप्रतिदिनंकाशीमृतानेक जीवमोक्षकामनामहत्वं मन्वन्तरसहस्रपर्य्यंत भगवत्प्रसादविलंबकारणोचेति पुनः तावत्कालपर्य्यंतंतन्मंत्रजपोपितत्प्रसन्नतार्थः न तुमंत्रसिद्ध्यर्थः "त्वत्तोवाब्राह्मणोवापियेलभंतेषडक्षरमि"त्यत्राश्रुतमंत्रानुष्ठानस्यापिब्रह्मणउपदेशेन मोक्षश्रवणादितिबोद्धव्यमस्तिश्रीरामः जगदानंदप्रदः "नमोस्तुरामदेवायजगदानंदरूपिणे" इत्युक्तेः शंकरंसर्वजीवमंगलकरत्वेपि विशेषतः स्वक्षेत्रमृतजीवमोक्षा-

पायेतत्परं दास्यामिपरमेश्वरेति श्रुत्यापरमेश्वरेस्याप्यभीष्टदा-त्रृत्वेनश्रीरामस्य " तंदेवतानांपरमं च दैवतंतमीश्वराणांपरमं महेश्वरमि"त्यादि श्रुतिविषयत्वंस्फुटीकृतं ।

सहोवाचमणिकर्ण्यांवामत्क्षेत्रेगंगायां-वातटेपुनः म्रियतेदेहीतज्यंतोर्मुक्तिंनातोवरां-तरमिति ॥ ७ ॥

अत्रमणिकर्णिगंगातटयोःक्षेत्रांतर्गत्वान्मत्क्षेत्रेइत्युक्त्यै-वसर्वलाभात् तस्मात्तयोः पृथगुक्त्यावाशब्दद्वयोपादानाच्चेद-मवगम्यतेवदान्यात् कृपणइवमुक्ति मतिदुर्लभंमत्वाउक्तस्थले प्यन्यत्रवायत्रतवेच्छाभवेत्तत्रमृतस्यजंतोर्मुक्तिंदेहीति प्रार्थित-वानितिसचासौजंतुश्च तज्जंतुः तस्यतज्जंतोः उत्कृष्टअन्यतर-स्थानेपिमृतस्यमुक्तिदानेसंदिहानआह नातोवरांतरमितिएत-स्यातिदुर्लभत्वादेनंविहाय वरांतरंवृणीष्वेत्युक्तवरांतरंनदेही अस्यैवमदभीष्टत्वादितिभावः श्रीरामस्तु स्वशेषक्षेत्रमृतजंतुमु-क्तिकामोयं संकोचान्नतथा प्रार्थितवानितितदाभिप्रायंज्ञात्वा तिवदान्यत्वात् सत्यप्रतिज्ञत्वाच्च स्वप्रतिज्ञातंतदभीष्टमेवदत्त-वानित्याहश्रुतिः अथेत्यादिना ।

अथसहोवाचश्रीरामः क्षेत्रेस्मिन्तव-देवेशयत्रकुत्रापिवामृताः । कृमिकीटादयोप्या-

ऽशुमुक्तासंतुनचान्यथा ॥ ८ ॥

यत्रकुत्रापीति शुद्धाशुद्धस्थानयोरपीत्यर्थः यदि तु मत्क्षेत्रेम-णिकर्ण्यांगंगातटे चेतिस्थानद्वयमृतस्यजंतोर्मुक्तिं देहीत्येवम-न्वयंतदामणिकर्णीगंगातटेचेतिस्थानद्वयमरणेन किमाधिक्यं अत्रकुत्रापिसमानविशेषस्थलेपिमृतामुक्ताःसंत्वित्येवंयोज्यंयदित त्क्षेत्रान्मणिकर्ण्यांगंगायांचतत्तीरस्य चपृथङ्मत्वास्थानचतुष्ट-येपिमृतस्यमुक्तिर्याचितेत्युच्यतेतदातवक्षेत्रेमृतायत्रकुत्रापिवामृ तामुक्ताः संत्वित्येवंयोज्यं अस्मिन्पक्षेक्षेत्रापदस्यस्पष्टत्वात् यत्र-कुत्रापीतिपदेमणिकर्णीगंगातत्तटानांसूचकेइतिवोध्यं अत्रो-क्तपक्षेषुयत्रस्वरसोभवेत्सएवांगीकार्य्यः वस्तुतस्तुशिवोक्तस्य-स्वक्षेत्रेमृतमुक्तिप्रार्थनावाक्यस्यक्षेत्रैकदेशेमृतजंतुमुक्तिप्रार्थना-वोधकत्वे क्षेत्रसर्वदेशमृजंतुमुक्तिप्रार्थनावोधकत्वे वानकाचि-द्धानिर्नलाभाधिक्यंवा श्रीरामदत्तवरवोधकत्वेक्षेत्रसर्वदेश-मृतजंतुमुक्तिप्रार्थनावोधकत्वे वानकाचिद्धानिर्नलभाधिक्यंवा श्रीरामदत्तवरवोधकवाक्यस्य स्फुटमशेषक्षेत्रमृतजंतुमुक्तिवो-धकत्वेनशिवाभीष्टसिद्धेः कृमिकीटादयोपीतिआदिशब्दः कीटादपिनिकृष्टजंतुमात्रसंग्रहार्थः अपिशब्दस्तुकैमुत्यन्यायेन-क्रिमेरुत्तरोत्तरोत्कृष्टजंतुसूचकः आशिवतिपदंतु मुक्तेर्देहत्याग-समकालोपदिष्टमंत्राव्यवधानकालंसूचयन् महत्पापानामपि-क्षणमात्रभोगेन क्षयंद्योतयति नचान्यथावहुपापानुरूप-

वहुकालतत्फलभोगानंतरं नमुक्ताः संत्वित्यर्थः यद्वा-नचान्यथामद्वचनमिति "रामोद्विर्नाभिभाषते" इतिस्मरणात् यद्वानचान्यथासंत्वित्वन्वयः नचस्वकृतपापपुण्यानुसारेण पुनर्नीचोत्तमयोनिषूत्पद्यंतामित्यर्थः अत्रमुक्ताःसंत्वितियतः सामान्यतउक्तं तस्यविशेषोक्त्यर्थमग्रतनशास्त्रप्रवृत्तिर्बोध्या श्रीरामेणवृणीष्व यदभीष्टमित्येतावन्मात्रंनोक्तंकिंतु तदास्यामीतिप्रतिज्ञातं तथाशंकरेणापिमत्क्षेत्रे मृतस्यजंतोर्मुक्तिःस्यादित्येवंनोक्तं किंतुतस्यमुक्तिदेहीत्येवप्रार्थितं तद्वेवश्रीरामःस्वस्य-तादृशजंतुमुक्तिदातृत्वमंगीकृत्य तद्घटनायस्वस्य तदातत्-क्षेत्रेस्थितमाह अविमुक्तइति।

**अविमुक्तेतवक्षेत्रेसर्वेषांमुक्तिसिद्धये।**
**अहंसन्निहितस्तत्रपाषाणप्रतिमादिषु॥९॥**

सर्वेषांअविचारिताधिकारानधिकाराणामपीत्यर्थः अह सन्निहितस्तत्रेत्येतावन्मात्रोक्तौ कुत्रसन्निहित इत्यपेक्षा-यामाह पाषाणप्रतिमादिष्विति आशुमुक्तासंत्विति यदुक्तं तत्रदेशांतरकृतपापस्याविमुक्तदर्शनमात्रेणविनाशेपि अत्रकृ-तपापानांवज्रलेपतयावहुकाल भोगेनापि विनाशासंभवात्-कथमाशुमुक्तिवचनोपपत्तिरितिसंदिहानंप्रतितथास्वक्षेत्रनिवा सिनांदुःखविमोक्षाय मयैतत्परिश्रमेण श्रीरामंप्रसाद्यतस्मा-त्तादृशेवरेलब्धेपि क्षेत्रकृतपापनैमितिकप्रासातिदुःसहना नाया

तनानांदुःखं तदवस्थमेवेतिशोचंतं प्रतिज्ञाहक्षेत्रेस्मिन्निति ।

क्षेत्रेऽस्मिन्योर्चयेद्भक्त्या मंत्रेणानेनमांशिव
ब्रह्महत्यादिपापेभ्योमोक्षयिष्यामिमाशुचः १०

यः कश्चिदविमुक्तकृतपापः मदीयमंत्रेणप्रतिमादिपु-मामर्चयेत केवलेनमंत्रजपेनैववार्चयेतुस्तवै रेचैन्नरः सदेति-मंत्रपाठात्मकार्च्चनस्यापिस्मरणात तंब्रह्महत्यादिभ्यः सर्वेभ्यः पापेभ्य.मोक्षयिष्यामित्वंमाशुचः क्षेत्रकृतपापानां मर्दच-नान्निवृत्तेर्निमित्ताभावान्नदेहांतेउक्तदुःखप्राप्तिः वाधकाभावा-च्चाशुमुक्तिरिति निमित्ताभावाद्वृथाशोकमाकार्षीरित्यर्थः का-शीकृतपापप्रायश्चित्ताभिप्रायकमिदंवाक्यं माशुचइत्युक्तेर-न्यथानुपपद्यमानत्वात "यएतत्तारकंब्राह्मणोनित्यमधीतेसपा-प्मानंतरति " जन्मांतरदेशांतरकृतब्रह्महत्यादिपापनिवृत्यु पा-य वोधकश्रुत्यंतरस्यसत्वाच्च इदानींशिवस्यस्वक्षेत्रनिवासिनां स्वीयत्वेन तन्मुक्तयेइत्थमाग्रहंदृष्ट्वा स्वस्याशेषजीवस्वामि-त्वात् सर्वदेशसर्वकालमृतानामपिस्वप्राप्तये ब्रह्मादिशिवादिशं प्रदायद्वयंप्रवर्त्तयामासेत्याह त्वतोवेत्ति

त्वतोवाब्रह्मणोवापियेलभंते षडक्षरं
जीवन्तोमंत्रसिद्धास्युरंतेमांप्राप्नुवंतिते ११

स्पष्टोर्थः नचेदानींतनानांसाक्षाद्ब्रह्मरुद्राभ्यांषडक्षरला-

भातभावात्कथंतन्प्राप्तिरितिवाच्यं अद्यापितेषांपरंपरासंबंधेन-तदुपदेशसत्वात्इदानीं "आशुमुक्ताः संत्विति" सामान्यतः उक्तस्योपायविशेषमुपदिशतिमुमुर्षोरिति

## मुमूर्षोर्दक्षिणेकर्णेयस्यकस्यापिवास्वयं उपदेक्ष्यसितन्मंत्रसमुक्तोभविताशिव १२

अत्रसत्स्वप्यन्येषुमोक्षसाधनेषु ज्ञानभक्त्यादिषुषडक्षरस्यातिसुकरत्वात्साधनांतरनिरपेक्षत्वात्उच्चारणमात्रसापेक्षत्वात् स्वसाध्याव्यभिचारित्वाच्च सर्वजीवाधिकारत्वाच्च अनुष्ठानानपेक्षत्वाच्च तदुपदेशेनैवसर्वजीवमुक्तिर्नान्यथेतिमत्वायस्यकस्यापिउपदेक्ष्यसिमन्मंत्रसमुक्तोभविताशिवेत्याज्ञापितं समुक्तोभवितामांप्राप्स्यतीत्यर्थः त्वत्तोयेषडक्षरंलभंतेमांप्राप्नुवंतीत्यनंतरोक्तेः अत्राविमुक्तनिवासिनामकृतपापानांमुक्तोपायेनविनाशितपापानांचप्राणोत्क्रमणकालीनरुद्रोपदिष्टषडक्षरश्रवणसमकालेमुक्तिः अकृतप्रायश्चित्तानांतुपुराणादौत्रिंशतसहस्रसंख्याकंकालंकालभैरघकृतनानायातनाविशुद्धयनंतरंरुद्रोपदेशान्मुक्तिः श्रूयते ताः यातनाअपिस्वप्नादिदुःखभोगदृष्टांतेन प्राणोत्क्रमणकालेजीवतो रुद्रकंठस्यैवोपपद्यतेनतुदेहत्यागानंतरं "अत्रहिजंतोःप्राणेषूत्क्रममाणेषुरुद्रस्तारकं ब्रह्मव्याचष्ट" इतिप्राणोत्क्रमणरुद्रोपदेशयोः समानकालत्वज्ञापनात् सपापिनिः पापभेदेनोपदेशविशेषस्याश्रवणाच्च किंचतादृश्यः पुरा-

णाद्युक्तःयोपिशास्त्रमर्थ्यादार्थं वात्रअविमुक्तकृतपापानांदेशांतर-
वासिनां नानानरकभोगनिवृत्यर्थं वाअविमुक्तकृतयथेष्टपापा-
नांनिंदयादेशांतरवासिनां नानानरकभोगनिवृत्यर्थंवा अभि-
प्रायांतरेणवोपपद्यंते अन्यथाअतिदयालो. शिवस्यस्वक्षेत्रनि-
वासिनां सार्वदिकदुःखनिवृत्यर्थमेतावतापरिश्रमेण श्रीरामंप्र-
साद्यतस्मात्तन्मुक्तियाचनंकथमुपपद्येत रुद्रोपितत्सार्वदिक-
दुःखनिवृत्तिरूपस्य स्वसाध्यस्यैकदेशविघातंकथंकारयेत नहि-
कश्चिदनुन्मतः सतिसामर्थ्येस्वकिंकरेणस्वसाध्यंविघातयतिप-
श्यतिवाऽन्यथाकृतंतद्विघातंस्वशरणागतदुःखात्मकं कारुणी-
कंकार्यं नापिप्रसादितस्वस्वामिशिवादन्योपि कश्चित्ता-
दधिको जगदीश्वरोस्तियद्भयात्तादृश्य स्तद्यातनाः
कारयेतपश्येच्च नापिषडक्षरोपदेशान तरकिंचित्पापमवशि-
ष्यतेयन्निवृत्यर्थ तयापियातना वचनमुपपद्येत न चनषडक्षर
स्याशेषपापविनाशकत्वमपिनोपपन्नंकुतोन्यदुपपद्येतेतिवाच्यंदेह
त्यागसमकालषडक्षरोपदेशसमकालतन्मुक्ति श्रवणस्यान्यथा
नुपपत्त्याजीवंतंप्रत्यपितदुपदेशस्य भोगैकविनाश्य प्रारब्धकर्म्म
व्यतिरिक्ताशेषपूर्वकत्वावगमात् " दैनंदिनं च दुःकृत्यंपक्ष-
मासर्त्तुवर्षजं सर्वंहरति निःशेषंतूलाचलमिवानलः। ब्रह्महत्या
सहस्राणि ज्ञानाज्ञानकृतानिच स्वर्णस्तेयसुरापानगुरुतल्पा-
युतानिच। कोटिकोटिसहस्राणिह्युपपातकजान्यपि सर्वाण्यपि
प्रणश्यंति राममंत्रानुकीर्त्तनात्। मानसं वाचकं पापंकर्म्मणा-

समुपार्जितं श्रीरामस्मरणादेवतत्क्षणान्नश्यतिध्रुवं। प्राणप्रयान-समयेयस्तुनामसकृत्स्मरेत् सभित्वामंडलंभानोपरंपदमवाप्नुयादि" त्यादिपुराणादिवचनानामुक्तार्थ प्रकाशकत्वाच्च किंवहुना देहांतेषडक्षरोपदेशोप्यन्यथानुपपद्यमानो याचनाता-दर्थ्यवैयर्थ्यं सूचयतितदाप्रारव्धकर्म्मविमुक्तस्ययाचनाविनष्ट-पापांतरस्य स्वतोमोक्षोपपत्तेः षडक्षरोपदेशेनाप्यशेषपापविनाशनात् तस्य स्वतोमोक्षोपपत्तेश्चोभयोः समानकालीनत्वविरोधात् श्रुतौस्फुटंषडक्षरोपदेशश्रवणात् यातनाशब्दस्याश्रवणाच्च अविमुक्तकृतपापविशुद्ध्यर्थं यातनाषडक्षरोपदेशस्तुसंचितपा-पविनाशार्थं इत्यपि नोपपद्यते "योविमुक्तंपश्यति सजन्मांत-रितान्दोषान्विनाशयती" त्यत्राविमुक्तदर्शनमात्रेणसंचित-पापविनाशश्रवणात्प्रशंसामात्रंतदितिचेत्तर्ह्यशेषाघविनाशक-स्यतस्यामुक्ताघविनाशनेकोऽतिप्रयासःषडक्षरस्तदघव्यतिरिक्ता घनाशकइतिनियमोपिनोपपद्यते "ब्रह्महत्यादिपापेभ्यो मोक्षयि-ष्यामिमाशुचः" इत्यत्रतस्यतदघविनाशकत्वश्रुतेः यातनावै-यर्थ्यंतादवस्थंतदनंगीकारेतु पुराणोक्ताभियातनाभिरविमुक्ता कृताघविनाशतयातनांतरैः संचितपापविनाशस्यसंभवात् देहां-तकालेषडक्षरोपदेशोनिरर्थकः ननुयातनाभिःपापस्थूलांशस्य-विनाशोनतुतत्सूक्ष्मांशस्यतदुक्तं " भागवतेन- निष्कृतै रुदितैर्ब्रह्मवादिभि " स्तथानशुध्यत्यघवान् ब्रतादिभि र्यथाहरेर्नामपदैरुदाहृतै यथोत्तमश्लोकगुणानुवर्णनमित्युक्तेः "

व्रतादिभिः पापसूक्ष्मांशविनाशानुपपत्तेः स्वर्गिनांनरकिनां च पूर्वजन्मकृतकर्म्मानुशेषोत्तर जन्मश्रवणस्यान्यथा नुपपद्यमानस्य दुःखभोगादपियातनयासूक्ष्मांश नाशाभावस्य सूचकत्वाच्चतस्यसूक्ष्मांशस्यविनाशाय षडक्षरोपदेशइतिचेत् एतदपिनोपपद्यते स्थूलांशविनाशकसूक्ष्मांशविनाशको पापद्वयस्वीकारगौरवापेक्षया उभयविनाशकैकोपायस्वीकारस्यलाघवात् सत्येकस्मिनुपायोभयांशविनाशकेउपायेसुकरे तदर्द्धांशविनाशाय दुःखदोपायांतरस्वीकर्त्तुरतत्वापत्तेश्च नापियातनासहकृतः षडक्षरोपिसूक्ष्मांशनाशको न तुएकाकीतस्मान्न वैयर्थ्यंयातनानामितिवाच्यं " येनामृतीभूत्वामोक्षीभवती " त्यत्रतस्याशेषाघविनाशकत्वावगमात तत्रामृतीभूत्वा अमरणधर्म्मासइत्यमरणधर्म्मताया अशेषपुण्यपापरहितस्यैवोपपद्यमानत्वात् "यएतत्तारकंब्राह्मणोनित्यमधीतेसपाप्मानंतरतिसमृत्युंतरती " त्यत्रापितथैवश्रवणाच्च"जन्मजरामरणसंसारमहद्भयात्संतारयतीतियस्मादेवंतस्मादुच्यतेतारकमिति " तारकवचनश्रुतेश्च षडक्षरोवन्हिपूर्वस्तारकस्त्वभिधीयते महापातकिनांपापदहने दहनोपम " इति ब्रह्मसंहितोक्तेश्च षडक्षरस्याशेषाघविनाशकत्वोपपत्तेः तस्मान्नाविमुक्तकृतपापविनाशाययातनावचनमुपपद्यते कथंचित्तस्यतथोपपद्यमानत्वेपियातनानां मुक्तिपर्य्यंतार्थसाधनासामर्थ्यातपापसूक्ष्मांश नाशकत्वानुपपत्तेश्च तदर्थं षडक्षरोपदेशस्वीकारस्यावश्यकत्वात् वरंसाधनद्वयांगीकारात्

सर्वार्थसाधनेएकस्यस्वीकरणं किंचकस्यचिद्भयादपिरुद्रस्यतद्दं-
डकरणंनावश्यकंस्वेच्छयातुस्वशरणागतदुःखदर्शनंनो चित
मितिवैषम्य निवृत्त्यर्थं तदितिचेन्ननदे शांतरीयपापीजीव
दंडकरणवत् स्वत्तोत्रनिवासिपापीदंडकरणे न वैषम्यापत्तिः
परमेश्वरस्य कल्पतरोरिवस्वशरणागत मात्राभीष्टकरणेपि
न वैषम्यापत्तिः अतएव श्रूयते श्रीरामचन्द्रस्य यातनां
विनैवायोध्यावासिनां सर्वेषांस्थावर जंगमानांस्वपरधामप्रापक
त्वं "विश्वव्यापीराघवो यस्तदानीमंतर्दधे शंखचक्रेगदाब्जेधृ-
त्वारमासहितः संवृतश्चसपत्तनः सानुजः सर्वलोकी तद्भक्ता
येलब्धकामांश्चभुक्त्वातथापदंपरमंयांतितेचेति अत्रदृष्टांता-
र्थकंतथापदं अंतर्दधे इत्यस्यपरमंपदं जगामेत्यर्थकत्वंसूच-
यतितारकोपदेशानंतरं तुनयातनावचनावकाशः अन्यथाउपदे-
शस्यवैयर्थ्यापपत्तेः तदुपदेशसमकाला शेषपापविनाशबोधक-
वाक्यसमूहविरोधाच्च नाप्यस्यामुपनिषदिकुत्रचिद्यातनानांना-
मापिश्रूयतेप्रत्युत "आशुमुक्ताःसंतु उपदेक्ष्यसिमन्मंत्रंसमुक्तो-
भविताशिवेति" तदुपदेशानंतरंमुक्तिःश्रूयते तस्मात् पुराणादि
श्रुतयातनावचनं पूर्वोक्ताभिप्रायकं नत्वविमुक्तकृतपापविनाश
कत्वाभिप्रायकं तारकोपदेशेनैवाशेषाघविनाशपूर्वकं मुक्ति-
सिद्धेः अथवा "वेदार्थादधिकंमन्ये पुराणार्थंचपार्वतिवेदेयन्नि
हितंदेविपुराणेतत्प्रतिष्ठितं। पुराणमन्यथाकृत्वातिर्यग्ज्योनिम-
वाप्नुयात् शुशांतोपिसुदांतोपिनगतिं प्राप्नुयात् क्वचिदि"त्य-

म्निपुराणवचनात् वेदार्थोपिबृंहणरूपतया पुराणवाक्यान्यव-
श्यंमान्यानि तेनभवंतुयातनावाक्या निश्चविमुक्तकृतपापप्रा-
णिविषयाणि ननुवेदेतद्विषयकयातनाश्रवणात् वेदविरुद्धेना
प्रामाण्यात्पुराणवाक्यान्यनंगीकर्तव्यानि वेदार्थप्रकाशकाना-
मेववाक्यांतराणांप्रमाणत्व स्वीकारादितिचेन्न प्रत्यक्षाश्रुत्यर्था
प्रकाशकत्वानियानिवेदार्थ विरुद्धानिवाक्यानि तेषामपितदनु
मितश्रुत्यमूलकत्वेनप्रमाणत्वानंगीकारात् प्रकृतेतुनवेदविरुद्धा
निप्रत्युतत्तत्रापिगतिसूचकत्वेन तदनुकूलानि वेदेपियद्यपि
तद्विषयाःयातनाः स्फुटंनश्रूयंतेतथापि तत्रतात्र्यर्थादुपलभ्यंते
तथाहि "क्षेत्रेस्मिनयोर्चयेभक्त्यामंत्रेणानेन मांशिव ब्रह्म-
हत्यादिपापेभ्योमोक्षायिष्यामिमाशुचः" इत्यत्रमाशुचइतिपद
मन्यथानुपपद्यमानमवि मुक्तकृतपापप्राणिविषययातनाःसूच-
यति तत्रतद्व्यतिरिक्तशिवशोकहेतोरनुपलंभात् तद्विमोक्षा
राएवब्रह्महत्यादिपापनिवर्त्तकोपायविधानाच्चतथाच वेदगूढार्थ-
प्रकाशकत्वेननतेषांपुराणवचसां स्वार्थेप्रमाणयात् भवंतुतदु-
क्तानानायतनास्तद्विषयाःकृतघ्नाः येचस्वसार्वादिकदुःखनिवृ-
त्यर्थंकृतैतत्परिश्रमंशिवं तदर्थेचपाषाणप्रतिमादिषुसन्निहितं
तत्स्वामिनंश्रीरामचन्द्रं तद्भक्तान्वानभजंते प्रत्युतअवजानं
तिदुर्वचोभिर्दुराचरणैश्च परंतुसश्रुतोपिनानायातनाभोगः
मुमुर्षोर्वक्तुमशक्यः सचप्राणोत्क्रमणकालेजीवतएवोपपद्यते
जंतोः प्राणेषूत्क्रममाणेषुरुद्रस्तारकंब्रह्मव्याचष्टे" इतिश्रुत्यनु-

रोधात् नतदेहत्यागानांतरंसउपपद्यते उक्ताश्रुतिविरोधात् अशेष पापविनाशकस्यतारकस्योप देशसमकाल एव यातनाहेतोः पापस्यापिविनाशोपपत्तेः "तस्यश्रवणमात्रेण सर्वएवतिवंगता" इतितच्छ्रवणकालेभगवत्पदप्राप्तिस्मरणाच्चतत्रत्रिंशत्सहस्र संख्याककालीननानायातनाभोगवचनं तुस्वप्नमनोरथमार्कंडयेप्रलयप्रदर्शनादि दृष्टांतेनाल्पकालेवहुकालभोगप्रतीत्यभिप्रायकमितिमंतव्यं नतुतथाश्रुतं उक्तश्रुतिस्मृत्यादिविरोधात् कालांतरयातनावचनानिजन्मांतरप्राप्तिविषयकवचनानितु श्रुतिस्मृत्यनुकूल्यायभयप्रदर्शनपरत्वेन नेतव्यानि प्राणोपूत्क्रममाणेष्वित्यत्रवाभूतार्थेवर्त्तमाननिर्देशास्वीकारेणदेहत्यागोत्तरकालेरुद्रोपदेशोऽगीकार्य्यः तथाचनिः पापानां देहत्यागसमकालेतदुपदेशेनमुक्तिः इतरेषांतुयातनाभोगानंतरं तदुपदेशेनेतिदेहत्यागोत्तरकालत्वावछिन्नस्योभयत्रासत्वादेवंवाश्रुत्यर्थः पुराणवचनानुसारेणकल्पनीयः "अ= द्यापिरुद्रकाश्यांतुसर्वेषांत्यक्तदेहिनां दिशत्येतन्महामंत्रंतारक ब्रह्मनामकं तस्यश्रवणमात्रेणसर्वएवदिवंगता इत्यत्रदेहत्यागोत्तरकालेमंत्रोपदेशस्मरणाच्च परंत्वयंपक्षः "प्राणोपूत्क्रममाणेपु तारकंव्याचष्ट" इत्युभयत्रवर्त्तमानकालनिर्देशेनप्राणोत्क्रमणतारकोपदेशयोः समकालत्वसूचकायाःश्रुतेः प्रतिकूलःइत्यत्र गम्यते प्रथमपक्षेत्यक्तदेहानांस्मृतिवचनंतु अत्रप्राणोत्क्रमण कालंविहाय तत्रप्राणोत्क्रमणकाले तदुपदेशासंभवाच्च पुन—

रत्रप्राप्तजन्मनः प्राणोत्क्रमणकालेतदुपदेशइतिबहुकल्पनापेक्षां
उक्तश्रुत्यंतरविरुद्धंचतस्मादविमुक्तमृतानांदेशांतरजन्मश्रवण-
मविमुक्तमहत्वबाधकंश्रुतिविरुद्धंवामत्वातद्देहस्ययातना देहत्व-
कल्पनादपिवरं श्रुत्यनुरोधेनताद्दशवाक्याभयप्रदर्शनपरत्वकल्पनं
तद्देहस्ययातनारूपत्वकल्पनेपि देहत्यागमंत्रोपदेशयोर्बहुकाल-
व्यवधानेनतयोः समकालत्वसूचकश्रुतिविरुद्धस्य तादवस्थ्यात्
एवंमुमुर्षोः प्राणोतक्रमणसमकालतारकोपदेशान्मुक्तिरित्येतद-
थपरश्रुत्यनुरोधेनाप्यूहमित्यलमति विस्तरेणाअत्रषडक्षरोपदेश-
श्रवणांतत्पाठश्चाशेषाघविनाशकश्चेत्तदातदुपदेशादि सम-
कालएवदेहपातोज्ञानोत्पत्तिपूर्वकं स्वरूपस्यसाक्षात्करश्चकुतो-
नस्यात् कथंवादेहत्यागसमकालेतदुपदेशात्तत्स्मरणाद्वाअत्र-
हिजंतोः प्राणेषूत्क्रमाणेष्विविश्रौतंप्राणप्रयानसमयेस्तुनामस-
कृत्स्मरेत्सभित्वामंडलंभानोःपरंपदमवाप्नुयादितिस्मार्त्तंचमुक्ति
श्रवणमुपपद्यते इतिप्रश्नस्याद्यापिकेनाप्यदत्तोत्तरस्य उपायां-
तराविनाश्यस्य भोगैकनाश्यस्यप्रारब्धकर्म्मणोऽवशेषान्नतदुप-
देशसमकालेदेहपातः प्रारब्धकर्म्मभोगावसानकारितदेहत्याग-
समकाले एवमोक्षहेतुरुद्रकृततारकोपदेशनियमोऽन्यथानुपप-
द्यमानः कालांतरेस्वोपदेशसमकालसंचिताघनाशप्रारब्धा-
घविनाशौसूचयति उत्तरपुण्यपापयोरवशिष्टप्रारब्धकर्म्मा-
जन्यत्वमवगम्यते तस्मात्तदुपदेशोत्तरक्षणोज्ञानावरकसूक्ष्मा-
घोत्पत्त्युपपत्तेर्नतदास्वरूपसाक्षात्कारलक्षणामुक्तिरुपपद्यते त-

त्कालीनां तराधजनकतत्प्रारब्धकर्म्मभोगावसानकारिततदेह-
त्यागसमकाले तारकोपदेशश्रवणात्पाठतत्स्मरणाद्यन्यतर-
मात्रेणसवासनस्यपूर्वाघस्यविनाशात् हेत्वभावेनचोत्तराघानु-
पपत्तेरावरकाभावात्स्वरूपसाक्षात्कारस्तदनंतरं श्रीरामप्राप्ति-
रित्युत्तरमस्माभिर्दत्तं श्रुतिस्मृत्यनुसारात् किंचाविमुक्तमृत-
जीवमुक्तिबोधकं श्रुतिवाक्यंदेशांतरेपितारकोच्चारणपूर्वकं
मृतानामुक्तेरुपलक्षणां " रामेतिद्व्यक्षरोमंत्रोमरणो यस्तुसं-
स्मरेत् नरोनलिप्यतेपापैः पद्मपत्रमिवांभसे " त्यादि-
प्रमाणसद्भावात्अंतकालेस्मरणंतुपूर्ववृत्यधीनमित्युक्तंगीतासु
"सदातद्भावभावित" इतितस्माद्देशांतरस्थैरपि मुमुक्षुभिर्नि-
त्यंतारकजपपरेणभवितव्यं तथाचनित्यमधीतस्य तारकस्यांत
कालेपिस्मृत्युपपत्तेः सदातत्स्मर्त्तुरशेषपाप विनाशपूर्वकंनि-
र्विवादोमोक्षः तथैवश्रूयतेच "यएतत्तारकंब्राह्मणोनित्यमधीते
समाप्यानंतरतिसमृत्युंतरति भ्रूणहत्यांतरति सर्वहत्यांतरति
सवीरहत्यांतरति ससंसारंतरति ससर्वंतरति सोऽविमुक्ताश्रितो
भवति समहान्भवति सोमृतत्वंचगच्छतीति" यद्येवंतर्हिकाशी
मृतानामेभ्यः कोविशेषइतिचेत् सदातारकजपरहितस्यतत्राप्य
नधिकारिणः कृम्यादेरपिकाशीमरणान्मुक्तिः नेदृशस्यदेशांतर
मृतस्येतिब्रूमः काशीकृतपापानांतारकानुष्ठानरहितानां यातना
श्रवणाद्देशांतरस्थानां तारकावलंविनांकृतपापानामपि तारक-
जपेनैवतद्विनाशश्रुतेः यातनाऽश्रवणाच्च उभयेषामपिविशेषो-

द्रष्टव्यः तथाच निःपापानामुभयत्र फलसाम्येपि कृतपापानां फलवैषम्यं काशीवासादपि तारकाश्रयस्याधिक्यं द्योतयति न च तदाश्रयानंतरमपि फलवैषम्यमितिवाच्यं अविमुक्तकृत-पापानां यातनाभोगानन्तरं तारकोपदेशेनैवमोक्ष श्रवणात् तस्माद्यत्रकुत्रापिवशतो नित्यं तारकजपपरस्योपायान्तरशून्यस्य यस्यकस्ययथातथावर्त्तमानस्यापि प्रारब्धकर्म्मावसाने ऽशेषाघ विनाशपूर्वकं निर्विवादोमोक्षः इतितारकस्य साधनांतर सहा-यांतर निर्पेक्षत्वात् सुकरोपायत्वाच्च स्वतः सिद्धत्वेनानुष्ठाना-नपेक्षत्वाच्च स्वसाध्याव्यभिचारित्वादशेषफलप्रदत्वाच्चोपायां तरेभ्यउत्कृष्टत्वमशेषपापविनाशपूर्वकमोक्षप्रदत्वंचेति निर्वाधं निष्पद्यते "ब्रह्मादीनां वाचकोयं सर्ववाच्यस्य वाचकः" अत्रहिजन्तोःप्राणेषूत्क्रममाणेषुरुद्रस्तारकंब्रह्मव्याचष्टे इत्योमि-ति एतदेवोपास्यमिति ज्ञेयमिति चयएतत्तारकं ब्राह्मणोनित्य मधीत" इत्यादिश्रुतिभ्यः "विष्णोर्नाम्नांसहस्राणां तुल्य एष महामनुः अनन्ताभगवन्मन्त्रानानेन तु समाः कृता" इत्या-दिहारीतस्मृतेः "वहुधारामसन्त्रोयं संस्कारान्नैववांछति रसना स्पृक् फलत्येववह्निरसंस्कृतोयथा सर्वेषुमन्त्रवर्गेषुश्रेष्ठंवैष्णव मुच्यते गाणपत्येषुशैवेषुशाक्तशौरेष्वभीष्टदं। वैष्णवेष्वपिमन्त्रेषु राममन्त्राः फलाः धिकाः विनैवदीक्षांराजेन्द्रपुरश्चर्य्यांविनैवहि विनैवन्यासविधिनाजपमात्रेणसिद्धिदाःमंत्रस्तेष्वप्यनायासफल दोयंषडक्षरः। षडक्षरोयं मन्त्रस्तु सर्वाघौघविनाशकः दैनंदिनं

च दुष्कृत्यंपक्षमासर्तुवर्षजं। सर्वं हरतिनिःशेषं तूलाचलमिवानलः ब्रह्महत्यासहस्राणिह्युपपातकजान्यपि। सर्वाण्यपिप्रणश्यंति राममन्त्रानुकीर्त्तनादि " त्यगस्त्यसंहिता वचनात् " षडक्षरोवह्नि पूर्वस्तारकस्त्वभिधीयते महापातकिनांपापदहनेदहनोपम " इतिब्रह्मसंहितोक्तेः श्रीरामेतिपरंजाप्यं तारकंब्रह्मसंज्ञिकं ब्रह्महत्यादिपापघ्नमितिवेदविदोविदुरितिसनत्कुमारसंहितोक्तेः षड्वर्णोभुक्तिमुक्तिद" इतिब्रह्मयामलोक्तेः "येयेप्रयोगास्तंत्रेषुतैस्तैर्यत्साध्यतेफलं तत्सर्वंसिध्यतिक्षिप्रंरामनाम्नैवकीर्त्तनादिति" रुद्रयामलोक्तेः विश्वरूपस्यतेरामविश्वेशब्दाहिवाचकाः तथापिरामनामेदं विश्वेषांबीजमक्षयमिति सहस्रनामतातुल्यंरामनामवरानने" इति च "शृणुनामानिवक्ष्यामिरामस्याद्भुतकर्मणः लौकिकावैदिकाः शब्दायेकेचित्संतिपार्वति नामानिरामचन्द्रस्यसहस्रंतेषुचाधिकं तादृङ्नामसहस्रैस्तुरामनामसमंमतं विष्णोरेकैकनामैवसर्ववेदाधिकंमतं तादृङ्नामसहस्रैश्चरामनामसमं मतं जपतः सर्ववेदांश्चसर्वमंत्रांश्चपार्वति तस्मात्कोटिगुणं पुण्यं रामनाम्नैवलभ्यते इत्यादिपद्मपुराणोक्तेश्चेत्याद्याभ्यश्चतत्तत्स्मृतिभ्यः नाम्नोप्यशेषाभीष्टप्रदत्वसर्वपापविनाशकत्वंमोक्षप्रत्वंचज्ञेयं "श्रीरामरामेतिजनायेजपंतिचसर्वदातेषां भुक्तिश्चमुक्तिश्चभविष्यतिनसंशयः द्विजोवाराक्षसोवापिपापीवाधार्मिकोपिवा रामरामेतियोवक्तिसमुक्तोनात्रसंशयः अत्र-

नाम्नः सर्वदाजपविधानंपूर्वोक्ताभि प्रायकंमुक्तिस्तुतत्सकृत्स्म-
रणादेवेत्याह "प्राणप्रयाणसमयेयस्तुनामसकृत्स्मरेत् सभि-
त्वामंडलंभानोः परंपदमवाप्नुयात्" इतियातुधृतमृगशरीरस्य-
भरतस्यान्तकाले भगवन्नामस्मरणेपि देहांतरप्राप्तिः श्रूयते-
पुराणादौ साप्यनभ्युपगतप्रारब्धकर्म्मविशेषादुपपद्यते अतोन-
नाममहत्वापघातिका स्वीकृतंहिपूर्वाचार्य्यैरभ्युपगतानभ्युप-
गतभेदेनेप्रारब्धस्यद्वैविध्यं तदपिभोगैकविनाश्यमनन्यशरणा-
गतव्यतिरिक्तस्येति ततोभोगावसानेनतस्यापिमोक्षः अत्र-
अन्तेमांप्राप्नुवंतिते इतिश्रुतिः तत्प्राप्तेरन्यथानुपपत्तेर्मांप्राप्नु-
वंतीत्यस्यमत्स्वरूपंनिर्विशेषं प्राप्नुवंतीत्यर्थकल्पनेनतेनसहते-
षांमुख्यमैक्यमुपपद्यते घटाद्युपाधिध्वंसेप्रतिबिंबस्यबिंबप्राप्तिव-
दितियेवदंतितेप्रष्टव्याः एकस्याद्वितीयस्यनिरंजनस्यसविशेष-
निर्विशेषभेदेनद्वैविध्यंकथमुपपद्यते इतिसर्वगंधःसर्वरसः सत्य-
कामः सत्यसंकल्पः सहस्रशीर्षाः पुरुषः सहस्राक्षःसहस्रपात्
ब्राह्मणोस्यमुखमासीत्वाहूराजन्यः कृतः निःकलंनिःक्रियंशां-
तंनिरवद्यंनिरंजनंयदरूपमनामयं अचक्षुरश्रोत्रमगंधमस्पर्शमि"
त्याद्यानांद्विविधश्रुतीनामन्यथानुपपद्यमानत्वात् तत्प्रतिपाद्य-
स्यब्रह्मणः सविशेषनिर्विशेषभेदेनद्वैविध्यंकल्प्यते इतिचेत्तर्हि
निरंजनेनिरवद्येअविद्याप्रत्यनीकेसदैकरसे तस्मिन्मायासंबंधः
कथमुपपद्यतेयेनतत्रसोपाधिकत्वंकल्प्यते किमाकाशवदऽव-
च्छेदकघटादिवत् मायानवच्छिन्नंस्वविजातीयादिशून्यंब्रह्ममध्य-

तएकदेशतोवा ऽवच्छिद्यकेनापियुक्तिविशेषेणतं साकारंकरोति मनुष्यादिकमिववहस्तपादादि रूपेणस्वयमेवसंश्लिष्यकेनापि युक्त्यंतरेणवातंसाकारंकरोति निर्गुणस्यतस्यज्ञानमावृत्यगुणांतरसंश्लेषेणतंसगुणंकरोतिवेति तवहार्दोभिप्रायः अस्तिकश्चिद्विशेषांतरोवा प्रथमपक्षेतस्याः ब्रह्मणोपिनियंतृत्वात्सैवोपास्यतांज्ञायतांच किंब्रह्मोपासनयातज्ज्ञानेनवा तस्यपराधीनत्वात् यदितुनिरंजनत्वादिश्रुतिविरोधान्नमायायास्तत्स्व रूपेणसंबंधः किंतुसूर्य्यावरकेमेघेसूर्य्यसंश्लेषदर्शनमात्रवत् दूरतः स्थितस्यापिब्रह्मणोमायासंश्लिष्टवज्ज्ञानं तस्यसोपाधिवत्वमित्युच्यते तर्हिसूर्य्यस्यतत्संश्लेषदर्शनकालेपिमेघसंस्पर्शाभाववत् ब्रह्मस्वरूपेणमायासंबंधाभावोपपत्तेः सूर्य्यस्यैकरसत्ववतब्रह्मणोपिसदैकरसत्वापपत्तेर्नतस्यसोपाधिकत्व निरुपाधिकत्वभेदेनद्विविधाकल्पनमुपपद्यते "निष्कलंनिः क्रियंशांतं निरवद्यंनिरंजनं आत्मेश्वरंपतिंविश्वस्य नतस्यकश्चिज्जनिता नचाधिपः प्रधानक्षेत्रज्ञपतिर्गुणेशः" इत्यादिश्रुतिविरोधाच्च तस्मान्निरंजनत्वनिर्वद्यत्वादिविषयकश्रुत्यनुरोधाद्ब्रह्मणः सदैकरसत्वोपपत्तेः "तत्रचएषआत्मापहतविजरोविमृत्युर्विशोकोविजिघित्सोविपासोसत्यकामः सत्यसंकल्प इत्यैकयैवश्रुत्यापाप्मत्वादीन् हेयगुणान्प्रतिषिध्यसत्यकामत्वादि दिव्यगुणविधानवत् "अचक्षुरश्रोत्रमगंधमरसमस्पर्शमस्थूलमनणु" इत्याद्याभिरपिहेयान्चक्षुराद्यवयववान् गंधादींश्चप्रतिषिध्य" सर्व-

गंधः सर्वरसः नहष्टुर्द्दष्टेर्विपरिलोपोविद्यते सवेत्तिविश्वंनहि-
तस्यवेत्ता परास्यशक्तिर्विविधैवश्रूयतेस्वभाविकी ज्ञानवल-
क्रियाच द्विभुजःकुंडलीरत्नमालीधीरोधनुर्द्धरः अर्द्धमात्रात्म-
कोरामोब्रह्मानंदैकविग्रहः परंज्योतिः स्वरुपिणामि" त्येवमा-
द्याभिर्दिव्यरूपत्वदिव्यगुणत्वादिविधानतोपपत्तेः सएवनिर्गु-
णसगुणश्च श्रुतिप्रतिपाद्यत्वेनाशेषवेदवेद्यः शिवविरंच्यादि-
पूज्यपादः परात्परतरः सएवपरंब्रह्मादिशव्दवाच्यः स्वतंत्रमोक्ष-
प्रदइति तस्यैवप्राप्तिंवेदाः वदंति "एषसंप्रसादः अस्मात्शरी-
रात्समुत्थायपरंज्योतिरुपसंपद्यस्वेनरूपेणाभिनिष्पद्यते" येना-
सावमृतीभूत्वामोक्षीभवति सोऽविमुक्तात्माश्रितोभवतिसोमृत-
त्वंचगच्छति "समुक्तोभविताशिवअंतेमांप्राप्नुवंतित इत्येव-
माद्याः तस्मादेतावतापरिश्रमेणजगदीश्वरेण शिवेनापितार-
कानुष्ठानादिभिर्यंप्रसाद्य यस्मादविमुक्तमृताशेषजंतुमुक्तिर्या-
चिताश्चप्रसन्नः सन्तद्याचितंदत्वासर्वदेशनिवासिजीवविमो-
क्षायसंप्रदायद्वयं प्रवर्त्तयामास यश्चसंप्रदायपरंपरयाप्राप्त-
षडक्षराणांस्वभक्तानां तद्देहांतेस्वप्राप्तिंप्रतिजानीतेस्म "मु-
क्तामांप्राप्नुवंतिते इतितस्यसविशेषस्यश्रीरामस्यप्राप्तिवचन-
मन्यथानुपपद्यमानं तत्सारूप्यादिविशिष्ठंतत्सायुज्यमुपपादयति
श्रीरामचन्द्रदिव्यमंगल विग्रहंतच्छरीरत्वेनतदविनाभूतमात्मा-
नंच सदाध्यायतोदेहान्ते तत्सारूप्यादिविशिष्ठतत्सायुज्यम-
स्यैवोपपद्यते नहितद्रूपंध्यायतोरूपांतरत्वं नचतत्सालोक्यंवि-

नातत्सामीप्यंनच तत्सामीप्यंविनातदातत्सहवासः नचतत्स-
हवासंविनातत्सार्ष्टिचं नचसार्ष्ट्यंविनातत्समानभोगवत्वंचोप-
पद्यते इत्येवं तत्सायुज्यंप्राप्तस्य तन्नांतरीकतयैव तत्सालोक्या
द्युपपत्तेः तापनीयश्रुत्युक्तमार्गानुगामिनावश्यं श्रीरामसायुज्यप्रा
प्तिकामानांतद्भक्तानां पंचधापिमुक्तिःसुलभेति "सदारामोहमि-
त्येतदित्यादि" तापिनीयश्रुतिवलादवगम्यते इत्यवधेयंसुम-
तिभिः सायुज्यं नामदेहछायेवतदविना भावेनसर्वदातत्साह-
चर्य्येण तत्समानभोगत्वमित्युपपादितंपूर्वमेव ।

**श्रीरामचन्द्रेणोक्तंयोविमुक्तंपश्यति । सजन्मा-न्तरितान्दोषान्वारयतितान्पापान्नाशयतीति॥**

**॥ इति चतुर्थ कंडिका ॥**

कंडिकान्ते वरणायांनाश्यांमध्ये प्रतिष्ठितमित्युक्तं
पुनरूपक्षिपतितन्निर्वचनरूपेण श्रीरामचन्द्रेणस्वकृपयायदुक्त-
मविमुक्तंयः पश्यतिज्ञानेनचक्षुषाविजानातिसाक्षात्करोतिस
जन्मान्तरशतोपार्जितान् इन्द्रियकृतान्दोषान् वारयति तत्त-
द्विषयेभ्य इन्द्रियानवरुणद्धि तथा तदुपार्जितदोषसंपादिता न
विहिताचरणरूपान् प्रवलतरान् पापान् नाशयति इतिशब्दः
कंडिका समाप्त्यर्थः ।

॥ इति चतुर्थ कण्डिका ॥

अथयत्पूर्वंश्रीरामचन्द्रस्य सर्वावतारित्वंयच्चसर्वशब्द-वाच्यत्वंनिर्दिष्टं। उपासकानांकार्य्यार्थं ब्रह्मणोरूपकल्पनेति "सर्ववाच्यस्यवाचक" इतितदेवंस्फुटयितुं पंचमकंडिकारंभः तत्रादौ "मन्वंतरसहस्रैस्तु जपहोमार्चनादिभिरि" त्युक्ता-दिपदसंग्रहीततत्स्तुतिमंत्रविषयकप्रश्नः अथेति ॥

**अथहैनंभरद्वाजोयाज्ञवल्क्यमुवाचाथ-कैर्मंत्रैस्तुतःश्रीरामःप्रीतोभवतिस्वात्मानंदर्शय-तितन्नोब्रूहिभगवन्निति ॥१॥**

यैर्मंत्रैः स्तुतःश्रीरामःप्रीतोभवतिस्वात्मानंचदर्शयतिते-केमंत्रास्तान्नोब्रूहीतिवक्तव्येतद्ब्रूहीतिछांद संशिष्टंस्पष्टंअथश्री-रामोपदिष्टोगंतापिनीयार्थोब्रह्मायथा सर्वरूपिणंसर्वशब्दवाच्यं श्रीरामंनिश्चित्यतथैवतंमनसास्मरन्नमस्कारपूर्वकं तुष्टावेत्यु-क्तवान्याज्ञवल्क्यइतिश्रुतिः

**सहोवाचयाज्ञवल्क्यः श्रीरामेणैवाशिक्षितो । ब्रह्मापुनरेतयागाथया नमस्करोति ॥२॥**

पुनरित्युपदेशारंभेकृतं नमस्कारंसूचयतिशिष्टंस्पष्टं अथतत्पृष्टान्मंत्रान्विवदन्याज्ञवल्क्य आदौस्तुतिप्रकारमाह-विश्वाधारमिति

विश्वाधारंमहाविष्णुंनारायणमनामयंपूर्णानं
दैकविग्रहंपरंज्योतिःस्वरूपिणांमनसासंस्मरन्ब्र-
ह्मातुष्टावपरमेश्वरं ॥३॥

अत्रश्रीरामस्यमहाविष्णवादिकार्य्यत्वमभिप्रेतं तत्कार-
णत्वंवा नप्रथमः ब्रह्माविष्णुनारायणवासुदेवमत्स्यकूर्म्मादी-
नामनेकेषांचेतनानां युगपच्चिद्रूपैककार्य्योत्पादनासंभवात् ते-
षांयुगपत्पिंडीभूयैकरूपेणावस्थानानुपपत्तेरित्यर्थः नापिक्रमेण-
प्रत्येकस्यमहाविष्णवादेतत्कारणत्वमुपपद्यते विनिगमनाविर-
हेणसहपठितेषुवहुष्वेकस्यापितत्कारणत्वानुपपत्तेः विष्णुहर्य्या-
दीनांपुराणादिश्रुतमूलकारणत्वस्यतद्वचनविरोधेनश्रुतिविरोधे-
नचतापनीयोपक्रमेनिरस्तत्वात्अतोद्वितीयःपक्षः "तत्रमणिर्य-
थाविभागेननीलपीतादिभिर्युतः रूपभेदमवाप्नोतिध्यानभेदा-
त्तथाच्युत इतिस्मृतःयुगपदनेकरूपधारीभवितुमर्हतिविलक्षण-
शक्तिमत्वात् सौभर्य्यादिवदित्यनुमानसहकृतायाः ब्रह्मणो-
रूपकल्पनेत्यादिश्रुतेश्चैकस्यानेकरूपधारित्वोपपत्ते रनेकेषां-
चेतनानामकेरूपधारित्वस्मृतेरनुपपत्तेरश्रुतेश्चोपपद्यते एकस्य-
श्रीरामस्यप्रयोजनवशाद्वहुरूपधारित्वं तेनैवद्विभुजचर्तुभुजा-
दिसहस्रांतभुजवत्त्वाद्विग्रहवत्वेन श्रीरामस्यसर्ववाच्यस्येति
श्रौतंविश्वेशव्दाहिवाचकाइतिस्मार्तंचविष्णुनारायणादिशव्दा
वाच्यत्वमप्युपपद्यते विष्णुमहाविष्णुवासुदेवनारायणहरिमहे-

श्वरादिशब्दानांतु व्यापकत्वभक्तदुःखहारित्वसर्वनियंतृत्वा-
दिगुणविशिष्टवाचकानां तत्तद्गुणद्वारापितद्वाचकत्वमुपपद्यते-
श्रीरामव्याप्यभूतदेवासुरमनुष्यादिवाचकानां तुतत्तद्वाच्यद्वा-
रासर्वशरीरिणस्तस्यवाचकत्वमुपपद्यते शरीरवाचकस्यतन्नियाा-
मकजीववाचकत्ववदित्येतदभिप्रेत्यैकस्यैव श्रीरामस्यसर्वरूपि-
त्वंदर्शयंतिश्रुतयः विश्वाधारमित्यारभ्यातापिनीयसमाप्तेःवि-
श्वाधारमिति विश्वाधारत्वहेतुशक्तिमंतमित्यर्थः महाविष्णुं-
महदितिविशेषणं आकाशद्यतिव्याप्तिनिवृत्यर्थं तथाचव्याप-
कत्वेनप्रसिद्धानामाकाशादीनामपिव्यापकमित्यर्थः अयंपरमे-
श्वरस्यमहानगुणः सर्वव्यापकस्यैकस्यसर्वनियंतृत्वेन सर्व-
कारणत्वोपपत्ते अतएव तापनीयोपक्रमे चिन्मयेस्मिन्महावि-
ष्णाविति" सर्वव्यापकत्वद्योतिनामहाविष्णुपदेनचिन्मयवस्तु-
विशेषितं चतुर्भुजपरस्तुविष्णुशब्दोनयौगिकः किंतुतत्ररूढयौ-
गिकोभयरूपस्तस्यश्रीरामस्यैवापररूपत्वंवाल्मीकीयेस्मर्यतेतत-
स्त्वमसिदुर्द्धर्षात्तस्मात्भावात्सनातनात् रक्षांविधास्यन्भूतानां
विष्णुत्वमुपजग्मिवानिति अथवाआकाशादीनांव्यापकत्वेन
प्रसिद्धानामपिजडत्वात् जन्यत्वाच्च चेतानानांस्वकारणस्यचा-
धारत्वानुपपत्तेः विश्वमध्यपातित्वाच्च विश्वाधारपदेनैवतद्व्या-
वृत्तेर्महदितिविशेषणं नत्वाकाशादिव्यावृत्यर्थं किंतुता-
पिनीयोपक्रमदृष्टविष्णुपदविशेषणमहच्छब्दवदत्रापिमहदिति-
विशेषणं श्रीरामस्यविष्णवादिव्यापकत्वोपलक्षितत्कारण-

त्वेन महाकारणत्वान्मूलकारणत्वद्योतनार्थं एवंतस्यमूलका-
रणत्वंनिर्दिश्याथमहदादितत्वांतःप्रविष्टस्यक्षीराब्धिशायिनश्च
जगतकारणत्वप्रसिद्धेनरूपेण तस्यजगदवांतरकारणत्वंनि-
र्दिशति नारायणमिति महदाद्यंतर्यामित्वेनाप्सुशयनाच्च त्व-
मेवनारायणशब्दावाच्यइत्यर्थः नराज्जतातितत्वानिनाराणी
तिविदुर्बुधाः तानितस्यायनंयस्मात्तेननारायणःस्मृतः इतिस्मृ-
तेः आपोनाराइतिप्रोक्ताआपोवैनरसूनवः अयनंतस्यता.पूर्वं
तेननारायणस्मृतः" इतिस्मृतेवाल्मीकीयेतु महार्णवेशयानो-
प्सुमांत्वपूर्वमजीजन" इतिश्रीरामंप्रतिब्रह्मणोक्तंतस्मात्प्रदर्शि-
तवाक्यानामेकवाक्यत्वात श्रीरामस्यतद्रूपधारित्वात् नारा-
यणशब्दवाच्यत्वमवगम्यते अत्रेदंबोध्यं "नराज्जातानितत्वा-
नि" आपोवैनरसूनव" इत्याभ्यांनरशब्दवाच्यएवस्वस्माज्जा-
तेषुमहदादिषुतत्वेषुअप्सुआयतनकारणान्नारायणेतिसंज्ञाम-
वाप्त इति बोध्यते महर्षि वचनात्तु श्रीराम एव महदाद्यंतर्य्या
मि त्वेनाप्सुशयनाच्च नारायणेति सज्ञांप्राप्प इत्येवगम्यते
तयोर्द्वयोः परमकारणत्वासंभवात प्रदर्शित वाक्यानांत्वे कार्थ
बोधकत्वेनैकवाक्यत्वात् सर्वसाखाप्रत्ययन्यायेनकारण वाक्य
नामेकस्मिन्नपर्य्यवसानस्ययुक्तत्वाच्च सामान्यशब्दानां विशेष
शब्दवाच्ये पर्यवसानस्ययुक्तत्वाच्च सामान्यशब्दत्वेनावगतो
नरशब्दोविशेषशब्दवाच्ये श्रीरामचन्द्रेपर्य्यवस्य तस्यैवनारा-
यणकारणत्वं बोधयतीत्यवगम्यते यद्वितुनारायणस्यनरशब्द

वाच्योत्तरावस्थात्वेनउभयो रेकशब्दवाच्यत्वेनसामान्यभूतंनरश-
ब्दविशेषभूतनारायणशब्दवाच्येपर्य्यवसानीकृत्यनरशब्दवाच्या
निष्ठत्वंकारणनारायणेआरोप्यतस्यसर्वकारणत्वमुपपाद्यतइत्यु-
च्यतेतदानारायणविग्रहतःपृथक् तयानरविग्रहस्यापिनारायण-
विग्रहैकविग्रहत्वेन क्षीराब्धिशायित्वमात्रतयावस्थानात् तस्य-
तुमहीणवेशयानोप्स्विवतिश्रीरामकार्य्यत्वोपपत्तेः नारायणाऽभेद
कारित्वतत्कारणे नरशब्दवाच्येति श्रीरामकार्य्यत्वापत्तिर्दुवारा
यदितुतयोरुभयो रेकशब्दवाच्यत्वे नैकस्यै वोभयावस्थावत्वेन
च नारायणशब्दं नरशब्दवाच्येपर्य्यवसानीकृतं नारायण-
शब्दवाच्यस्य नरशब्दवाच्यैकविग्रहद्वारानारायणस्य सर्व-
कारणत्वं प्रतिपाद्यतइत्युच्यते तदापितन्नोपपद्यते विशेषशब्द-
त्वेननिश्चितस्यनारायणशब्दस्य सामान्यशब्दत्वेनावगतस्य
नरशब्दस्यवाच्येपर्य्यवसानत्वानुपपत्तेः श्रीरामचन्द्रविग्रहायुध-
पार्षदधामादिविशेषश्रवणात् नरशब्दवाच्यस्य विग्रहाद्यश्रव-
णात् द्विभुजलक्ष्मणाग्रजजानकीपतिपरस्य रामशब्दस्य
विशेषशब्दत्वात् नरशब्दस्यतुवाच्य विशेषनिश्चयेनसामान्य-
शब्दत्वात् "छागोवामंत्रवर्णादिति" वतुसतिविशेषोपस्था-
पके सामान्यशब्दस्य विशेषेपर्य्यवसानस्ययुक्तत्वाच्च तद्यथा
पशुनायजेतेत्यत्र पशुत्वंनयातिः किंतु लोमवल्लांगूलादि
मत्वंपशुत्वं तस्यगर्दभादिसाधारणयात्तस्याप्यालभनेप्राप्ते
"छागोवामंत्रवर्णादिति" विशेषोपस्थाके न छागशब्देन-

यथातत्रत्यः पशुः छागएवेतिनिश्चीयते तथा प्रकृतेपिराम-
शब्दस्यविग्रहविशेषबोधकत्वात् "महार्णवेशयानोप्सुमांत्वं-
पूर्वमजीजन" इति श्रीरामविग्रहविशेषंप्रतिब्रह्मवचनेन
तस्यैवनारायणकारणत्वावगमाच्चसामान्यतोनारायणकारणत्वेन
निर्दिष्टेनरशब्दवाच्ये श्रीरामचन्द्रएवनिश्चयात् कारणवाक्य-
गत नरशब्दपर्याय रामशब्दवाच्यस्य चोत्तरावस्थायां नारा-
यणसंज्ञकत्वोपपत्तेः सिद्धंतस्यनारायणसंज्ञकत्वमिति एवंना-
रायणत्वेनमहदाद्यंतः प्रविष्टत्वात् जगद्रूपत्वाच्च जगत्संपर्क-
कृतविकारापत्तिं श्रीरामेवारयति अनामयमिति आमयोरोग-
स्तेनतत्कारणमविद्यालक्ष्यते तत्संबंधरहितमित्यर्थः पूर्णानंदै-
कविग्रहमितिपूर्णा मितिविशेषणेनकादाचित्कदुःखित्वंकेना
प्यंशेन दुःखप्रवेशत्वं चेतिनिरस्तं पूर्णोयदानंदं तदेवैकंवि-
ग्रहोस्यसतथोक्तस्तंपूर्णानंदैकविग्रहं अत्रआनंदप्राधान्यात्त-
द्विग्रहस्यानंदरूपत्वमुक्तंभवति पूर्णानन्दैकविज्ञानमितिपाठे-
पिसएवार्थः एवंतद्विग्रहस्यानंदमयत्वंप्रदर्श्याथ तत्स्वरूपप्रका-
शत्वमाह परंज्योतिः रूपिणमिति अत्रपरंज्योतिः शब्दश्चिन्मया-
शब्दावेकार्थौ "चिन्मयेऽस्मिन्महाविष्णावि" त्युपक्रमात्
परंज्योतिषामुत्कृष्टंयज्ज्योतिस्तदेवस्वरूपमस्यास्तीति सतथो-
क्तस्तंपरंज्योतिः स्वरूपिणमिति श्रीरामचन्द्रस्य "एषः संप्र-
सादोस्माच्छरीरात्समुत्थाय परंज्योतिः रूपसंपद्यस्वेन रूपेणा-
भिनिष्पद्यते" इतिश्रुत्युक्तंमुक्तजीव प्राप्यत्वं दर्शितं भवति

मनसासंस्मरन्निति श्रीरामेणयथाशिक्षितोब्रह्मा तथासर्वरूपिणं
रामं तत्तदाकृतिभेदेन दृश्यमानमेकमेवसर्वशब्दवाच्यं संस्म-
रन् सम्यक् स्मरन् श्रीरामस्य सर्वेषां भगवद्विग्रहाणां च किं
चिद्भेदमपश्यन्नित्यर्थः श्रीरामस्यैवतत्तदाकृतिभेदेनवर्त्तमानस्य
विष्णुनारायण वासुदेवादि शब्दवाच्यत्वात् परमेश्वरमिति
ब्रह्मादीनामपि नियंतारं यद्वाईश्वरत्वावच्छिन्न नियंतृत्वात्परमे-
श्वरत्वं राघवस्योक्तं तत्रब्रह्मादिनियंतृत्वं तत्स्वामित्वात् स्वा-
वतारेभ्यः परत्वं स्वेच्छयैव तद्रूपाविष्करणाच्छ्रीरामस्योपपद्यते
अत्रविश्वाधारादिपदा निवक्ष्यमान मन्त्रोक्तब्रह्मपरब्रह्मवासुदेव
पुरुषोत्तमादिपदोपलक्षणानि तत्रपरंब्रह्मादिपदानां श्रीरामरूप-
त्वविधानात् श्लोकान्वयस्तु विश्वाधारं महाविष्णवादिरूपिणं
रामं मनसासंस्मरन् तुष्टावेतीदृशः वक्ष्यमाणमन्त्रैः श्रीरामस्या
त्रापि विशेष्यत्वेननान्वययोग्यात् विश्वाधारं महाविष्णुमित्या-
दिवाक्यस्यस्तुतिमन्त्रैः सहैकवाक्यतायोग्याच्च यथास्मृतस्यैव
स्तूयमानत्वेनस्तुतिमन्त्रोक्तानां स्मरणवाक्यांतर्गतत्वोपपत्तेश्च
सामान्यशब्दानां विश्वाधारादीनां मध्येऽन्यतरस्य विशेष्यपदो
क्तौविनिगमनाविरहाच्च विश्वाधारादीनां सर्वेषां स्मरनपदा
न्वितत्वेन विशेषण पदत्वोपपत्तेश्च परमेश्वर पदस्य
तु स्मरणात्मक विशेषणक्रियान्वयादृष्टे. तुष्टावेतिविशेषक्रिया
न्वयित्वदर्शनाच्च विशेश पदत्वेवक्तव्येपि तस्यसामान्यशब्द-
त्वेन विशेष्यत्वानुपपत्ते श्चान्यत्रदृष्टविशेष्यत्वस्य श्रीरामपद

स्यात्रापिविशेष्यत्वार्थमध्याहारतोपपत्तेः अथश्रीरामस्यानिश्चित-तवाच्य विशेषाणां ब्रह्मपरं ब्रह्मपरंपुरुष परमात्मादि सामान्य शब्दानां साक्षाद्वाच्यत्वेन प्रसिद्धविग्रहवाचकानां विष्णुनारा-यणमत्स्यकूर्म्मवाराहादि शब्दानां तुसाक्षात्ततदाकृतिद्वारावा-च्यत्वेन तच्छेषभूतयोश्चिदचितोस्तुतद्व्याप्यत्वेन तदविना-भूतत्वात् तदभिन्नसत्ताकत्वसिद्धेरतत्तत्प्रकारत्वेन सर्वप्रकारि-णः श्रीरामस्यतत्तच्छब्दवाच्यत्वेन च सर्वशब्दवाच्यत्वंस्फोट-यंस्तं स्तौतिब्रह्मा ॐ यो वै श्रीरामचन्द्रइत्यादिभिः

**ओं यो वै श्रीरामचन्द्रः स भगवानद्वै-तपरमात्मानन्दात्मायत्परंब्रह्म भूर्भवःस्वस्तस्मै वै नमोनमः ॥ १ ॥**

यो वै प्रसिद्धः सर्वशास्त्रेषु श्रीरामचन्द्रः सभगवान् ज्ञानशक्तिबलैश्वर्य्यतेजोवीर्य्याद्यशेष भगशब्दवोध्यगुणवान् " सर्वगुणोपेतः कौशिल्यानन्दवर्द्धनः " इति स्मृतेः अद्वैतं स्वसामान्यधिकरहितं अत एव परमं सर्वोत्कृष्टं केवलंवादुः-खाप्रतियोगियदानन्दं तदेवात्मा शरीरं यस्य स तथोक्तः " आत्मादेहेधृतौ जीवे स्वभावे परमात्मनीति " स्मरणात् पूर्णानन्दैकविग्रहमितिनं तरंश्रुतेश्चयः "सच्चिदनंदाद्वैतैकर-सात्मेति" स्वरूपपरमंत्ररूपसत्वाच्च यत्परंब्रह्मेतियः परब्रह्मश-ब्दवाच्यइत्यर्थः अत्रयत्परंब्रह्मयेमत्स्यकूर्म्मावताराया विद्याया-

सरस्वतीतियच्छब्दस्यनपुंसकत्ववहुवचनां तत्वस्त्रीत्वनिर्देशो-
विधेय परब्रह्मादिलिंगापेक्षयाद्दष्टव्यः छांदोग्य "अन्नमशितं
त्रिधाविधीयते"तस्यःस्थविष्टोधातुस्तत्पुरीषंभवति"एवंपीतानाम
पांयः स्थविष्टोधातुस्तन्मूत्रं एवमशितस्यतेजसोयःस्थविष्टोधा-
तुस्तदस्थि भवति योमध्यमःसामज्जायोणिष्टःसावागित्यत्र
यः स्थविष्टोधातुरित्यस्य वागादिकारणभूतानांतेजोऽवन्नानामे-
कदेशपरस्ययच्छब्दस्यपुल्लिङ्गत्वेपि तत्परस्यैवतच्छब्दस्यवा-
गादि लिंगापेक्षितस्त्रीत्वनपुंसकात्वदर्शनात् भूर्भुवःस्वरिति
लोकनिर्देशेनश्रीरामचन्द्रस्यसर्वानुस्यूतत्वेन सर्वकारणत्वोप-
पत्तेः भूतदेवतात्रयरसभूतवेदत्रयरसरूपभुर्भुवःस्वरूपत्वंदर्शितं-
भवति तदेवस्फुटयिष्यतिद्वितीयादिमंत्रैः अथवालोकादिरस-
रूपभूर्भुवः स्वरूपत्वेनश्रीरामचन्द्रस्यसर्वलोकस्वामित्वं सर्व-
देवोपास्यत्वं सर्ववेदप्रतिपाद्यत्वंचदर्शितंभवति व्याहृतित्रयस्य
लोकादिरसत्वं तुछांदोग्येचतुर्थप्रपाटकेश्रूयते प्रजापतिर्लोकान-
भ्यतपत्तेषांतप्यमानानांरसान्प्राबृहदग्निं पृथिव्यावायुमंतरिक्षा-
दादित्यांदिवः सएतास्तिस्रोदेवताअभ्यतपतासांतप्यमानानां
रसानप्राबृहद्भूरित्यृग्भ्योभुवइति यजुर्भ्यस्वरितिसामभ्य"इतित-
स्मैवोइति "अर्द्धमात्रात्मकोरामोब्रह्मानंदैकविग्रहः पूर्णानंदैक
विग्रहंपरंज्योतिः स्वरूपिणंअहमोंतत्सत्यत्परंब्रह्मरामचन्द्र"
इत्याद्यासुश्रुतिषु परमानंदविग्रहवत्वेनपरंज्योतिः स्वरूपत्वेन
परब्रह्मशब्दाभिधेयत्वेन चप्रसिद्धायइत्यर्थः अत्रप्रथमवैशब्दः

लोकशास्त्रप्रसिद्धावतारत्वद्योतिकः द्वितीय स्तुब्रह्मणोरूपकल्पने त्यादिश्रुतिप्रसिद्धस्यतत्सर्वकारणत्वस्यद्योतकःलोकेक्वचित्सशास्त्रेचावतारत्वेनप्रसिद्धस्यश्रीरामस्य तावन्मात्रदृष्टेर्निरासपूर्वकं प्रदर्शितश्रुतिबोधितसर्वकारणत्वदार्ढ्याय सभगवानद्वैतपरमानंदात्मा अखंडैकरसात्मा सच्चिदानंदात्मेत्येतैः शब्दैस्तस्य सर्वगुणोपतेत्वेन दिव्यमंगल विग्रहत्वेनाद्वैतैकरसस्वरूपत्वेनच सर्वोत्कृष्टत्वं प्रकाशयत्परब्रह्मयेमत्स्याद्यवताराः यःपरमपुरुषः यःपरमात्मायोनारायणःयःवासुदेवः योमहाविष्णुरित्यादिभिस्तस्य सर्वावतारित्वेनसर्वरूपत्वात् सर्वशब्दवाच्यत्वंस्फुटीकृतं भवतीति तत्तदाकृतिद्वाराश्रीरामचन्द्रस्य परंब्रह्मपरमात्मपरमपुरुषभगवन्महाविष्ण्वादिशब्दवाच्यत्वंतु साक्षादेवमत्स्याद्याकृतिविशेषश्रवणवत् परंब्रह्मपरमात्माद्याकृतिविशेषाश्रवणात् सामान्यशब्दानांसतिविशेषोपस्थापके स्वसमाप्यधिकेविशेषशब्देसन्निहितेविशेषेपर्य्यवसानत्वात् पशुनायजेत्" छागोवामंत्रवर्णा" दित्यादौ "तस्मात्मेतस्यकूर्म्माद्यावतारा"इत्यादिमंत्राणांयः श्रीरामचन्द्रः सभगवान् सएवमत्स्यादिइतीदृशोर्थोबोधव्यःयःपरमःपुरुषःपरमात्माइत्यादिमंत्राणांतु "यःश्रीरामचन्द्रःसभगवान्" सएवपरमपुरुषशब्दवाच्यः स एवपरमात्मादिशब्दवाच्यइतीदृशोर्थोज्ञातव्यइतिविवेकः मंत्रेनमोनम.इतिद्विवचनेननमसोअखंडत्वसखंडत्वभेदेनद्विविधत्वसूचकंतस्मात्षडक्षरमंत्रार्थव्याख्यानेयेर्थाः प्रदर्शितास्तेतत्रापिप्रतिमंत्रेद्रष्ट-

व्या: सर्वत्ररामपदस्यचतुर्थ्याश्चनमोद्वयस्यचदर्शनेनसर्वेषां मंत्राणांषडक्षरार्थबोधकत्वावगमात् एषामर्थांतरपरत्वस्वीकारे तद्विरोधेनाप्रमाण्यत्वापत्तेश्च शिष्टंस्पष्टं १० यथाप्रथम-मंत्रोक्तावाद्यंतौ तथासर्वमंत्रेपुज्ञातव्यौ "यश्चाखंडैकरसात्मा. भूर्भुवः ॥२॥ अनेनतस्यखंडत्वोक्त्या तत्स्वरूपावतारविषयि-कांशत्वोक्तिर्निराकृता

**ओं यो वै० यच्च यो ब्रह्मानन्दामृतंभू० ३**
**ओं यो वै०यत्तारकं ब्रह्मभू० ॥ ४ ॥**

आभ्यांतस्यतत्स्वरूपावताराणां चसदासुखरूपत्वमस्पृष्ट संसारधर्म्मत्वं स्वभक्तसंसृति तारकत्वं तारक तद्वाच्य राम-योर भेदत्वं चोक्तं भवति ४ ॥

**ओं यो वै० यो ब्रह्माविष्णुरीश्वरोयः सर्व देवात्माभू० ॥ ५ ॥**
**ओं यो वै० ये सर्वे वेदासांगाः सशाखाः सपुराणाःभू० ॥ ६ ॥**
**ओं यो वै० योजीवात्माभू० ॥ ७ ॥**
**ओं यो वै०यः सर्व भूतांतरात्माभू० ॥८॥**

अन्तरात्मेत्यंतर्य्याम्युच्यते ॥ ८ ॥

**ओंयोवै०योदेवासुरमनुष्यादिभावाःभू०९**

अत्रदेवासुरमनुष्यादीनां चेतनानांप्रकृतेश्च श्रीराम-व्याप्यत्वेन तदविनाभूततया तदभिन्नसत्ताकत्वसिद्धेःतत्समा-नाधिकरण्येन निर्देशःसोपिचराचर विषयकरामरूपत्वदृष्टि-कारितप्राणिमात्रानुकूल्यादि प्रयोजनकः अथवा सदारामोहं मित्यत्रस्वात्मनः श्रीरामाभिन्नसत्ताकत्वेन तत्ररामरूपत्वदृष्टि-विधानवत अत्र सर्वस्य चराचरस्य तद्भिन्नसत्ताकत्वेन सर्वत्र रामरूपत्वदर्शनंविहितंतथाचयेसर्वंचराचरात्मकंजगत्स्वात्मानं च रामरूपेणपश्यंति त एव सम्यक् तदुपासका इति तथैवाह महारामायणे " भूमौजलेनभसिदेवनरासुरेषुभूतेषुदेविसकलेषु चराचरेषु पश्यंति शुद्धमनसाखलु रामरूपंरामस्यतेभुवितले-समुपासकाश्चे " त्यादि ये एवं विधास्तेजीवंतोपिमुक्ता इति स्वयमेवश्रुतिराह "नतेसंसारिणोनूनं रामएवनसंशय" इति९

**ओं यो वै० येमत्स्यकूर्म्माद्यवताराःभू० १०**

अत्रावतारत्वोक्तिः लीलाविभूतौतत्प्राकट्यमात्राभिप्रायका न तु नवीनाकृतिधारणत्व विषया " सर्वेनित्याशास्वताश्च देहा स्तस्यपरात्मन " इतिसर्वेषां भगवद्विग्रहाणांनित्यत्वस्मरणात्

**ओं यो वै० यश्चप्राणोभूः ॥ ११ ॥**

**ओं योवै० योंतःकरणचतुष्टआत्माभूः १२**

**ओं यो वै० यश्चयमोभूः ॥ १३ ॥**

**ओं यो वै० यश्चांतकोभूः ॥ १४ ॥**

ओं यो वै ० येचाष्टौलोकपालाः ॥ ३१ ॥

ओं यो वै ० येचाष्टौवसवः ॥ ३२ ॥

ओं यो वै ० येचैकादशारुद्राः ॥ ३३ ॥

ओं यो वै ० येचद्वादशादित्याः । ३४ ।

ओं यो वै ० यच्चभूतंभव्यंभविष्यत् ।३५।

ओंयोवै० योब्रह्मांडस्यांतर्वहिर्व्याप्नोति-योविराटभू० ॥ ३६ ॥

अनेनमंत्रेणातस्यनारायणत्वंवोध्यते " यच्चकिंचिजगत्यस्मिनदृश्यतेश्रूयतेपिवा अंतर्बहिश्चतत्सर्वंव्याप्यानारायणः स्थितः " इतितत्समानार्थकश्रुत्यंतरेनारायणस्य जगद्बहिरंतर्व्यापित्वश्रुतेः श्रुत्यंतरेविराट्पदस्थाने नारायणपदप्रयोगाच्चोभयोः शब्दयोरेकार्थवाचकत्वमवगम्यते ॥ ३६ ॥

ओंयोवै० योहिरण्यगर्भः ॥३७॥

ओं यो वै ० याप्रकृति ३८

ओं यो वै ० यश्चोंकारः ३९

ओं यो वै ० याश्चतस्रोर्द्धमाः ४०

ओं यो वै ० यःपरमपुरुषः ४१

ओं यो वै ० यश्चमहेश्वरः ४२

ओं यो वै ० यश्चमहादेवः ४३

ओंयोवै० ॐनमोभगवतेवासुदेवाययोमहा-
विष्णुः ॥ ४४ ॥

अत्रैकस्मिन्मंत्रेउभयोः पाठातवासुदेवमहाविष्णुशब्द-
योरेकार्थवाचकत्वमवगम्यते ॥ ४४ ॥

ओंयोवै०यःपरमात्मा ॥ ४५ ॥
ओंयोवै० योविज्ञानात्मा ॥४६॥

अत्रये सर्वेदेवाः ये मत्स्यकूर्म्माद्यवताराः यानिपञ्च-
महाभूतानियाः सप्तव्याहृत्तयः यच्च त्रैलोक्यमित्यादिषु विधे-
यवहुत्वाभिप्रायेण वहुवचनांत यच्छव्दप्रयोगः तथा विधेय
लिंगाभिप्रायेण तस्य क्लीवत्वं स्त्रीलिंगत्वं चोक्तं भवति श्री
रामानुवादेन तस्य तस्य च विधानात न च प्रसिद्धमुद्दिश्या-
प्रसिद्धस्य विधानात विधेयानां ततः पृथक्त्वमुपपद्यते इति
वाच्यं सर्वदासदभिन्नानामेव लोकदृष्ट्यातद्भिन्नत्वेनेव प्रतीय
मानानांतद्पृथक्वोधनेन तद्रूपत्वद्योतनात तदर्थस्तु यो वै श्री
रामचन्द्रः ये च मत्स्यादयः ते सर्वे यः वै प्रसिद्धरामः स एव
न ततो भिन्नास्ते इत्येवमन्वयोदृष्टव्यः अथवायः वैप्रसिद्धःश्री
रामचन्द्रः सभगवान ये मत्स्याद्यवतारास्तेपि सएवएकः सर्व
रूपीतत्तदाकारेणाभास्यते अभिधीयते चमत्स्यकूर्म्मादिनामभिः
नवस्तुतस्तद्भिन्नामत्स्यादयः नापि तत्तनामधेयैस्तद्व्यतिरिक्तो
ऽभिधीयते इत्यर्थः एवं यो वै श्रीरामचन्द्रः स एव यानिपञ्च

महाभूतानि तानि तदविनाभूतानीत्यर्थः एवं यो वै श्रीराम चन्द्रः सभगवान्सा एवयाः सप्तव्याहृतयोनतद्विनाभूताइत्यर्थः एवं यो वै प्रसिद्धः श्रीरामचन्द्रः सभगवान् यच्च त्रैलोक्यं तदपि स एव तदात्मकमेवतदविनाभूतंतदित्यर्थः एवमन्यत्रापि योज्यं परंतुमत्स्यादि तत्स्वरूपावताराणांतात्विकोऽभेदः चिद्चिदोस्तुतदविनाभावतया तदभिन्नत्व सिद्धेस्तदभेदोक्तिरिति विशेषः न चात्रजीवप्रकृत्योस्तेनतात्विकोऽभेदः सामानाधिकरण्यादित्याशंकनीयं निर्विकारेचितीश्वरे विकारित्व जडत्व जीवत्व परतंत्रत्वादि दोषापत्तेः प्रतिविंवविवर्तादिवादानांपूर्वमेवनिरस्तत्वाच्च अथैकेनमन्त्रेणतत्स्वरूपयाथात्म्यं वोधयन्नुपसंहरति ।

**ओंयोवैश्रीरामचन्द्रः सभगवानयःसच्चिदानंदाद्वैतैकरसात्माभूर्भुवःस्वस्तस्मैवैनमोनमः ॥४७॥**

ओं ॐकारवाच्यः यो वै प्रसिद्धः "सीतारामौतन्मयौ चत्रपूज्यौ । अत्ररामोनन्तरूपस्तेजसावह्निनासमः" इत्यादिवाक्येषु स भगवानिति भगशव्दोदितशेष ज्ञानादिगुणवान् सदिति सर्वदा अवाधितस्वरूपत्वं चित्वं स्वप्रकाशपरंज्योतिः स्वरूपत्वं आनन्दत्वेसुखस्वरूपत्वं अद्वैतंस्वसमाभ्यधिकरहितं तेनानुपमेयत्वं "नतत्समश्चाभ्यधिकश्चदृश्यते" न तस्यप्रतिमारितयस्यनाममहद्यशः" इत्यादिश्रुत्यंतरेभ्यः नेदंय "शसेरघु

पतेः सुरयांश्च यात्तलीलात्तनोर्ह्यधिकसाम्यविमुक्तधाम्नः "इति स्मरणाच्च प्रतिमाशब्दः उपमार्थकः गंधर्वराजप्रतिमइतिवत् यात्तागृहीतालीलातनुर्येनसः एकरसत्वमिति न्यूनाधिकराहित्येन निर्विकारत्व सच्चिदादि पदानामेकवद्भावः तथाच सच्चिदानन्दाद्वैतैकरसंयद्वस्तुतदेवात्मा स्वरूपं यस्य स तथा शिष्टमुक्तार्थकं ४७ अथमंत्रस्तुतिफलप्रदर्शयन्मुपसंहरति।

इत्येतैर्ब्रह्मासप्तचत्वारिंशन्मंत्रैर्नित्यंदेवं स्तौति। तस्यस्तुतोदेवः प्रीतोभवतिस्वात्मानंदर्शयतितस्मा द्यएतैर्मंत्रैर्नित्यंदेवंस्तौतिस देवंपश्यतिसोऽमृतत्वं चगच्छतिसोमृतत्वंचगच्छतीति ॥

इत्यथर्वणरहस्येश्रीरामो त्तरतापिनीयोपनिषत्समाप्ता।

श्रीसीतारामार्पणमस्तु॥

सहनाववतुसहनौ भुनक्तुसहवीर्यंकरवावहै तेजस्विनामधीतमस्तु माविद्विषावहै -

ॐ शान्तिः ॐ शान्तिः ॐ शान्तिः।

ब्रह्मवित्‌ब्रह्मवित्सुतस्यनित्यंस्तुतिपरस्यदेवः सर्वावता-रित्वात देवतांतरांतर्यामित्वाच्च देवानामपिदेवः सदेवंपश्यती-तिदेवंश्रीरामंआत्मनिवहिरपिपतत्कृपया साक्षात्पश्यतीत्यर्थः अत्रस्वात्मानंदर्शयतिसदेवंपश्यतीति उहसंहारमंत्रेण सप्तच-त्वारिंशत्‌मंत्रस्तुतिविषयस्य श्रीरामचन्द्रस्य दृष्टिगोचरत्वसूच-नेन तापिनीयश्रुतिप्रतिपाद्यस्यश्रीरामाख्यदेवस्य " द्विभुजः कुंडलीरत्नमालीधीरोधनुर्द्धर " इत्यादिनायत्पूर्वंदर्शितविग्रह-त्वंतस्यतात्विकत्वं ज्ञापितंभवति अन्यथा सदेवंजानीतीत्येवं वक्तव्यत्वात् सअमृतत्वं च गच्छतीतिमोक्षमाप्नोति ग्रंथस-माप्ति दर्शयति इतीति ।

हरिः ॐ तत्सत् ।

इति श्रीहनुमद्गुरुचरणसरोजभृंगेन श्रीपरिदासेनकृतं श्रीरामो-त्तरतापिनीयभाष्यं समाप्तम् शुभमस्तु ॥

